TRIVANDRUM SANSKRIT SERIES

No. CXXXVII.

Śrī Citrodayamañjarī

No. XXVI.

THE

# SKĀNDAŚĀRĪRAKA

with commentary.

EDITED BY

K. SĀMBAŚIVA ŚĀSTRI,

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,

1938.

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १३७.

श्रीचित्रोदयमञ्जरी

ग्रन्थाङ्कः २६.

# स्कान्दशारीरकम् ।

सव्याख्यम् ।

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

तच्च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

कोल्लम्बाब्दाः १११३. क्रैस्ताब्दाः १९३८.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः॥

भास्वद्वर्णमणिः प्रवालमृदुला शुल्बालङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम्॥

के. साम्बशिवशास्त्री.

The publication of this work, Škāndaśārīraka, is a rare ornament to the Śrīcitrodayamañjarī Sanskrit Series since its very existence has not till now been known or even heard of anywhere. Besides, it reflects great credit on the land of Kerala that such a rare and valuable manuscript treasured in the Library of H. H. The Maha Raja of Travancore is being published for the first time. The work is of immense help to one and all in so far as it serves as a sure and safe guide to humanity by expounding measures to enhance their happiness and ward off misfortunes which are foretold with certainty from the various marks noticeable here and there on the human body.

The Science of Astrology is believed to have been first created and then revealed by God Skanda for the benefit of the world at large and the present work which conforms to the principles of that Science is fittingly termed Skāndaśārīrakam, the word स्कान्दं meaning, revealed by God Skanda and शारीरकं, that which aids to the clear understanding of the system of prognostication by the corpoal marks. The work is otherwise styled Rekhāśāstra, as evidenced by the following verse :—

"धर्माधर्मपरीपाको
लेखाभिर्व्यज्यते नृणाम् ।
इति प्रकाशितास्तासां
लक्षणं प्रविविच्यते ॥"

(पृष्ठम् १.)

The results of the good and, evil actions of human beings are indicated in two ways in Astrology, first, by the lustrous planets in the horizon and secondly, by the corporal marks which are the indications of the internal system. The present work belongs to the latter classification. This fact is fully explained in the following passage in the commentary:

"तत्र प्रथमं बाह्यज्योतिर्मयसूर्यादिग्रहरूपेण परिणतस्य सुकृतदुष्कृतांशस्य तत्तदिष्टादिलक्षणं फलं विदधतः सूचयतश्च तारतम्येन स्थितस्य विशेषसिद्धिर्ज्योतिःशास्त्रेण विभज्य पूर्वखण्डे प्रदर्शितास्माभिः । सम्प्रत्याध्यात्मिकज्योतिर्मयरेखादिरूपेण परिणतस्य सुकृतदुष्कृतांशस्य तत्तदिष्टादिलक्षणं फलं तथैव विदधतः सूचयतश्च तारतम्यने स्थितस्य तथैव फलं सूचयतो विशेषसिद्धिरस्मिन् खण्डे ज्योतिश्शास्त्रेण प्रदर्श्यते ।"

(पृ० १).

From the above passage it is also evident that there is a Khaṇḍa preceding the portion in this work which has yet to be searched out, and special attention is being devoted to collect and publish that Khaṇḍa also.

The use of the plural in the word लेखाभिः in the passage

"लेखाशब्दश्चोपलक्षकोऽन्येषामप्यविनाभावसम्बन्धवतां सामान्यतोऽनुभूयमानानां प्रेक्ष्यप्रेक्षकतटस्थचेष्टानां श्वासस्य वर्णस्य च प्रेक्षकगतस्येति द्रष्टव्यम् ।"

(पृ० ३.)

as including also the varieties thereof is thus justified. The prognostication from the actions and positions of the standers-by which also deserve equal importance according to the Science of Astrology is dealt with in detail in the last Adhyāya. This work comprises 8 chapters dealing with the following topics :—

(१) संज्ञा ।
(२) सङ्कीर्णरेखालक्षणम् ।
(३) स्थानानां स्थानविशेषनियतानां रेखाणां लक्ष्मणां च लक्षणम् ।
(४) प्रतिनियतरेखालक्षणम् ।
(५) मुखगतरेखाणां निम्नोन्नतभागानां च लक्षणम् ।
(६) कण्ठादधोङ्गगतानां लक्षणानि फलं च ।
(७) विप्रकीर्णरेखालक्षणम् ।
(८) तटस्थचेष्टादिलक्षणम् ।

There is no internal evidence either in the original or in the commentary disclosing the name of the author or commentator. It is not possible to ascertain whether the orginal and the commentary are the works of a single author or of different persons. But from the following passage in the commentary,

ബാല്ലു=രോഹിണിയുടെ ചുവട്ടിൽ നിന്റു താൻ ഒട്ടുവല്ലത്തു നിന്റുതാൻ ക്രമത്താലെ ധമ്മസ്ഥാനം നോക്കിപ്പോകിന്റ രേഖ.

it may be inferred that the commentator was a native of Kerala well-versed in ancient Malayāḷam literature. The words,

पूर्वखण्डे प्रदर्शितास्माभिः ॥

(पृ० २.)

furnish no additional information except that the preceding Khaṇḍa also has been commented upon in detail by the same commentator. A reference to the Pūrvakhaṇḍa, it is hoped, will furnish more valuable information. I am really gratified in having been able to publish such a rare and useful work.

This edition is based on the following manuscripts: .

1 & 2. Manuscripts of H. H. The Maha Raja's Palace Granthappura.

3. Ms. of Brahmaśrī Brahmadattan Nampūrippād, Kūḍallūr.

4. Ms. of Brahmaśrī Vayskara Mūssu, Kottayam.

5. Ms. of Brahmaśrī Nārāyaṇan Nampūrippād. Māṅkovil Illam, Taḷiyolapparambu, Vaikom.

Of these, th3 first four Mss. are complete while the last is incomplete. The Mss. appear to beab out 300 years old.

Trivandr.m, }
26 9-1113. }

K. SĀMBAŚIVAŚĀSTRĪ.

कज्योतिर्मयरेखादिरूपेण परिणतस्य सुकृतदुष्कृतांशस्य तत्तदिष्टादिलक्षणं फलं तथैव विदधतः सूचयतश्च तारतम्येन स्थितस्य तथैव फलं सूचयतो विशेषसिद्धिरस्मिन् खण्डे ज्योतिःशास्त्रेण प्रदर्श्यते"

(पृ० २.)

अतः पूर्वोऽपि कश्चन खण्डो निबद्धो व्याख्यातश्चेति ज्ञायते, योऽधुनापि प्रतीक्ष्यते सङ्ग्रहणाय प्रकाशनाय च ।

"लेखाशब्दश्चोपलक्षकोऽन्येषामप्यविनाभावसम्बन्धवतां सामान्यतोऽनुभूयमानानां प्रेक्ष्य-प्रेक्षक-तटस्थ-चेष्टानां श्वासस्य वर्णस्य च प्रेक्षकगतस्येति द्रष्टव्यम् ।"

इति विवरणात् प्राचुर्याल्लेखाशब्दस्य बहुवचनस्य चोपादानं श्लोके सङ्गच्छते । तटस्थचेष्टादीनि चाष्टमेऽन्त्येऽध्याये वक्ष्यन्ते ।

अत्र भवन्त्यष्टावध्यायाः । ते च—

१. संज्ञा
२. सङ्कीर्णरेखालक्षणम्
३. स्थानानां स्थानविशेषनियतानां रेखाणां तद्वर्णानां च लक्षणम्
४. प्रतिनियतरेखालक्षणम्
५. मुखगतरेखाणां निम्नोन्नतभागानां च लक्षणम्
६. कण्ठादर्वाग्गतानां लक्षणानि फलं च
७. विप्रकीर्णरेखालक्षणम्
८. तटस्थचेष्टादिलक्षणम्

इति विषयतो विभक्ताः ।

अस्य चैवंमहनीयस्य शास्त्रस्य निबन्धा, व्याख्याता च क इति विज्ञानाय न मनागपि प्रसीदन्त्युपायाः । मूलव्याख्ये किमेकप्रभवे ? उताहो भिन्नप्रभवे ? इत्यपि विवेक्तुमकृतानुग्रहास्तत इतो निमिषामः । परन्तु कतिकतिचित् विवरणे—

ധൂമല=രോഹിണിയുടെ ചുവട്ടിൽ നിൽക്കുന്നവൻ ഒട്ടു വലത്തു നിൽക്കുന്നവൻ ക്രമത്താലെ ധർമ്മസ്ഥാനം നോക്കിപ്പോകുന്ന രേഖ

इति भाषकर्णी कैरलीमाश्रयन् व्याख्याता स्यात् सम्भवेत् कश्चित् केर-

लीयः । 'पूर्वखण्डे प्रदर्शितास्माभिः' (पृ० २.) इति वचनात् पूर्वखण्डस्याप्येभिर्व्याख्या कृतेत्यतो नाधिकं शक्याभ्यूहम् । पूर्वखण्डे तु सम्पादिते तदनुगुणमन्यदन्यच्च विचारणीयमवशिष्यते । सर्वथा सुदुर्लभमिदं शास्त्रं प्रसाध्य धन्यमात्मानं मन्ये । अस्य प्रसाधनावलम्बभूता मातृकाः —

प्रथमे — महोन्नतमहामहिमश्रीमहाराजग्रन्थशालीये । तृतीयतुरीये यथाक्रमं ब्रह्मश्री कूटल्लूर् ब्रह्मदत्तनम्पूरिप्पाड्स्वामिका, कोट्टयं ब्रह्मश्री वयस्करमूस्स्वामिका च । पञ्चमी वैक्कं तलियोलप्परम्पु माङ्कोविलिल्लं ब्रह्मश्रीनारायणस्वामिका च । आस्वन्त्यवर्जं समग्राश्चतस्रः । सर्वा अपि प्रायशिशतवत्सरीपर्युषिताः ।

अनन्तशयनम्
२६-९-१९१.

के. साम्बशिवशास्त्री.

---

| विषयः. | | पृष्ठम्. |
|---|---|---|
| तर्जन्यूर्ध्वपर्वगतायाः कपिलाकृतेः कालहृतो | लक्षणं फलं च | ६० |
| तर्जनीमध्यपर्वण ऊर्ध्वांशे तिर्यक्प्रसृतस्य कृतस्य | ,, | ,, |
| तर्जनीमध्यपर्वणोऽर्वांशे स्थिताया विष्णुगिरो | ,, | ६१ |
| तर्जनीमूलपर्वण्यनेकरेखाभिरुपोद्वलिताया युग्माकृतेः वरिष्ठायाः | ,, | ,, |
| मध्यमामूलपर्वगतायाः स्मृतेः | ,, | ,, |
| स्मृतेरूर्ध्वसंस्थिताया ऊह्याः | ,, | ६२ |
| अङ्गुष्ठमूलस्थायाः कपिलायाः | ,, | ,, |
| अङ्गुष्ठमध्यपर्वस्थायाः कामवल्लिकायाः | ,, | ,, |
| अङ्गुष्ठस्य मूर्धनि स्थितायाः कन्दल्याः | ,, | ६३ |
| केलिकायाः | ,, | ,, |
| अङ्गुष्ठपर्वसन्ध्यंशभूतया रेखया सङ्गताया युक्तायाः | ,, | ,, |
| मध्यमायां रेखान्तरसंयुताया वृत्तिरेखायाः | ,, | ६४ |
| मध्यमाया अन्तराळखण्डार्धमार्गमाश्रित्य तिष्ठन्त्या आश्रयपावन्याः | ,, | ,, |
| कनिष्ठिकामध्यपर्वस्थिताया मेदुरायाः | ,, | ,, |
| कनिष्ठिकामूलपर्वस्थाया रात्रेः | ,, | ६५ |
| कनिष्ठिकोर्ध्वपर्वस्थाया अत्युच्चायाः | ,, | ,, |
| कनिष्ठिकोत्तरांशस्याधःस्थितायाः कमठध्वस्तिकायाः | ,, | ,, |
| कनिष्ठिकाया उपरि बन्धनीश्लेषेण यवाकृतिमुपगताया आमलकायाः | ,, | ६६ |

| विषयः. | | पृष्ठम्. |
|---|---|---|
| तत्रैव धवळाकारतया स्थितायाः पाणिहृतेः लक्षणं फलं च | | ७२ |
| त्रिकोणाकारेण वर्णविन्यासेन स्थितायाः कोट्याः | ,, | ,, |
| कपोलतलयोरेकत्र वा स्थितस्यात्रोटनस्य | ,, | ७२, ७३ |
| कपोलतः चिबुकं गच्छन्त्या लम्बिन्याः | ,, | ७३ |
| चिबुकतः कपोलयोरूर्ध्वमुखं गच्छन्त्या ऊर्ध्वायाः | ,, | ,, |
| चिबुके दन्तेषु वा स्थिताया धूसराकृतेः कादम्बर्याः | ,, | ७४ |
| कर्णमूलादारभ्य कण्ठनाळान्तं प्रसरन्त्या मेखलायाः | ,, | ,, |
| कण्ठनाळादारभ्य स्तनद्वयपर्यन्तं गतायाः शोणाकृतेर्लक्षाप्रवृत्तेः | ,, | ,, |
| स्तनयोरन्तरा स्थितायाः कपिलाकृतेर्यतिकृतो | ,, | ,, |
| नाभेरधो धवलाकृतिमत्यास्तारुण्यद्रमिळायाः | ,, | ७५ |
| जघनस्थलीमधिकृत्य स्थितायाः सत्याः | ,, | ७६ |
| स्त्रीणामुरःस्थले वर्तमानाया असत्याः | ,, | ७७ |
| उत्तमाङ्गस्य ललाटस्य च सन्धौ स्थितायाः कौशिक्याः | ,, | ,, |
| सर्वदा प्रस्विन्नगात्राणां पुरुषाणां मूर्धसु नियताया ज्येष्ठायाः | ,, | ७८ |
| वरिष्ठगुणभूषणाकारतया स्थिताया गरिष्ठायाः | ,, | ,, |
| तत्सन्निधिवर्तिन्याश्चन्द्रमण्डलायाः | ,, | ,, |
| शिरोगताया गन्धावलेः | ,, | ७९ |
| करतलमूलप्रदेशे विद्यमानायाः पृष्ठापरपर्यायाया मागध्याः | ,, | ,, |
| तदुपान्तस्थाया ईड्यायाः | ,, | ,, |
| करतलमध्यभागस्थस्य कोलाहलस्य | ,, | ,, |
| फलाख्ये अवयवविशेषे स्थितायाः कृताञ्जिकायाः | ,, | ८० |
| हृदयदेशे स्थिताया योषायाः | ,, | ,, |
| उरःस्थितायाः कामिन्याः | ,, | ,, |

## चतुर्थोऽध्यायः ।

| विषयः | | पृष्ठम् |
|---|---|---|

## पञ्चमोऽध्यायः ।

## षष्ठोऽध्यायः ।

| विषयः | | पृष्ठम् |
|---|---|---|
| निजवर्णोपेतवलित्रययुक्तस्य | फलम् | २०३ |
| पृष्ठगामिवलित्रययुक्तस्य | ,, | ,, |
| नाभिपार्श्वे पाण्ड्वाकारविकारयुक्तस्य | ,, | ,, |
| नाभेरूर्ध्वाधोभागगतविकारयुक्तस्य | ,, | २०४ |
| नाभेरधस्ताद्गतरेखायुक्तस्य | ,, | ,, |
| नाभिपार्श्वगतविकारयुक्तस्य | ,, | २०५ |
| ऊरुमूलप्राग्भागस्थितपिटकयुक्तस्य | ,, | ,, |
| नाभिपृष्ठभागस्थाया विरलाया | लक्षणं फलं च | ,, |
| बाहुमूलस्थायाः साध्व्याः | ,, | २०६ |
| बाहुमध्यगतसन्धेरूर्ध्वदेशस्थवर्णरूपविकारत्रय-युक्तस्य | फलम् | २०७ |
| तत्र रेखात्रयरूपविकारयुक्तस्य | ,, | ,, |
| बाहुसन्धेरुपरिदेशस्थस्य गडोः | लक्षणं फलं च | २०८ |
| तद्देशे बिन्दुयुक्तानां | फलम् | २०९ |
| तत्रैव स्थितानां नीलवर्णानां बिन्दूनां | ,, | ,, |
| तत्राधोगतरेखाणां | लक्षणं फलं च | ,, |
| तत्सन्धिपश्चाद्भागादर्वाग्गतानां सिराणां | फलम् | २१० |
| तत्रैव भग्नरेखाणां | ,, | २११ |
| मुखगतानां सिराणां | ,, | ,, |
| चिबुकस्थस्य स्फुटसिराबन्धस्य | लक्षणं फलं च | २१२ |
| गण्डस्थस्य गडोः | ,, | ,, |
| गलगतस्य पृथुद्रोहाख्यस्य वर्णविशेषस्य | ,, | ,, |
| गलगतानां स्फुटानां सिराणां | फलम् | ,, |
| वक्षःस्थानां ,, | ,, | ,, |
| स्तनगतानां ,, | ,, | ,, |
| उदरगतानां ,, | ,, | २१३ |
| कटिन्बिधस्थानां ,, | ,, | ,, |

दुःखापरपर्यायेष्टानिष्टाख्यफले तारतम्येन विदधाने सूर्यादिग्रहरूपेण शारीररेखादिरूपेण च बाह्याध्यात्मभेदेनांशभेदवशात् प्रत्यक्षतया प्रविभज्य परिक्लृप्ते . अतश्चादित्यादिग्रहाणां बाह्यानामाध्यात्मिकानां च शारीररेखादीनां सुकृतदुष्कृतांशत्वाद् वह्न्यंशस्य धूमस्येव वह्न्यनुमापकत्वं सुकृतदुष्कृतानुमापकत्वमविरुद्धम् . तथा तत्परिपाकानुमापकत्वमपि तत्र विशिष्टस्य विशिष्टानुमापकत्ववदविरुद्धम्। तत्र[1] च सिद्धस्यानुमापकत्वम्। तथात्रापि सूर्यादीनां लेखादीनां च प्रत्यक्षता इत्यभिप्रायेण। तथाच तत्र यथा न सिद्धमात्रस्यानुमापकत्वं किन्तु व्याप्तोऽयं धूम इत्येवमाकारेण सिद्धस्यैव[2], तथात्रापि विशेषतः सिद्धिरपेक्ष्यते, अयं सूर्योऽत्र वर्तमानोऽदः फलं[3] सूचयति, अयं बृहस्पतिरत्र वर्तमानोऽदः, इयं च लेखात्र वर्तमानादः, इदं च श्वसनरूपमदः[4] इत्येवमाकारेण। न चास्यां लोकमात्रस्य शक्तिः, यथा ह्यनुमाने। तस्माद् विशेषसिद्धौ यत्यते। तत्र प्रथमं बाह्यज्योतिर्मयसूर्यादिग्रहरूपेण परिणतस्य सुकृतदुष्कृतांशस्य तत्तदिष्टादिलक्षणं फलं[5] विदधतः सूचयतश्च तारतम्येन स्थितस्यै[6] विशेषसिद्धि[7]र्ज्योतिःशास्त्रेण[8] विभज्य पूर्वखण्डे[9] प्रदर्शितास्माभिः। सम्प्रत्याध्यात्मिकज्योतिर्मयरेखादिरूपेण परिणतस्य सुकृतदुष्कृतांशस्य तत्तदिष्टादिलक्षणं फलं तथैव विदधतः सूचयतश्च तारतम्येन स्थितस्य तथैव फलं सूचयतो विशेषसिद्धिरस्मिन् खण्डे ज्योतिःशास्त्रेण प्रदर्श्यतेऽस्माभिरित्यनुसन्धेयः सम्बन्धः। तत्रास्य खण्डस्य विषयविशेषोऽनेन श्लोकेन प्रदर्श्यते। तथाचायमर्थः — नृणां धर्माधर्मपरिपाकः सुकृतदुष्कृतापरपर्यायपुण्यापुण्यपरिपाको लेखाभिः प्रत्यक्षाभिः सुकृताद्यंशभूताभिः तत्परिणामविशेषरूपाभिर्वक्ष्यमाणप्रकारेण विशेषतः सिद्धाभिर्व्यज्यते प्रकाश्यते यतः, अतः कारणात् तासां लक्षणं प्रविविच्यते विभज्य प्रदर्श्यते। तासां लक्षणानि प्रत्येकं फलविशेषकथनेन सह प्रदर्श्यन्ते। ननु किं भवतां रेखादीनां सुकृतदुष्कृततत्[10]परिपाकानुमापकत्व[11]परिज्ञाने कारणं यज्ज्ञाने लोकमात्रस्याशक्तिः, तदुच्यते — इति

---

१. 'त्र सि' ग. पाठः. २. 'ति। अनुमापयति अयं' घ. पाठः. ३. 'यं च स्वसन्नरू' ग. पाठः. ४. 'स्व' ख., 'स्वधन' ङ. पाठः. ५. 'लं तथैव वि', ६. 'स्य तथैव फलं सूचयतो वि', ७. 'द्धिरस्मिन् खण्डे ज्योतिः', ८. 'ण प्र', ९. 'णं विभज्य पूर्वखण्डोऽ', १०. 'कृतं प', ११. 'त्वं' ग. पाठः,

प्रकाशिता इति । एवं सुकृतादिव्यापितया प्रकाशिताः विधात्रा इत्यतः कारणादित्यर्थः । एतदुक्तं भवति— एतासां लेखानामाध्यात्मिकीनां वक्ष्यमाणलक्षणलक्ष्यमाणानां यत्राभिव्यक्तिस्तत्र सुखादिफलं दृश्यते । अनन्तरं यत्रानभिव्यक्तिस्तत्र न । फलाभावे[1] च नाभिव्यक्तिः इत्यन्वयव्यतिरेकौ तत्र मत्परिज्ञाने कारणम् । अत्र चाशक्तिर्लौकमात्रस्य । अग्निसिद्धौ साधनभूतधूमस्य व्याप्तत्वपरिज्ञानवदिति । तथाच रेखा[2]स्वरूपं विषयः सामान्येन सिद्धः इति सिद्धम् । फलं च तत्स्वरूपपरिज्ञानेनेष्टानिष्टप्राप्तिपरिहारप्रवृत्तिसिद्धिः । अभ्युदयादि च साधारणं पूर्वखण्डेनेत्यारम्भसिद्धिः । लेखाशब्दश्चोपलक्षकोऽन्येषामप्यविनाभावसम्बन्धवतां सामान्यतोऽनुभूयमानानां प्रेक्ष्यप्रेक्षकतटस्थचेष्टानां श्वासस्य वर्णस्य च प्रेक्षकगतस्येति द्रष्टव्यं, षट्कलक्षणस्योत्तरत्र प्रतिपादयिष्यमाणत्वात् ॥ २ ॥

तत्र तावत् संज्ञाः कथ्यन्ते, तदवलम्बनेनैव लक्षणकथनस्यार्थवत्त्वात् । तत्र —

**मण्डला वर्तुला संज्ञा वासन्ती पिङ्गला स्मृता ।**
**शेफालिका हेमन्तिका धा[3]रिणी हेमसप्रभा ॥ ३ ॥**
**महाजवा दैवगतिः कान्तिः कृष्णा च भारती ।**
**मानुष्यगा गतिः सूक्ष्मा धानेष्ठा कम्बुकारगे ॥ ४ ॥**
**कर्णत्विड् भार्गवी धन्या वारुणी रुक्मकण्ठिका ।**
**मधुव्रता महादेवी योगिनी रुक्ममालिका ॥ ५ ॥**
**वारिणी रोधनी योनिः प्रज्ञा मन्दा महाप्रभा ।**
**[4]वैतालिका रो[5]धनिका मञ्जुला *वैद्युतीव्रते ॥ ६ ॥**
**मदाघूर्णागतिप्रज्ञे चञ्चला रोमकूपिका ।**
**पुलिन्दहक् क्रमा कम्रा हरी धर्मा धनप्रदा ॥ ७ ॥**
**गोदा गन्त्री महोत्पाता देवा विद्युद्दलग्रहा ।**
**ग्रहणदा धूमवल्ली मही हृद्गतसत्त्वदा ॥ ८ ॥**

---

१. 'वोरणमवना' क. पाठः. २. 'खायाः स्त्र', ३. 'धरणी' ग. पाठः. ४. 'वै', ५. 'शोधिनि' घ. पाठः.

---

* 'वैद्युत' इति व्याख्यासम्मतः पाठः.

हारा मन्दोष्णदा राजी गोमती धनिलानिले ।
देवी शतह्रदा निष्ठा धात्री गोपी प्रियव्रता ॥ ९ ॥
धेनुका रोहिणी गुल्मिन्यरुणा वीरकण्टका ।
ह्रस्ता मह्लिष्ठा गुर्विण्यौ माधवी हेमवेत्रिका ॥ १० ॥
मतिः कण्डूः कनिष्ठा सौराराध्रिके धन्वनी रागद-
[न्तिका (?) ।
इन्दिरा पुञ्जिका कन्धुः कमला कामहस्तिका ॥ ११ ॥
रतिप्रदा हेमवल्ली पत् पवित्रतनुः कृता ।
रुक्मप्रभा भवित्री गौः कालहृत् कृताविष्णुगीः ॥ १२ ॥
वरिष्ठा स्मृतिरूह्या स्यात् कपिला कामवल्लिका ।
कन्दली केलिका युक्ता वृत्तिराश्रयपावनी ॥ १३ ॥
मेदुरा रात्रिरत्युचा कमठध्वस्तिरामिला ।
मरालनेत्रिका गोप्री वृत्तालम्बपयोधरे ॥ १४ ॥
महामनिपातिक्लेशौ पाशवालौ मदालसे ।
रजः सत्त्वं तमो मोहः परिक्लेशः क्षयः कफः ॥ १५ ॥
पाणिह्रदा प्राणिगतिः कोटिरात्रोदनं मतम् ।
लम्बिनी चोर्ध्वसंज्ञा च कादम्बर्यपि मेखला ॥ १६ ॥
लाक्षाप्रवृत्तिर्यतिकृत् तारुण्यद्रमिला सती ।
असती कौशिकी ज्येष्ठा गारिष्ठा चन्द्रमण्डला ॥ १७ ॥
गन्धावलिर्मागधी स्यात् कोलाहलकृतान्निके ।
योषा कामिन्यथ डास्था बालिका शाकटायिनी ॥ १८ ॥
शङ्करात्रोदनं पृष्ठा धीः कन्दुः कामपिञ्जिकादिः ।
श्यामिका घोणिका माला तथो मन्दारवल्लिका ॥ १९ ॥
महागजा तरुप्रेक्षा शालिका दैविका कविः ।
कोर्परा करिणी मेहा लोहिका करिदन्तुरा ॥ २० ॥

---

1. 'त्री' क. पाठः. २. 'ष' ग. पाठः.

बालहृत्या वसुप्रेक्षा रोहिणी चेतसा धनिः ।
यवक्या रागबधिरा मदयन्ती मनोरमा ॥ २१ ॥
हेमावती रतिर्हृत्या वसुघ्नी रोमविस्रसुः ।
वजाहृया तु धरणी मेचको मोचिका शुचिः ॥ २२ ॥
असिघ्नी सुरुचिः पाटी लुटिस्तण्डूः प्रियङ्ग्वी ।
ज्योत्स्नी हताशा देवद्विड् कपर्दिरपराजिता ॥ २३ ॥
दुग्धा मुग्धा परा सोर्मिरमुका कोपरास्थितिः ।
कर्मेन्द्धीः श्लथा गुर्वी दमना पाशबन्धनी ॥ २४ ॥
लूता प्रियालिका देवी महापूर्वा च देविका ।
परिस्तीर्णा च परिधिर्वर्तुला सिंहिका मनुः ॥ २५ ॥
यविष्ठा भूतिरधिका मण्डली दण्डनी रुता ।
वास्तोष्पतिः केशमण्डः पतिः पङ्गुरनन्तकः ॥ २६ ॥
श्रीवल्ली रोहिता कम्बुः सिरा[1] नीरा च वर्तुला ।
मातुलानी माधवी च महिष्ठा रुक्मकण्ठिका ॥ २७ ॥
रोहिष्ठा धेनुका वार्ता वृत्तिरीशा लघुः स्मृता ।
वार्तालिका वालुका च मानवी शोधिका परा ॥ २८ ॥
शिञ्जिता मधुरा रक्ता गारिष्ठा मञ्जुगोणिका ।
धैर्यवृत्तिः परित्राता त्यक्तवृत्तिर्गुणर्जटा ॥ २९ ॥
मन्महेला कविः कम्रकीर्तिर्लोहितलक्षणाः ।
दन्तवसाः करस्पर्शः पलण्डुः पिप्पलाशनः ॥ ३० ॥
काश्मीरगन्धलोमानि रुचिरावर्त[3]पिण्डनम् ।
मांसानां लोहितश्लेष्मा मरिष्ठः काञ्चनोर्मिका ॥ ३१ ॥
सारद्रवः सरित् सिन्धुः सारुदार्द्रा महामणी ।
महस्वं महिता कृष्णा जयन्ती कृष्णगोधिका ॥ ३२ ॥
महामनुश्च रुष्णी च परुष्णी स्निग्धभास्तटित् ।
असिघ्नी बालबन्धी च मधुः पाणिररक्तकः ॥ ३३ ॥

---

१ 'मुं' घ. पाठः. २. 'तीं', ३. 'का' ग. पाठः.

पापं प्रकारः सैन्धुष्कं मतिरारोग्यकुण्डला ।
शेवधिः कटकं रोधिर्गङ्गा सेतुस्तथान्यगा[1] ॥ ४६ ॥
रोचिष्मती महादेवी हारा ह्यानि पञ्च तत् ।
तिस्रस्तु परितः प्रोता[2] ओता मण्डलिनीरसः ॥ ४७ ॥
कुक्षिरेताः प्रजानां वै सर्वासां योषितां नहि ।
अधस्तात् तिस्र एता स्युर्वलीसंज्ञास्तु याः पुरः ॥ ४८ ॥
तासु चो[3]र्ध्वमुखाः प्रोता दश स्युः पारिभद्रकाः ।
ऋज्वी वलिर्महाराजी मञ्जुवाणी महोत्पला ॥ ४९ ॥
कीर्तिः कम्राग्र[4]थसन्नाहा पीवरीलोहिते[5] तथा ।
ततस्तु पश्चाद् याः प्रोक्ता जघनस्थलसंवृताः ॥ ५० ॥
एताः पञ्चदश स्युस्ता रोहितालम्बिनीगुणः ।
माधुर्यवत्यनन्ता च प्रसादः प्रणय[6]ः क्रतुः ॥ ५१ ॥
सङ्कल्पः परिषेकश्च मधुमाले[7] रविप्रभा ।
ऐरावतिल्लो[8]मबर्हिः साधुयाना प्रियङ्गुका ॥ ५२ ॥
तदन्तः कल्पिते कश्चिद्रोमबर्हिर्महान् वपुः ।
ततस्तु पश्चात् तत्रोष्णं शैत्यं गन्धश्च सारतः ॥ ५३ ॥
वृषणस्थानगाः पञ्च परितः पाकलोहितौ ।
अवरोधो महीष्ठश्च मेदोवृत्तिः स्वयं ध्रुवः ॥ ५४ ॥
ऊरुगा वर्णभागाश्च वृत्तभागाश्च कापिलाः ।
जान्वोरघोषाः प्रथमं जङ्घयो[9]र्वर्तुल[10]त्वकम् ॥ ५५ ॥
पार्ष्णिभागगताः पाशबन्धाकारास्त्रयोदश ।
रेतसी ज्योतिषाबाधा मालाकम्बुकटीरकौ ॥ ५६ ॥
विच्छिन्ना पूतना शुद्धी रतिः कायस्तथापरः ।
वेत्रयष्टिः कुरङ्गी च कम्बुकण्ठी रतिप्रिया ॥ ५७ ॥

---

१ 'या', २. 'क्ता' ग. पाठः. ३. 'यो' क. घ. पाठः. ४. 'ह्य' ग. पाटः. ५. 'तस्तथा' घ. पाठः ६. 'वः', ७. 'लेयर', ८. 'ल्प' ग. पाठः. ९. 'त' घ. पाठः. १०. 'जघनयो' ग. पाठः.

अङ्गुल्योरुभयोः प्रह्वाभाव एव यथोचितम् ।
तदन्तर्बहिरेवोर्ध्वं कल्पते कल्पसंक्षयः ॥ ५८ ॥
नखानां प्रोन्नलत्वं यत् तन्नाम मणिकण्ठिकम् ।
रोमस्थली घुर्घुरता तदन्तस्त्रोटनं स्मृतम् ॥ ५९ ॥
तदन्तरेव बाह्यानां त्रयोदश विभागतः ।
मत्स्यः शङ्खस्ततश्चक्रं वज्रं पद्मं ध्वजस्तथा ॥ ६० ॥
आमूलान्तादेकरूपा नाडिका लक्ष्मचिह्नयोः ।
वर्तुलं मण्डलाकारं यमा प्राप्तिश्च माधवी ॥ ६१ ॥
मोहाधनुः प्रयुक्तिश्च धनिष्ठावासवर्तिनी ।
विरुद्धा धनितामार्गप्रचयः कविरोधिनी ॥ ६२ ॥
स्वाराड्विद्या तथाचार्यस्त्रिवलीलक्षणा स्फुटा ।
फालान्तरालगाः प्रोक्ता ओताः प्रोतास्तु नादताः ॥ ६३ ॥
मध्यगास्तु विशेषेण लोमपर्यन्तमागताः ।
नालिनी वेधियुक्ता च सुखा वक्रामनुच्युता ॥ ६४ ॥
वर्ज्यास्तु पञ्च संक्षोभी रेवती रणिका स्मृता ।
वैदिक्यः क्रमशः प्रोक्ताः कपोलतलयोर्द्वयोः ॥ ६५ ॥
मांसी मरणहेतुश्च शृङ्गिका वैद्युता धनुः ।
मन्दानुलोमवैकल्यविरुद्धाश्चिबुकान्तरे ॥ ६६ ॥
अधरोष्ठगतो नाभिः कुण्डाकार उदाहृतः ।
तस्मिंश्च विप्लुतः प्रोतो घण्डिकावर्णभेदकः ॥ ६७ ॥
उत्तरोष्ठे तु जेवालिः श्मश्रुगः पञ्चपर्वगः ।
स्वयंभूररुणः क्लीबः स्वयमार्यः प्रतन्द्रिकः ॥ ६८ ॥
नेत्रान्तगाः स्वयंभव्या इडावर्या महारुणाः ।
सिरावृत्तिं परोष्माणः पयोबन्धुर्भ्रुवोर(तः ? क्षः) ॥ ६९ ॥
मध्ये तु मध्यमा जिह्वा पवित्रं स्वयमूष्मगुः ।
माधुर्यं स्वर्णता धन्वी महोरा नेत्रवान् हनुः ॥ ७० ॥

१. 'महातनुः' क. ख. घ. पाठः. २. 'फ' घ. पाठः. ३. 'तः' ग. पाठः.
४. 'तु' ख. घ. पाठः. ५. 'यो' ग. घ. पाठः.

मकरः कर्कटा मौलिशीलं वृत्तधनुष्मकः ।
हारिद्रा पैङ्गलो रोहिणप्रभा सागरयूथिका ॥ ७१ ॥
हनुनासा पुरन्ध्री रजदू यविष्ठा स्मरमेदूका ।
उत्तानिना नीचछाया बाह्योरन्तरवस्थिता ॥ ७२ ॥
परिरन्ध्रकारी ज्योत्स्ना जिह्वा पारङ्गतापि च ।
आसवासवसंसेवा न्यूनवृत्तिररुन्तुदः ॥ ७३ ॥
महाज्योतिष्मती सैद्धाविद्युत्प्रभा महाते काननै (?) ।
विरोचिर्विस्तृतो सिद्धिर्मोदूका जीवगन्धिनी ॥ ७४ ॥
हास्तिनी वृषगन्धा स्यादर्यमा वसुपर्वगः ।
वसुः प्रेष्ठतमः प्रोक्तः सन्धिरार्यास्तु पृष्ठतः ॥ ७५ ॥
गृह्यो ग्रीष्मः प्रतोदः स्यादार्यावर्तः पराभृतः ।
महानदी पुरन्धुः प्राग् वृत्तिः कन्या कठोरगीः ॥ ७६ ॥
कठोरवागात्मना सा नित्यानन्दः स्वयंमधुः ।
मन्दगीरिन्द्रलोमा च वरिष्ठः स्वात्मविक्रियः ॥ ७७ ॥
अस्थिदूका वेला कामबन्धना कमठाकृतिः ।
मनोज्ञा वेतसजला कामधेनुः स्वयंबला ॥ ७८ ॥
मनोज्ञधीरारिर्ग्रीष्मः स्वयमन्धः समांसलः ।
इच्छावृत्तिः प्रेष्ठगर्भो नीचा जानुमती जनिः ॥ ७९ ॥
आनुमानिकसंसिद्धिरिन्द्रलेखा करोटिका ।
धाम्ना वालुकया वीथिः सौचिश्चित्रपटी तथा ॥ ८० ॥
मार्ताण्डगर्भा कालाख्या कम्रसूनुः कराह्वया ।
माधवी ज्योत्स्निका प्रोक्ता रोचिष्मत्यपि सैन्धवी ॥ ८१ ॥
इन्द्रायुधा धेनुगर्भा वारुणी सैन्धवी पुनः ।
कक्षाह्वया तु प्रोक्ता तु निषेध्या कथ्यते पुनः ॥ ८२ ॥

---

१ 'म' क. ख. घ. पाठः. २. 'धा' क. ख., 'द्धा' ख. पाठः. ३. 'घ्रु' क. ख. घ. पाठः. ४. 'टी' क. घ. पाठः ५. 'ति' घ. पाठः. ६. 'स्व' क. ख. घ. पाठः. ७. 'भे' ग. पाठः. ८. 'ता' ख. पाठः.

वृत्ताकारा महोक्ष्याणा वृत्तसन्धिस्तदन्तरा ।
ज्योतिष्मती वीथिका च पाण्डुगर्भा धरा पुनः ॥ ८३ ॥
ऐतिह्यकर्[1]मणी ज्येष्ठा स्वरुचिः पाकवृत्तिका ।
महोष्मा मागधजला सीमन्तिन्यपि कर्करी ॥ ८४ ॥
पद्मिनी नागिनी चेति शङ्खिनी चित्रिणी तथा ।
रेखा लेखानुगा गौरी गाम[2]नी कामना[3]यिका ॥ ८५ ॥
स्वर्मागधी रत्नगन्धिः पै[4]लगन्धिः पै[5]लस्वभाः ।
आयुं[6]धाङ्गसामाश्च वृषलोहितका पुनः ॥ ८६ ॥
अश्वाग[7]ती यवनिका रेखा द्योता स्वयंवसुः ।
देवता मन्दचरिता वार्[8]ताकवधिता[9] शिशुः ॥ ८७ ॥
कोपराधः परिधिका स्वयमूह्या मुहु[10]र्मही ।
काश्मीरगन्धिर्म[11]त्स्याभा मांसगन्धिररुन्तुद[12]ः ॥ ८८ ॥
मर्त्यभाषादेवभाषे नदी सिन्धुरवाहिनी ।
शङ्कर्मणी वृक्षानिधिः प्रा[13]ग्वृत्तिरधिका परा ॥ ८९ ॥
विहङ्गमः क्वचित् पुष्टी रक्तपुष्पस्तु दन्तुरः ।
मरुः प्रयोगसाधीयान् विष्णुकर्मा महोदधिः ॥ ९० ॥
लक्ष्मीकः कान्तकश्चोरुर्महाप्रपदमस्तकः ।
ऊर्ध्वांसजानुरुह्वाङ्गुर्दीर्घाङ्गुलिरमोघगीः ॥ ९१ ॥
महामतिर्महोरस्को मध्यनम्रः स्वयंदृढः ।
आनम्रता नितम्बस्य क्षीणां तु जठरं मृदु ॥ ९२ ॥
आम[14]ध्यं वर्तते किञ्चित् क्रीडासुरतवर्ति तत् ।
यज्वाह्[15]यः कर्मचिह्नो वसुछिद्कारुरुष्ट[16]हा ॥ ९३ ॥

---

१. 'णि', २. 'मि' घ. पाठः. ३. 'नी' क. ख. घ. पाठः. ४, ५. फ', ६. 'यौङ्गा च सामा च वृ', ७ 'न्त्री', ८. 'र्तानकबन्धिका' घ पाठः. ९. 'का' ख. पाठः. १०. 'मुंहुः' ग. पाठः. ११. 'मौत्स्याभा ख. घ.; 'मौत्स्यादो' क. पाठः. १२. 'दां', १३. 'प्रवृत्ति' घ. पाठः. १४ 'मध्य व' क. ख. ग. पाठः. १५. 'ह्' क. घ. पाठः. १६. 'ष्प्र' क. ख. ग. पाठः

वसुभद्रा रोमनीवी महिष्ठा कृत्रिमप्रभा ।
सिंहाग्रलोमा माहिमा ह्रस्वरोमा बहिष्करः ॥ ९४ ॥
उद्गर्भिणी लम्बकण्ठी वर्तुलान्तस्तटस्थगा ।
महामहिमसङ्काशदीपिताङ्गी तु गर्भिणी ॥ ९५ ॥
पृष्ठा रक्तकचा भोगा भोगलिप्सुर्नरेन्द्रधीः ।
मन्दाह्वया मन्दगतिर्मन्दसञ्चारपादका ॥ ९६ ॥
हेमप्रिया हेमनिभा स्वर्गतिः साधुसंवृता ।
रोचिष्मती कम्बुलविः प्राग्वृत्तमुखदर्शना ॥ ९७ ॥
दन्तोद्भेदस्तनी साधु नम्रवक्त्रा मुखच्छविः ।
स्वरोचिः प्रांशुवक्त्रा च विस्तृतास्याविरोधिनी ॥ ९८ ॥
सस्यनिर्गतिसम्पद्भिः प्रांशुलम्बितकण्टका ।
वसुभिः कृत्तसंछिन्ना नेत्रप्लोषणजिह्मगीः ॥ ९९ ॥
हनुप्रिया जीर्णशिखा गर्भो भिन्नमनस्त्वचा ।
चार्वङ्गी मन्दवाचाला हारिद्रा प्रेमबन्धिनी ॥ १०० ॥
अट्टहासामितपूर्वाह्लकवितोत्तंसिनी शुभा ।
बाणाभिर्गतसंत्रासा हेमलम्बोदरप्रिया ॥ १०१ ॥
स्वयंशयाना मन्दाभा स्त्रीणां त्वेतद्धि लक्षणम् ।
कविष्ठा कामसन्दोग्ध्री चारणा भिक्षुवल्लरी ॥ १०२ ॥
सामवाहा महामेघा केशलोमसु वर्तते ।
रक्तारुणाङ्गी शुभ्राक्षी सुलेखनविलेखिनी ॥ १०३ ॥
मातुःप्रिया हासबन्धसन्धुक्षितमनोभवा ।
प्रचारगतसंत्रासा महाविद्युत्प्रभावती ॥ १०४ ॥
आकर्णपूरा कर्णोत्थश्रवगालसगामिनी ।
मनुसङ्कल्पसंरोधाविरुद्धा गतिशीलिनी ॥ १०५ ॥

---

१. 'पगर्भि', २. 'त', ३ 'हा', ४. 'त्तिः' घ. पाठः. ५. 'त', ६. 'या' ग. पाठः. ७. 'स' घ. पाठः. ८. 'पा' क. ख घ. पाठः. ९. 'र्गो' क. ख., 'क्ष' ग. पाठः. १०. 'क्षमवान्' क. ख. पाठः.

वारद्रुहा सं[1]स्पृहणीया भिलाषयुता गता ।
अग्रप्रवृत्तवामाग्रपादसाङ्गुलितर्जनी ॥ १०६ ॥

वामा वामायुधा स्त्री गां युक्ताङ्गा[2]नि विधायवा ।
स्वप्रभा विद्रुबीभत्सा रोचिष्कृतपरिच्छदा ॥ १०७ ॥

विद्योतमाना निम्नाभा जल[3]कृतिरञ्जना ।
सुशीला त्यक्तसर्वाशा [4]वशा वर्तुलकण्टका: ॥ १०८ ॥

स्फुरत्प्र[5]भं क्रान्तधनुर्मञ्जुबाग(ति ? मि)तप्रभा ।
सीमाकृतविनिर्भेदो महोष्मा भैरवीक्षण: ॥ १०९ ॥

आकर्णकृतचित्तार्थी व्यावृत्तास्य: प्रकल्पित: ।
ऊर्ध्व[6]रेखाग्रसंक्लि[7]न्नरेखात्रयमलीमसा ॥ ११० ॥

ऊरुप्रभ: प्रांशुदक्ष: कृमिविध्वंसतत्पर: ।
एरण्डदर्शनौत्सुक्यसिद्धमन्त्रप्रभावावित् ॥ १११ ॥

मनर्थौषधसञ्जीवी रतिप्रियमहौषध: ।
न्दिरार्थी स्वरूपभावकृतर्धास्त्यक्तदेशिक: ॥ ११२ ॥

क्ताप्रिय: स्वर्णकण्ठ: कृतमालिन्यभूषित: ।
न्तास्य: प्राग्धृतशिरा व्यायत्तकपिलानन: ॥ ११३ ॥

ाङ्केदमन्दवचन: सदान्यत्र कृतस्थिति: ।
ावृत्तजङ्घालस्य + स्याद् वीरव्रणभीडित: ॥ ११४ ॥

होरस्क: पाणिवेषधृत चेवेतनाङ्कक: ।
ानुष्यधीवृत्ताशेफ: प्राणघोषस्मघावह: ॥ ११५ ॥

ानुबन्धी कुक्षिस्थ: प्रा[10]ग्वृत्ते विनिर्वे[11]शित: ।
क्लेशः प्राणभीवर्ज[12]स्त्वं विरुद्ध: कवोष्णवान् ॥ ११६ ॥

स्वर्गन्धी पुष्पमाल्यादी विरुद्धमतिरीशिता[1]।
व्यायामे[2]धिषणः[3] प्राज्ञः स्वयं विधूतकण्टकः ॥ ११७ ॥

मलापहा त्यक्तगात्रैः स्वच्छधी रक्त[4]नेत्रवान्।
अरुणाङ्गसिराबन्धः कुशीलः कोमलप्रियः ॥ ११८ ॥

स्निग्धप्रियस्नेहमहाप्राणवान् घोषवान् स्फुटः।
वेलानिवृत्तसर्वस्वः प्रोषितः प्राग्धियां वदेत् ॥ ११९ ॥

अह्नीकः प्रोज्ज्वलवपू रक्तसर्वस्वदैहिकः।
इरासर्वस्वसन्त्रासः प्रेमलोभैः[5] कृताश्रुहा ॥ १२० ॥

अभ्रूचलश्चित्रधनुः[6] प्रपँ[7]दाचितधूलिकः।
मलभूयिष्ठसुनखः कृतसर्वाङ्गलक्षणः ॥ १२१ ॥

अपादरोमा विबुधः कृतज्ञः कृत्तजीवनः।
अशोवाधिर्म[9]न्दहासः स्वाप्रियप्रेमबन्धनः ॥ १२२ ॥

अर्घ[10]प्रियः क्लेशसहः कृतसर्वस्वजीवनः।
अमालिन्यविधि[11]ः स्वच्छश्छायापह्नवाधि[12]क्पदः ॥ १२३ ॥

अमानुष्यगतिः क्षैणो विनन्दितकथोऽबुधः।
अप(क ? क्ष)[13]पाती विद्यानामनर्थप्रदसत्क्रियः ॥ १२४ ॥

विशिष्टधीः स्वायुधहृत् स्वयंहारः कृताङ्कुः।
जानूद्भेदनविश्लेषविवृत्तगतबाहुकः ॥ १२५ ॥

एकानुयायी गतभीः प्राण[14]वान् मन्दभाषणः।
अवज्ञा त्यक्तमधुरा वी[15]र्यहृत् कामदोहिनी ॥ १२६ ॥

---

१. 'का' ग. पाठः. २. 'मो' क. ख., 'मं' ग. पाठः, ३. 'णं' ग. पाठः. ४. 'त्र' ख. ग. पाठः. ५. 'भ' घ. पाठः. ६. 'रः' ख. ग. पाठः. ७. 'ष्वलाचि' घ. पाठः. ८. 'ति' ख., 'त्त' घ. पाठः. ९. 'न्दमहाः स्व' क. ख. पाठः. १०. 'स्व' क., 'ण्ड' ख. पाठः. ११. 'विश्वच्छच्छाया' ख. घ. पाठः. १२. 'विकल्पदः' ख. ग. पाठः. १३. 'की' क. ख. पाठः. १४. 'वन्म', १५. 'धै' घ. पाठः.

सर्वप्राज्ञप्रहाणिश्च मनुकल्पसमुद्भवा ।
अवश्यरन्ध्री सत्कल्या विमुक्ता[1]तिरस्त्रियः ॥ १२७ ॥

केशगन्धी बालुकया मुक्तसङ्घ[2]स्वसङ्गता ।
[3]पराभवित्रीवैरिण्यः कपिलाभिविमर्शिनी ॥ १२८ ॥

प्रतिरोधो व्यूहनीयः सर्वदृष्टिविरोधिका ।
अनन्तरली बा[4]लिश्या विष्णुकण्ठी कपिज्वला ॥ १२९ ॥

प्रतिपत्पीठसम्बन्धनिसर्गपरिचारिकाः ।
व्यभिचारी परिन्यूनपरिपक्षाः प्रतो[5]दकः ॥ १३० ॥

धृत्तिवश्यः साध्यपटुः प्रीतिवश्यः प्रिया गडुः ।
उदुम्बरोष्ठयामलकी दन्तवासा वसुस्तनी ॥ १३१ ॥

अर्धोन्नतस्तनी नम्रस्तनी कुम्भस्तनी स्त[6]नी ।
विद्यु[7]च्छटा वीरर्च[8]रा सानुगायत[9]मूर्धजा ॥ १३२ ॥

अगृह्यमाणलहरी तुल्यविद्यो[10]तिताह्वया ।
अ[11]चिरप्रेमनिपुणपरिकल्पितव[12]त्सला ॥ १३३ ॥

संवीतकटिसं[13]सक्तगडुवर्ति[14]ः परा हरी ।
इन्द्रा[15]रतिरस्त्री च महनीयप्रमोदिका ॥ १३४ ॥

स्वरूष्णी सिद्धिलवकी मलिष्ठा[16] धारणी विभुः ।
मायावती कालहतिः सिन्दूरप्रियदर्शिका ॥ १३५ ॥

अयस्कान्तगतिः शीघ्रप्रयोगातिररिष्टदा ।
विभागदायिनी भाषा कम्बुकण्ठी स्वयंगता ॥ १३६ ॥

---

१. 'ग' ख. पाठः. २. 'ध्रुव' ग., 'त्प्रचयं गता' घ. पाठः. ३. 'भक्ष' ग. पाठः. ४. 'ल', ५. 'त्तुद्रियः ।', ६. 'अपि ।' क. ख. ग. पाठः. ७. 'द्या' ख. पाठः. ८. 'वं' ग. पाठः. ९. 'त्त' क. ख. ग. पाठः. १०. 'दि' ग. पाठः. ११. 'परिप्रे', १२. 'वासस ।' क. ख. घ. पाठः. १३. 'यु' ग. पाठः. १४. 'र्ति', १५. 'र', १६. 'ता' घ. पाठः.

वयस्यारतिरस्त्री च महापुष्प[1]प्रदायिनी ।
अनोगतिरनीशाख्या वर्तुलावर्तनाभिका ॥ १३७ ॥

नवप्रिया प्रेमरतिर्बह्वायासप्रिया पुनः ।
मांसगन्धी रोहितदा प्रसक्तिः प्राणवाहिका ॥ १३८ ॥

ऊहनीया जलसाहिः सूत्रगन्धस[2]हिष्णुता ।
हेतुकार्यगतिः सूक्ष्मा यावकादिप्रभानुगा ॥ १३९ ॥

तृष्णानुगा मनो नाम मनुः कण्ड्वा[3]शिरोधरः ।
महोत्पलनिभः शान्तः सेवावृत्तिरमन्दभाः ॥ १४० ॥

वक्रोक्तिस्तज्ज्ञसंभाषा विरुद्धाव्यभिचारिका ।
वैतृष्ण्यं क्लेशहानिश्च डुण्डुभप्रतिमाकृतिः ॥ १४१ ॥

विद्योतमानसंस्पृष्टविलोचनविदूषकः ।
कार्पासर[4]तिसंसक्ताविद्धत्पावकरञ्जितः ॥ १४२ ॥

कपोलतलसंसिक्तकृष्णाम्रातकरञ्जिता ।
अयोमयी शुक्लगतिर्मनुर्धान्यगतिस्फुरः ॥ १४३ ॥

रोमन्थवृत्तिता च[5] स्यादयोवृत्तिररुन्तुदः ।
आयसी गरुडोपेता रोचिष्मत्यपि कर्करी ॥ १४४ ॥

वि[6]शोधनी मार्जनी च महाशुं[7]क्लफणावृता ।
आस्तीर्ण[8]शुक्लगणिका[9]नुभर्थं[10]प्रतिमाकृतिः ॥ १४५ ॥

वेतसानुगतिश्चैव सोमभाः सवितृप्रभः ।
अश्यामः कपिलः पिङ्गो रक्तधर्मा रविप्रियः ॥ १४६ ॥

---

१. 'फलप्रदा', २. 'भ' क. ख. घ. पाठः. ३. 'ण्व' ख. घ. पाठः. ४. 'तिरसं' क. ख., 'रतिरसं' घ. पाठः. ५ 'वस्था दयावृ', ६. 'रो' घ. पाठः. ७. 'वृक्णफलव्रता' ग., रुकूणफ' घ. पाठः. ८. 'रुक्णग' ग. पाठः, ९. 'ता' ख घ. पाठः. १०. 'व' घ. पाठः.

वास्तोष्पतिर्लीढ[1]जगती(:) केराकारमुख[2]प्रभः ।
मन्दाह्वया मन्दगतिर्मन्दधीर्मन्दसुस्वरः ॥ १४७ ॥

अधिष्ठानगतश्रीमत्कण्ठनालो[3]त्थितः परः ।
अभिप्रायप्रियः प्रेमा सङ्गीतकनिर्वा[4]चकः ॥ १४८ ॥

इति स्कान्दशारीरके[5] संज्ञाध्यायो[6] नाम प्रथमः ॥

---

अथ द्वितीयोऽध्यायः ।

एवं तावत् स्वरूपसिद्ध्यर्थं सर्वासां रेखाणां संज्ञास्तास्ताः । वैकटादि[7]-लक्षणानां च यथासम्भवमुक्त्वा स्वरूपं तावत् प्रदर्श्यते । तत्रैतावानर्थ[8]संक्षेपः । प्रेक्षकस्तावत् प्रथमं स्वं नियममाचरन् सर्वं प्रेक्ष्यलक्षणं तटस्थलक्षणं चावलोक्य स्वहृदयेऽवधार्य स्वमात्मानं नित्यसिद्धपरमेश्वरैकरूपतया संकल्प्य ततो वदेत् । तत्र को नियमः कश्च प्रेक्षकः कश्च तटस्थः कः प्रेक्ष्यः तल्लक्षणं च किम् इति चेत् । अत्रोच्यते — यः खलु नियमवान् श्वासादि[9]-परिशीलननिपुणः प्रत्यक्षादिप्रमाणादिषु कुशलः पुराणेतिहासादिषु च सत्यसङ्कल्पः सर्वसाधारणदयः संसिद्धपरमेश्वरज्ञानः परितुष्टहृद(य ? यो)ऽविक्षेपो विद्वान् समाराधितगुरुपादावाप्तस्कान्दशारीररहस्यः, स प्रेक्षकः । तन्नियमश्च सः, यः खल्वपररात्र उत्थाय संशोधितपादहृदयमस्तकादिः परीक्षितविश्वस्तप्राणायामसञ्जनितमूलाधारगतनासारन्ध्रपुटाविनिस्सृतवायुविशेषावगमपुरस्सरं कृततत्तद्विषयप्रवृत्तिः ज्ञापितसर्वप्रवृत्तेश्च ईश्वरश्च रेखां[10]मेलयितः । तटस्थश्च सः[11], यः प्रेक्षकस्य[12] दृष्टिगोचरं गतः । तत्र[13] दृष्टिगोचरं[14]गतत्वेऽने

---

१. 'जगती के', २. 'ख: प्रभुः' ।' ग पाठः. ३. 'क्षि' घ. पाठः. ४. 'पावकः' ख. पाठः. ५ 'रे' ग. पाठः ६. 'यः प्र' ख. पाठः. ७. 'पिटकादि' क. ख. घ. पाठः. ८. 'वदर्थं', ९. 'कवि' ग. पाठः. १०. 'सा क. ख. ग. पाठः. ११. 'सः प्रे' क. ख. पाठः. १२. 'श्च', १३. 'त्रा', १४. 'रं' क. ख. ग. पाठः.

न सर्वेषां तटस्थतां, किन्तु समयसिद्धानामेव । कोऽयं समयः । यस्तेन संक्लृप्तः[2] । स द्विविधः । तात्कालिको नित्यश्च । तत्र तात्कालिकः — यदाकदाचिद् यंकञ्चिद् यः[3]कश्चित् पृच्छति यत्किञ्चिदात्मानं प्रति वा स तात्कालिकः । स च देशविशेषायत्तः । देशश्चात्मना सङ्कल्पितः । अन्यश्च सः, यो नियमेनात्मनाधिष्ठिते देशे यःकश्चिदागत्य पृच्छति, तत्र तं प्रति वदनाय कल्पितः । पुनरपि द्विविधः । एकार्धशरपातं जङ्गमानां तटस्थता-कल्पने देशं परिकल्प्य तत्र तदन्तर्गतानां तटस्थतामवधारयेत् । जङ्गमाश्चात्र मनुष्याः मनुष्यविषयत्वात् प्रश्नस्य । यदि जङ्गमविषयत्वं प्रश्नस्य, ततः जङ्गमानामपि तटस्थता । क्वचित् पुनर्मनुष्यविषयेऽपि जङ्गमानां तटस्थता जङ्गममात्रविषये च मनुष्याणाम् । क्वचित् स्थावराणामपि प्राणभाजां वृक्षादीनाम् । क्वचिद् भित्त्यादीनामपि । शरपातश्च द्विविधः । धनुषः प्रयुक्तस्य शरस्य पातः स एकार्ध शरमात्रस्य च पातः सोऽप्येकार्ध इति । तत्रायुःप्रश्ने तावत् शरमात्रस्य पात इत्यवधारणीयम् । तत्रापि स्थावराणां तटस्थत्वे वीरेण[6] धनुषः प्रयुक्तस्य शरपातः । इति । जन्मनि तु पृष्टे पक्ष्या-दीनामपि तटस्थता । एवं तटस्थसङ्ग्रहः । प्रेक्ष्यश्च सः । यः व्याधितो वा कार्यगामी पुत्री वा यद्यदिच्छन् ज्ञातुं शुद्धान्तःकरणः परिपक्वमानसः पश्चा-त्तापादिर्ना हृदयगतसकलचिन्तनीयवस्तुसर्वस्वः स्वाकारेङ्गितादिव्यञ्जित-तत्तद्भावः दैवज्ञदर्शनसमुत्सुकहृदयः मार्गे[9] तत्तद्विषये तं पृच्छन् क्रमाद् दैवज्ञमन्दिरमभ्यागतः तत्र च तं दृष्ट्वा प्रसन्नहृदयस्ततो हर्षितनिजपरिवारः स्वयं च प्रसन्नदृष्टिः । स एवम्भूतः प्रेक्ष्यो नाम नच न इत्यविवादसिद्धम् । तत्र भागा अवगन्तव्याः — यत्र स तिष्ठति तस्य ज्ञेयत्वाद् दश दिशः उ-न्नतो निम्नश्च इति । तत्र यद्येकस्मिन् भागे क्षणमात्रं स्थितिं विना सञ्च-रति प्रेक्ष्यः, तच्चैकं लक्षणमिति पृथगवगन्तव्यम् । तस्य च फलं यस्तद्विषयः तस्य चञ्चलता । यदि प्रेक्ष्यापेक्षया कश्चित् पृच्छक आगच्छति तत्रापीयमेव वार्ता । विशेषस्तु समीरणसमीक्षाप्रधानेन कविना समाहितेन तत्र वक्तव्यं फलजातम् । लक्षणान्तराणि तु तत्रोपकरणभूतानि । इति ॥

---

१. 'ता तावत् कि', २. 'मः सः । स' ग. पाठः. ३. यः पृ' क. ख. घ. पाठः. ४. 'दादित्यादी', ५. 'यः' घ. पाठः. ६. 'ऽपीतरे' क. घ. पाठः. ७. 'यश्चान्या', ८. 'ना सकलकथनाचि', ९. 'र्गे तद्वि', १०. 'ता प्रे', ११. 'षः किन्तु समीक्षा' ग. पाठः.

तत्र प्रथमं मण्डलालक्षणं[1] दृश्यते —

**ललाटमध्यगा कृष्णाकारा वृत्तपरिच्छदा ।**
**मध्यस्थहीनवर्णा च सा स्यादुत्तमगामिनी ॥ १ ॥**

इति । या खलु ललाटमध्ये वृत्ताकारपरिच्छदा कृष्णाकारोत्तमगामिनी रेखा सा मण्डलेति शेषः । ललाटस्थलं प्रादेशमात्रपरिमितेन दण्डेन परिमार्य[2] दीर्घतः वृत्ततश्च यथाकथाचिद् रज्ज्वा तदायत्ते परिमाणे जाते ज्ञाते च या ललाटमध्यगा मध्यतलं प्राप्ता कृष्णवर्णा उत्तमगामिनी, उत्तमं नाम ब्रह्मरन्ध्रं तं गन्तुं शीलं यस्याः सा । अस्याश्चोत्तमगामिनीत्यनेन फलमप्युक्तम् । योऽनया लेखयाङ्कितः स उत्तमो भवतीति । उत्तमत्वं च स्वकुलोत्तमत्वं धर्मेणार्थेन कामेन मोक्षेण वा । रञ्जनशक्त्येति वा केचित् । इति ॥ १ ॥

ततोऽधःस्थिता रेखा वर्तुला इत्याभिप्रेत्य तल्लक्षणमाह —

**मन्दाकारं च तिलकं या स्मारयति तद्विदाम् ।**
**तस्यास्तु सुभगो विद्वान् रम्यः सर्वजनप्रियः ॥ २ ॥**

इति । या तु मन्दाकारमस्फुटाकारं तिलकं स्वदर्शने सति तद्विदां स्मारयति तस्याः कारणात् रम्यः रमणीयवेषः सुभगः सौभाग्यवान् ऐश्वर्यादिसम्पन्नः सर्वजनप्रियः क्रमाद् भवति तद्वान् नर इत्यर्थः । अत्रापि लक्षणेनैव फलसिद्धिर्द्योतिता इत्यवगन्तव्यम् ॥ २ ॥

संज्ञाया लक्षणमाह—

**नासासञ्जातरेखा या दीपनी द्योतितप्रभा ।**
**पूर्वाधारतया भाति प्रोताकारा पृथग् जने ॥ ३ ॥**

या दीपनी दीपनशीला नेत्रयोरित्यध्याहर्तव्यम् । भ्रुवोरिति वा । द्योतितप्रभा द्योतिता प्रभा यया । प्रभेति प्रभाकारा नासोच्यते । सा द्योतिता यया इति विग्रहः । पूर्वाधार(त)या पूर्वोक्ताया वर्तुलाख्याया रेखाया आधारतया पृथग् भाति जने सा संज्ञेति शेषः । अत्र संज्ञापदेन फलमुक्तं, विशेषतः संज्ञावान् भवति तद्वान् नर इति ॥ ३ ॥

---

१. 'णाद्', २ 'प्य' घ. पाठः.

**भ्रुवोरुपरि या रेखा कुत्रचित् कुहचिच्च वा ।**
**विभाति तस्याः सर्वायुर्वासन्तीलक्षणं पुनः ॥ ४ ॥**

पुनर्वासन्तीलक्षणमुच्यत इत्यर्थः । (प्रथमञ्चास्यां नयः । ?) या भ्रुवोरुपरि एकत्र उभयत्र वा विभाति सा वासन्ती, तस्याः सर्वायुः फलम्, इत्येवं फलं लक्षणं चानेनैवोक्तं साक्षादिति द्रष्टव्यम् । लक्षणप्रतिज्ञा फलप्रतिज्ञाया अपि उपलक्षणत्वेन योजनीया । अन्यथाप्रतिज्ञातकथनप्रसङ्गात् । एवं यत्र यत्रैकत्र प्रतिज्ञा तत्र प्रतिज्ञान्तरमप्यध्याहर्तव्यम् । सिद्धाया एवोपलक्षणत्वेन योजनं वा । अत्र वासन्तीति नामग्रहणेन रेखायाः कालसम्बन्धप्रत्यायनेनायुर्लक्षणत्वमुक्तमिति हृदयम् ॥ ४ ॥

**या वै कपिलवर्णा स्यान्नासापुटमनुत्तरम् ।**
**गन्तुं प्रवृत्ता तां विद्यात् पिङ्गलेति शुभस्थितिम् ॥ ५ ॥**

अनुत्तरं खलु नासापुटं, न उत्तरं यस्य नास्ति उन्नततरं तदनुत्तरम्, एवम्भूतं नासापुटं गन्तुं प्रवृत्ता गमनाय किञ्चिदुन्मुखी कपिलाकारा या रेखा तां पिङ्गलेति विदुः । शुभस्थितिं च तामभिदधाति दैवज्ञः इति पिङ्गलालक्षणवाक्यस्यार्थः । अत्र भ्रूमध्यादारभ्य नासापुटपर्यन्तमुन्नतस्थलेन वा नासामध्यरूपेण मार्गेणो(प? भ)यपार्श्वगतेन वा निम्नेन स्थलेन स्फुटमागता शुभस्थितिं मङ्गलैः सह तत्र तत्र तद्वतः पुरुषस्यावस्थितिं सूचयतीति भावः ॥ ५ ॥

स्मृताया लक्षणमाह[1] —

**हनुप्रदेशवर्तिनी सुसङ्गतासमागता ।**
**करेण सङ्गतिं पुनः करोति जीवितावधि ॥ ६ ॥**

इति । अत्र येत्युपश्लेषः सङ्ग्रहकृतः । हनुप्रदेशं, हनुर्नाम नयनाधःप्रदेश उन्नतरूपः, तमागतः तत्र वर्तितुं शीलं यस्या इति वार्थः । सुसङ्गतया समागता सुसङ्गता नाम नयनाधोभागगता या रेखा विकाररूपिणी न फलसूचनी तया सङ्गता । शेषेण फलकथनम् । करेण हार्यद्रव्येण सङ्गतिं करोति अभिलषणीयद्रव्यं प्रापयतीत्यर्थः । अस्यास्तु रेखायाः स्मृतेति नामकरणं जातिस्मरत्वदायित्वमस्य सूचयतीति ॥ ६ ॥

---

१. 'भिवदाति' ख. पाठः. २. 'ह या ह' ग. घ., 'ह सा ह' क. पाठः.

**या कपोलतले साक्षाद् विद्योतितमुखाकृतिः ।**
**विभाति रेखा सततं चतुरङ्गुल(दी)र्घतः ॥ ७ ॥**

अनेन शेफालिकाया लक्षणमुच्यते । संज्ञा शेफालिकापुष्पसवर्णत्वात् । कपोलतले चतुरङ्गुलपरिमिता रेखा शेफालिका नाम । तस्याः फलं विद्योतितमुखाकृतित्वम् । विद्योतितं मुखम् आकारश्च यया इति ॥ ७ ॥

हेमन्तिकालक्षणमाह —

**चिबुके रोमसंस्थाने रेखात्रयविदूषिता ।**
**या वर्तते नित्यमेव तस्या हेमन्तसंहृतिः ॥ ८ ॥**

चिबुकेषु रोमस्थानेषु रेखात्रयविदूषिता परितो रेखात्रयेण विदूषिता विस्पष्टीकृतेति यावत् । नित्यं वर्तते या रेखा चिबुकादूर्ध्वमुख्यधरोष्ठपर्यन्तं तस्याः निमित्तभूताया हेमन्तसंहृतिः फलं भविष्यति । हेमन्तकाले मरणं भविष्यतीति यावत् । अत्र हेमन्तकाले मरणोक्त्यैव हेमन्तस्य विशेषोक्त्यभावाज्जन्मानन्तरं यो हेमन्तः संजायते तत्र मरणं, हेमन्ताक्षरसंख्यातसंवत्सरे वा इत्युक्तं भवति ॥ ८ ॥

धारिण्या लक्षणमाह —

**श्मश्रूण्यधगता या तु वर्तुलाकारसंस्थितिः ।**
**नासां धारयतीवास्ते धारिणीं तां विदुर्बुधाः ॥ ९ ॥**

श्मश्रूणि नासाया अधोभागपर्यस्तानि । बहुवचनं स्थलभेदविवक्षयैव । नासापुटयोरधोभागौ गण्डाधोभागश्च इति तान् प्रदेशानभिसंबध्य वर्तुलाकारसंस्थितिः वर्तुलाकारेण वृत्ताकारेण संस्थितिः संस्थानं यस्याः सा तथा । नासिकां धारयतीवास्ते पुरुषे नासिकामियं धारयतीवास्ते स्थितिं करोति तां धारिणीं विदुः । अत्र फलं द्योतितम् । अस्याः परमधर्महेतुभूतायाः आयुर्धारकत्वमस्ति । अतितरामुज्जृम्भते तद्वत आयुरिति ॥ ९ ॥

**भावः पञ्चप्रधानत्वाद् वर्णानां हेमसप्रभा ।**

---

१. 'लसंयता ॥' क. पाठः. २. 'र्ध्वमध' घ. पाठः. ३ 'या', ४. 'त क. पाठः. ५. 'न्ता' ख. ग. घ. पाठः.

अनेनार्धेन लक्षणमुक्तम् । वर्णानां पञ्चसंख्याप्रधानत्वाद् यो भाव[1] एकत्र सा[2] हेमसप्रभा नाम रेखा ॥

फलमाहोत्तरेण—

**अस्या एकमुखस्थायाः कान्तिपोषः फलं भवेत् ॥ १० ॥**

अस्या उक्तलक्षणायाः कान्तिपोषः क्रमेण[3] क्रमेण भविष्यति फलं यद्येकमुखस्थता भवेत् एकस्य पुरुषस्य नित्यमुखस्थिता भवेत् । एकस्मिन्नेव मुखे स्थिता इति वार्थः ॥ १० ॥

**महाजवाधरोष्ठस्याप्यधस्तादेकवर्तुला ।**

एतल्लक्षणम् । अधरोष्ठस्याधस्तादेकांशे वर्तुलाकारा ओताकृतिः प्रोताकृतिर्वा या रेखा अस्या नाम महाजवेति ॥

फलं चोच्यते —

**दुर्गन्धिः पलगन्धिर्वा महापुरुषदूषकः ॥ ११ ॥**

इति । फलत्रयमेतत् । अंशकत्रयं तस्या विद्यते, यथासम्भवं तत्फलम् ॥ ११ ॥

दैवगतेर्लक्षणमाह[4]—

**विकारावस्थिता रेखा विद्यते सर्वजन्तुषु ।**
**नयनाधःप्रदेशेषु तस्याः पश्चाद् विदुः पराम्[5] ॥ १२ ॥**

इति । अत्रायमर्थः — सर्वेषां जन्तूनां नयनाधःप्रदेशेषु विकारभूता काचिद् रेखा विद्यते । ततः पश्चात् ततोऽव्यवहितानन्तरं या तां परां पश्चाद्भाविनीं दैवगतिं विदुः । अस्याः फलं च नामत एवोक्तम् । दैवमेव सर्वपुरुषार्थसाधकमेतेषां येषामेषा विद्यत इत्यवगन्तव्यम् । तत्र च विशेषः । यावन्नयनदीर्घं गत्वा यदि परिसमाप्येत ततः फलसाकल्यं, वैकल्यं तु विच्छेद इति । त्रीणां तु[6] व्यवहितस्य तृतीयस्य हनुप्रदेशसन्धौ जायमानस्य रेखालक्षणस्य फलमेतत् । नाद्यस्य नयनसन्निहितस्येति ॥ १२ ॥

---

१. 'वः प्रोक्तः सा' क. पाठ. २. 'रा' ख. ग. घ. पाठ. ३ 'पा फलं भविष्यति ए', ४. 'देवताग' क. पाठः. ५ 'म् ॥ अ' क. ग. घ. पाठः. ६. 'तद्यव' क. पाठः.

कान्तेर्[1]लक्षणमाह —

**नासापर्यन्तभागात्तु नेत्रान्तं यावदिष्यते ।**
**तस्यास्तु मध्यगामिन्याः फलं कान्तिर्महोदयः ॥ १३ ॥**

अत्रैव हनुप्रदेशादुपरि[2] स्वमध्यगताया नासापर्यन्तभागमारभ्य नेत्रान्तावधि वर्तमानायाः शिखराभ्युपेतायाः कान्तिसंज्ञायाः फलं महोदयः महानुदयः, स एव कान्तिरित्युच्यते । अत्र महोदयशब्देन कर्मसमृद्धिरपि विवक्षिता, अन्यथा श्रेयोरूपस्य महोदयस्यैवासिद्धेः । तदनेनैतदुक्तम् — प्रथम एव वयसि कर्मजातमनु[3]तिष्ठंस्तत्तद्वयसि तत्तदुचितां क्रियां कुर्वंस्तस्मिन्नेव जन्मनि स्वाभिलषितं श्रेयो लभत इति ॥ १३ ॥

कृष्णा[4]लक्षणमाह —

**सन्निधौ वर्तते या तु स्वेच्छापरिकरस्मृतिः ।**
**तस्याः फलं लक्षणं च तदन्तः कल्पिताधरे ॥ १४ ॥**

या स्वेच्छापरिकरस्मृतिः स्वेच्छया परिकरेषु स्मृतिः स्मरणम् इति फलविषयेऽर्थः । स्वेच्छा च परिकरश्च स्वेच्छापरिकरौ ताभ्यां स्मृतिः स्मरणं यया इति वा । स्वेच्छापरिकरस्मरणं च स्मारयितृत्वमिति लक्षणपक्षेऽर्थः । एवंरूपैवंफला च या सन्निधौ स्थिता नासापर्यन्तमारभ्यानेत्रान्तं वा क्वचिद् विच्छेदना वा सा कृष्णा । अनेन च लक्षणं फलं चोक्तम् । अस्या विषयभेदमाह — कल्पिताधरे कल्पिताधरोष्ठे प्रशस्ताधरे पुरुषे । तदेतल्लक्षणं नान्यत्रेति । अधरस्य च प्रशस्तत्वं प्राकट्यमात्रं न प्रसिद्धिः । प्राकट्यं च डुण्डुभवर्णतादिरूपेणेत्यवगन्तव्यम् ॥ १४ ॥

भारतीलक्षणमाह —

**नेत्रान्तात् त्रिशिखा या तु कर्णान्तं प्रसरेत् पुनः ।**
**इयमावर्तगत्याद्यैर्विकारैरुपलक्षिता ॥ १५ ॥**

एवंभूता भारतीसंज्ञेत्यध्याहारः । क(टाक्षं ? र्णान्तं) नेत्रा(न्तं ? न्ताद्)

---

१. 'क्ष्माह' ख. ग. पाठः. २. 'रि म' ख. पाठः ३. 'नुष्ठेयं तत्त' क. पाठः. ४. 'ष्णाया ल' घ. पाठः.

या त्रिशिखाभिर्व्याप्नोति आवर्तगर्ताद्यैः[1] । आवर्तो नाम शृङ्खलाबन्धः, गर्तश्च वर्तुलता, आदिशब्देन विवर्णता, तैः सहिता । अत्र फलं विशृङ्खलाप्रतिहत-नानारूपफललाभसम्पत्समृद्धिहेतुभूतसकलगुणसंपन्नता(न्त्र ? क्त्र सर इति संज्ञयैव सिध्यतीति पृथङ् नोक्तम् ॥ १५ ॥

**अधरोष्ठाधरे भागे चापाकारा तु या निजम् ।**
**रूपमत्यन्तमुखीकृत्य रेखा तिष्ठति सोत्तरा ॥ १६ ॥**

इत्यनेन मानुष्यगाया लक्षणमुच्यते । अयमर्थः — या अधरोष्ठाधर-प्रदेशे अधरोष्ठादधःप्रदेशे चापाकारा निजं रूपं अत्यन्तमुखं कृत्वा तिष्ठति सोत्तरकालभाविनी रेखा मानुष्यगेति यावत् । मानुष्यं नाम मनुष्यायुरुच्यते । तद् गच्छतीति मानुष्यगा इति संज्ञार्थः । तदनेन शतायुष्ट्वमनया रेखाया पुरुषस्य द्योत्यत इति ॥ १६ ॥

गतेर्लक्षणमाह —

**भ्रुवोरुपरि तत्स्थानं व्याप्नोति निजवर्तनी ।**
**या ललाटमभिव्याप्य स्थिता सा गतिरुच्यते ॥ १७ ॥**

(इति ।) या निजं स्थानं ललाटाख्यमभिव्याप्य तदेव निजवर्तनी तत-स्तामभिव्याप्नोति सा गतिः गत्यभिधाना रेखा । व्याप्नोतीत्यस्यायमर्थः — नहि जातु कश्चिदनया रेखया भ्रुवोरुपरिभागं गतयासङ्गतोऽविच्छिन्नया दृष्टः, तथापि व्याप्तिरपेक्षि(तं ? ता ।) अन्यथा न शतायुष्ट्वसिद्धिरिति ॥१७॥

**सूक्ष्मा तदूर्ध्वदेशस्था सापि व्याप्नोति तत्स्थलम् ।**
**निजा तु वर्तनी सैव सापि पूर्वायुरीरयेत् ॥ १८ ॥**

या पुनस्तदूर्ध्वदेशं व्याप्नोति तत्रस्था सा पूर्वोक्तमेवायुःफलमीरये-दिति द्योतयति, सा तु सूक्ष्माभिधाना । अत्र सूक्ष्मेति संज्ञयैतदाह — विच्छेदोऽत्र विशेषतः परीक्षणीयः । यदि विच्छेदः क्वचिद् दृश्येत, न तस्य पूर्वोक्तायुस्सिद्धिरिति ॥ १८ ॥

---

१. 'तैराव' ख. ग. पाठः २. 'र्थः अ' क पाठः. ३. 'ज', ४. 'न्तं मुखं' घ. पाठः. ५. 'ष्य', ६. 'स्त', ७ 'ना सा रे' क. पाठः. ८. 'ति तस्या' ख., 'ति अस्या' घ पाठः. ९. 'ध्य' क. पाठः. १०. 'र्तिं', ११. 'येद् द्यो' ख. ग. पाठः. १२. 'श्यते न' क. पाठः.

**तदन्तर्वर्तनी भूयो व्याप्य पर्यन्तयोर्द्वयोः ।**
**तिष्ठन्ती सा धनिष्ठा स्याल्लक्ष्मीसम्पत्करीं विदुः ॥१९॥**

या पुनस्तदन्तर्वर्तनी तदन्तर्भागदेशवर्तनी तदन्तर्भागदेश एव वर्तनी मार्गो यस्या इति विग्रहः । अन्तःशब्देन तदूर्ध्वभाग एवोच्यते । ललाटमध्यप्रदेशत्वात् तत्प्रयोगः । मध्यविषयश्चान्तःशब्दो दृश्यते । भागदेशशब्दौ त्वेकदेशविषयतया योज्यौ । तदनेनैतदुक्तं भवति —या ललाटमध्यगा पर्यन्तयोर्द्वयोर्भागयोर्यावद् गत्वा मध्येऽविच्छेदेन तिष्ठति सा धनिष्ठा नाम । अस्याः फलं विभूतिः संपत्समृद्ध्यादि । इति ॥ १९ ॥

कम्बुरेखालक्षणमाह —

**कण्ठनालं गता या तु कम्ब्वाकारा तु मूलतः ।**
**सैव कम्बुरिति प्रोक्ता तदूर्ध्वस्था तु कारणम् ॥२०॥**

चतुर्थेन पादेन कारणरेखायाः । अयमनयोरर्थः— या खलु कण्ठनालं गता कण्ठमूलादारभ्य कण्ठमध्यस्थायाः सिरायाः सन्निधिं यावद् वर्तते सा वृत्ततः कम्ब्वाकारा नाम । मूलतस्तु कम्ब्वाकारा नायामतश्च, सा कम्बुरिति प्रोक्ता । तदूर्ध्वदेशस्था कण्ठमध्यभागगता न उपरि वर्तमाना कारणसंज्ञा इति ॥ २० ॥

अनयोः फलम् —

**अव्यक्तिर्यावदेतस्या जीवमाप्नोति पुष्करम् ।**
**गुणित्वं च भवेदस्याः क्षयं यावन्मनीषिणाम् ॥२१॥**

अस्यार्थः—एतस्याः प्रकृतायाः कम्बुरेखाया यावन्तं कालं गत्वा अव्यक्तिः, तावन्तं कालं तद्वानसौ नरो जीवमाप्नोति न जीवविच्छिन्नो भवति, प्राणवानिति यावत् । इति कम्बुरेखाफलम् । अस्याः कारणभूताया यावत् क्षयो भवति, तावन्मनीषिणां गुणित्वं वर्तते अविच्छिन्नं भवति । उत्तरकालं तु विच्छिन्नं भवेदिति कारणरेखाफलम् । मनीषिणामित्यनेनैतदाह—मनीषिणामेव विदुषामेवैषा सम्भवति नान्येषाम् । अतश्च विदुषामेषां लक्षणमिति ॥ २१ ॥

---

१. 'वृत्तन्ततः' ख., 'वृतत्ततः' ग. पाठः. २. 'षां' ख. पाठः.

कर्णत्विड्रेखालक्षणमाह —

**अविच्छिन्नं तु ताटङ्ककर्णोत्पलमुखैः शुभैः ।**
**यस्य कर्णं प्रशंसन्ति सोऽयं विद्वद्धनो भवेत् ॥ २२ ॥**

(इति ।) यस्य खलु कर्णं लोकाः प्रशंसन्ति कर्णमुद्दिश्य प्रशंसां कुर्वन्ति ताटङ्ककर्णोत्पलमुखैः शुभैः लक्षणैरलङ्कारैर्वा तस्य कर्णत्विड् विद्यत इति कल्पयितुं शक्यम् । सा पुनर्यस्य विद्यते स विद्वद्धनो भवेत् । विद्वांस एव धनं यस्य स विद्वद्धनः । तेभ्य सर्वदा सम्पद् भवतीत्यभिप्रायः । अत्र यस्य ताटङ्कादिभिः कर्णं प्रशंसन्ति लोकाः तस्य कर्णत्विड् रेखा इति लक्षणं, तद्वान् विद्वद्धनो भवेदिति फलमिति द्रष्टव्यम् ॥ २२ ॥

भार्गव्या लक्षणमाह —

**भार्गवी परिषन्मध्या कर्णपृष्ठगता पुनः ।**
**रोमस्थलं च व्याप्नोति सैवातीव शुभप्रदा ॥ २३ ॥**

(इति ।) कर्णपृष्ठस्थिता कर्णादधोभागस्था भूत्वा रोमदेशस्थलं या व्याप्नोति सा परिषन्मध्या भार्गवी नाम रेखा । फलांशे परिषच्छब्दः । सा परिषन्मध्यात् सर्वशुभप्रदा भवति । परिषन्मध्यभावित्वं सर्वशुभानुभवितृत्वं च स्वाश्रयस्य पुरुषस्य, ददाति तस्मै ददातीत्यर्थः ॥ २३ ॥

**धन्या ताम्रनिभा शुभ्रा कर्णयोः पार्श्ववर्तिनी ।**
**तया सर्वमवाप्नोति विद्वांश्चापि भविष्यति ॥ २४ ॥**

धन्या नाम कर्णयोः पार्श्ववर्तिनी रेखा । कर्णपार्श्वस्थलं तु तद्यत्रासम्भावितो रोमसम्भवः । अत्र वर्तितुं शीलं यस्याः सा धन्या नान्यत्र सा वर्तते । तया सर्वमवाप्नोति पुरुषः फलं, किञ्च कालान्तरे विद्वांश्च भविष्यति । जन्मान्तरे वाव्यभिचारेण ॥ २४ ॥

वारुण्या लक्षणमुच्यते —

**अधरोष्ठगता या तु विद्युद्वर्णापि भाविनी ।**
**मध्यतः पार्श्वयोः कृष्णा वर्णाकृतिरुदीरिता ॥ २५ ॥**

(इति ।) वारुणी वर्णाकृतिरुदीरितेति सम्बन्धः । वर्णाकृतिर्वर्णाकारः । वर्णसंस्थानमिति यावत् । कीदृग्भूतेत्युच्यते—मध्ये विद्युन्निभा विद्युत्प्रभा स्वर्णश्यामाकारेत्यर्थः । पार्श्वयोः कृष्णा । जर्जराकारेत्यर्थः ॥ २५ ॥

---

१. 'द्वान् भ' क. पाठः.

अस्याः फलमाह प्रवृत्तिनिमित्तं च द्योतयन् संज्ञायाः —

**मदिरामधुमत्तः स्यात् परशक्तिरतः स्वयम् ।**
**ऊर्ध्वपुण्ड्रप्रदाता च स्वयमाचारतत्परः ॥ २६ ॥**

इति । मदिरामधुमत्तः मदिराख्येन मधुना मत्तः हृष्टः निरङ्कुश-स्वभावतया तेन दर्पवान् । परशक्तिरतः केवलं शक्तिरत इत्यर्थः । ऊर्ध्व-पुण्ड्रप्रदाता च सर्वेषामूर्ध्वपुण्ड्रोपदेष्टा स्यात् । भस्मनेति शेषः । स्वयमा-चारतत्परश्च स्वयमाचारः शक्तिमार्गविहित आचारः । तत्परः तदनुष्ठानपर इत्यर्थः ॥ २६ ॥

रुक्मकण्ठिकायाः फलं लक्षणं चाह —

**व्यावृत्तनेत्रः प्रांशुःस्याद् यत्रैव च मरुत्स्थितिः ।**
**पादयोर्निम्नदेशस्था प्रादेशाङ्गुलिमूर्ध्वगा ॥ २७ ॥**

इति । व्यावृत्तनेत्रः नेत्रविषयत्वेन प्राप्तेभ्यः सर्वेभ्य इति शेषः । प्रांशुः प्राङ्मुखी दृष्टिर्यस्य स प्रांशुः । कुत्र प्रांशुत्वमित्यपेक्षायामाह—यत्र मरुत्स्थितिरिति । यत्र मरुतां वायूनां स्थितिस्तत्रेत्यर्थः । एतत् फलम् । पादयोर्निम्नदेशस्था यो यो निम्नो देशः पादयोस्तत्र तत्र स्थिता । भाविनी प्रादेशाङ्गुलिम् । भाविनी भावयन्तीत्यर्थः । प्रादेशस्य सम्बन्धी(नी) या अङ्गुलिः प्रादेशाङ्गुलिः । प्रादेशो नाम हस्तचतुर्थो भागः तां भावयन्तीति यावत् । भाविनीत्यध्याहारः । व्यवहितादनुषङ्गो वा । ऊर्ध्वगा ऊर्ध्वमुखी-त्यर्थः । तदनेन रेखाया ऊर्ध्वभागस्य पृथुत्वमुक्तम् । नाम च रूढ्या ॥ २७ ॥

**मधुव्रता कण्ठगता परीता श्यामतः स्वयम् ।**
**आचारसौष्ठवं तत्र विदधाति न संशयः ॥ २८ ॥**

या खलु कण्ठगता श्यामतः श्यामवर्णेन परीता व्याप्ता कण्ठे च व्याप्तेत्यर्थात् सिध्यति । तदनेनैतदुक्तं—या कण्ठे सर्वत्र व्याप्ता श्यामवर्णा प्रसरति सैषा मधुव्रता नाम । अस्याः फलं—तत्र तस्मिन् पुरुषे सौष्ठव-मङ्गसौन्दर्यविज्ञानशिल्पादिसौन्दर्यमेतत् सर्वमपि विदधातीति भावः । मधु-व्रतसंज्ञया श्यामवर्णत्वं द्योतितम् ॥ २८ ॥

---

१. 'तात्तद' ख. ग. घ. पाठः. २. 'धुसं' ग. घ. पाठः.

महादेव्या लक्षणमाह —

**या हारस्थानरेखासु प्रोन्मुखी परिवर्तते ।**
**अनया कान्तिमाप्नोति पुरुषः पुष्कलां ध्रुवाम् ॥ २९ ॥**

(इति ।) अस्ति खलु महात्मनां पुरुषाणां हारस्थानरेखासु या हारस्थाने रेखाः प्रसिद्धा वक्ष्यमाणलक्षणाः तासु प्रोन्मुखी प्रकर्षेणोर्ध्वमुखी परिवर्तते परितः सर्वतो वर्तते । ऊर्ध्वमुखीत्वज्ञाने कारणं सूच्यग्रवदूर्ध्वभागस्य तनुता । एषा कान्तिं फलं विदधाति । तत्रापि न तन्मात्रम्, अपितु पुष्कलां सकलोमङ्गोपाङ्गोपेताम् । तत्राङ्गान्यलङ्काराः उपाङ्गानि भूषणानीति विभागः । न पुनरेतावत्त्वम् । किन्तु ध्रुवां नित्यामचञ्चलामिति यावत् । बाल्यादारभ्याथवा जन्मनः प्रभृति यावन्मृतिपर्यन्तं गच्छतीति वाक्यार्थः ॥ २९ ॥

योगिनीलक्षणमुच्यते —

**हृदये वर्तुलाकारा रक्तवर्णा क्वचित् क्षता ।**
**रेखा महत्सु विज्ञाता योगशीलत्वदायिनी ॥ ३० ॥**

(इति ।) महत्सु प्रसिद्धमहत्सु सनकादिषु अस्तीति प्रसिद्धा पुराणादिषु । या हृदये वर्तुलाकारा वर्तुल आकारो यस्याः । आकारोऽङ्गविन्यासः । रक्तवर्णा रक्तो वर्णोऽस्याः नान्यः कश्चित् । क्वचित् क्षता विच्छिन्ना । असौ योगशीलत्वदायिनी स्वाश्रयस्य पुरुषस्य स्त्रिया वा योगशीलत्वं योगाभ्यासशीलत्वं ददाति । इत्ययमस्याः स्वभावः ॥ ३० ॥

रुक्ममालिकाया लक्षणमाह —

**दोर्मूलयोः पञ्चसन्धिनिम्ना नैवात्र सङ्गता ।**
**श्यामाकारा पृथुः स्वर्णाकारा तु तलमूलतः ॥ ३१ ॥**

(इति ।) मूलतः स्वर्णाकारा मूले काञ्चनप्रभा काञ्चनरेखा दोर्मूलयोर्वर्तेत । असौ च पञ्चसन्धिनिम्ना पञ्चसङ्ख्याकेषु सन्धिषु पञ्चस्थानेष्विति यावत् । तर्हि सा नैवात्र सङ्गता । सङ्गता नाम काचिद्रेखा । तस्याः फलमत्र

---

१ 'न्ति' ख., 'न्ति वि' घ. पाठः २. 'लाङ्गो' क. ख. पाठः. ३. 'स्याः वर्तुलाया आकार इवाकारो यस्याः । आ' क. ख. ग. पाठः. ४. 'र्णो यस्याः', ५. 'त्वं च द' क. पाठः. ६. 'सौ प' घ. पाठः.

नास्तीत्यर्थः। तस्या विभूतिभङ्गोऽनल्पः फलम्, अस्यास्तु न सा, प्रत्युत विभूतिरेव इति भावः। दोर्मूलयोः रेखामात्रमपि शुभदम्। अथवा रेखास्थानवर्णस्यापि शुभफलदायित्वम्। औन्नत्यादेश्च। तत्र काचिदुक्तप्रकारा वर्तेत मूले च वर्तेत तदुक्तं फलं भवेदिति वाक्यार्थः। पृथुः स्वतः पृथुतमा सर्वत एकरूपा। श्यामाकारा श्यामवर्णा। अनेन विशेषणद्वयेन सञ्ज्ञतायाः स्वरूपकीर्तनम्॥ ३१॥

वारिणीलक्षणमाह—

**बाहुमध्यगतो योऽयं सन्धिः सन्धानभङ्गुरः।**
**तदन्तर्वर्तिनी काचिद् रेखा सा वारिणी मता॥ ३२॥**

(इति।) सर्वेषां हि प्रत्यक्षभूतः स्थूलतमः कश्चित् सन्धिः बाहुमध्यगतो विद्यते। तत्र या रेखा अविच्छिन्नवर्तिनी दृश्यते सा वारिणी नाम ॥ ३२॥

तस्याः फलमुच्यते—

**वज्रानुकारी सततं प्रस्फुटन्मुक्तमूर्धजः।**
**युद्धे जहाति सर्वांस्तान् स्वप्राणानरिसन्निधौ॥ ३३॥**

इति। अयमसौ वारिणीसङ्गतः पुरुषः अरिसान्निधौ सर्वांस्तान् स्वासून् जहाति। सर्वांस्त्यजति। सर्वानित्यनेन स्वसम्बन्धिनामपीति लक्ष्यते। प्रस्फुटन्मुक्तमूर्धजः प्रस्फुटन्तः मुक्ताश्च मूर्धजाः केशाः यस्येति विग्रहः। अनेन तल्लक्षणमुक्तम्। यः प्रस्फुटन्मुक्तमूर्धजो युद्धे चरति सोऽनया सङ्गतः पुरुष इति। तथागतं ज्ञात्वानेन लक्षणेन भूपादिभिस्तत्प्रेरणाय प्रेरितव्यमिति सिद्धम्॥ ३३॥

रोधिकालक्षणमाह—

**यस्यास्ति करसंसर्गे स्फोटः स्वेदश्च युद्धगः।**
**सर्वानपि निरोद्धुं स प्रयतेत न संशयः॥ ३४॥**

इति। रोधिकाफलम्। यस्य खलु पाणिभ्यां परस्परसंसर्गे स्फोटः प्रस्वेदश्च स युद्धगः युद्धभूमिं गतः सर्वान्नरान् स्वसहायभूतानपि निरोद्धुं शत्रुं प्रतिगन्तुं प्रवृत्तानिति शेषः। प्रयतेत प्रयत्नं करोति। स्वयमतिशयेन भीत इत्यर्थः। पाणिभ्यां संसर्ग आत्मीयाभ्याम्। आत्मीयान्यदीयाभ्यां वा। अनेन रोधिकावतः पुरुषस्यैतल्लक्षणमुक्तम्॥ ३४॥

१. 'त च मू' घ. पाठः. २., ३. 'र्वान्नान्', ४. 'त्रा' ग. घ. पाठः. ५. 'यः॥ य' घ. पाठः.

रोधिकायास्तूच्यते —

**नाभेरुपरि सा प्रोक्ता वलीनां मध्य ऊर्ध्वगा ।**
**विभाति विपुलाङ्गाङ्गसङ्गता मधुराकृतिः ॥ ३५ ॥**

(इति।) मधुराकृतिः मधुरवर्णा स्निग्धप्रियवर्णेति यावत् । वलीनां मध्ये वलीनां मध्यप्रदेशेन सहोर्ध्वगामिनी या विभाति सा रोधिका प्रोक्ता इति वाक्यार्थः ॥ ३५ ॥

**योनिस्तु नाभिं परितः प्रवृत्ता या तनुस्थितिः ।**
**तया विभाति लोकोऽयं विद्वांश्च परिकीर्त्यते ॥ ३६ ॥**

एतद्योनिलक्षणम् । या हि नाभिं परितः नाभेः परितः सर्वतः तनुस्थितिरस्थिभूतस्थितिः अनुमेयमात्रप्रायरूपा तिष्ठति सा योनिः । तया सर्वो लोकः विभाति विभूतिभिर्भाति फलभूतैः । विद्वांश्च परिकीर्त्यते । विद्वत्ता[2] च फलं भविष्यतीत्यर्थः । [*अङ्गाङ्गशब्देनाङ्गोपाङ्गान्युच्यन्ते । तत्राङ्गानीत्यन्तर्गताः अप्रत्यक्षाः प्रायशो रेखाः । उपाङ्गानि तु स्फुटाः । बहिर्भूता इत्यवगन्तव्यम् । अस्याश्च ता उभयप्रकारा अपि न भिद्येरन् । शिखर[3]त्वाद् इति] ॥ ३६ ॥

प्रज्ञालक्षणमाह -

**नाभेरधस्ताद् विपुला त्रिशिखा प्रज्वलत्तनुः ।**
**विदधाति महीमस्य भ्रष्टामपि पुनः पुनः ॥ ३७ ॥**

(इति ।) या नाभेरधस्ताद् विपुला पृथुलाङ्गी त्रिशिखा शिखरत्रयसम्पन्ना रेखा[4] सा प्रज्ञा शब्दयते । तस्याः फलम्— एषा येषामत्यन्तमन्तरङ्गभूता परिस्फुरति तेषां पुनः पुनर्भ्रष्टामपि भूमिं तेभ्यः शक्त्यादिभ्य आदाय विदधाति । पुनःपुनरित्यनेन लक्षणस्य दृढत्वमुक्तम् । प्रज्ञया हि सर्वो लोको व्यवहरति इति हि लौकिकभाषा । तदयमत्र भावः । अनया रेखया सम्पन्नानां शास्त्रार्थादिपरिचय प्राचुर्येण भविष्यति । तत्र च तत्फलावाप्तिः इहलोकसम्बन्धिनी च[5] परलोकसम्बन्धिनी च । तत्र इहलोकसम्बन्धिन्युक्ता साक्षाद् अन्या त्वर्थसिद्धा इत्यवगन्तव्यम् ॥ ३७ ॥

१. 'तिः मधुरव' घ पाठः. २ 'त्ता ॥' क ग पाठः. ३. 'राद्', ४. 'खा प्र' ख. पाठः. ५. 'च । त क. ग. पाठः.

* वलयान्तर्गतो भागः पूर्वश्लोकान्वयीति भाति ।

मन्दा प्रभावती श्लक्ष्णा द्वयोरूर्वोः स्फुरत्तनुः ।
शिखाभिर्बहुभिः (शि? श्लि)ष्टा मान्द्यमस्य परि-
[स्फुरेत् ॥ ३८ ॥

अनेन मन्दाफललक्षणे कथ्येते । या खलु द्वयोरूर्वोः प्रभावती बह्वीभिः प्रभाभिर्विचित्रतरा विचित्रवर्णेति यावत् । श्लक्ष्णा स्पर्शने सति स्निग्धा बहुशिखा परिस्फुरति सा मन्दाह्वया रेखा । एषा यस्य विद्यते तस्य मान्द्यं सर्वक्रियासु परिस्फुरति इति ॥ ३८ ॥

महाप्रभालक्षणमाह —

जान्वोर्वृत्तपरिस्फूर्तिर्दक्षिणेन विशेषतः ।
महाप्रभेति सद्भिस्तु सती सा परिकीर्त्यते ॥ ३९ ॥

(इति ।) या खलु पुंसां महाप्रभाणां जान्वोर्विशेषतो दक्षिणे वृत्तपरिस्फूर्तिः तिर्यग्दक्षिणतः वृत्ताकारस्य परिस्फूर्तिः एषा महाप्रभा सद्भिः परिकीर्त्यते । अस्याः फलं सती सेति । सा सती, पुण्यफलं ददातीति यावत् । अनेनैतेषां महाप्रभाणां महाप्रभारेखासम्पन्नानां पुरुषाणां पुण्यकर्मत्वं संपद्यत इति ॥ ३९ ॥

वेतालिकालक्षणमाह —

जङ्घागतः कटुस्पर्शः कृष्णवर्णः पृथुः स्फुरन् ।
आपार्ष्णिदीर्घः सुनरां वेताली परिकल्प्यते ॥ ४० ॥

(इति ।) जङ्घागतः उभयजङ्घामूलादारभ्य पार्ष्णिपर्यन्तं प्राप्य दीर्घाकारेण स्थितः कटुस्पर्शः स्पर्शे सति खरः स्फुरन् सिरामात्रतया क्वचित् स्फुरन्, कुतः, पृथुत्वात् । वर्णतस्तु कृष्णः । असौ वेतालीति परिशब्द्यते ॥ ४० ॥

फलमाह —

सोष्मा प्रज्वलिताङ्गः स्यात् त्वग्दोषी कटुभाषणः ।
अल्पव्ययो व्यासरोमा मृदुपादः स्फुरन्नरः ॥ ४१ ॥

इति । सोष्मा ऊष्मप्रधानः प्रज्वलिताङ्गः कान्तिमान् त्वग्दोषी प्रायस्त्वग्दोषव्याधिप्रधानः कटुभाषणः तीक्ष्णतया बहुभाषी । स्फुटार्थमन्यत ॥ ४१ ॥

१, २, ३, 'वै', ४, 'ति श' क. पाठः.

रोधनिकालक्षणमाह —

**नखयोर्मूलभागे तु सिरान्तर्गूढवर्तिनी ।**
**[अल्पेतरं बहुफलं सङ्कल्पं सा प्रयच्छति] ॥ ४२ ॥**

(इति ।) सा रोधनिका या प्रधानभूतयोरङ्गुल्योर्यौ नखौ तयोर्मूले सिरान्तर्गूढवर्तिनी । या तत्रत्या सिरा तस्या अन्तर्निम्नभागे गूढवर्तिनी गूढतया वर्तते सा रोधनिका । फलं सङ्कल्पं सा प्रयच्छति इति । सा सङ्कल्पं प्रयच्छति । न तन्मात्रम्, अपितु अल्पेतरमनल्पमित्यर्थः । कीदृशं, बहुफलं, बहूनि फलानि यस्मिन् यस्मिन्नुद्देश्यतया सन्ति तमित्यर्थः ॥ ४२ ॥

**सुप्रसन्नमुखः कम्बुकण्ठः प्रोज्ज्वलदीधितिः ।**
**चतूरोमा पृथुतमः कण्ठमूलं गतो नखः ॥ ४३ ॥**

अनेन मञ्जुलालक्षणं प्रदर्श्यते फलं च । रोमचतुष्टयप्रमाणः । अत एव पृथुतमः कण्ठमूलगतः नखः खवर्जितः खेनाकाशेन वर्जितः यो निम्नभाग इति शेषः । सा मञ्जुला । पूर्वार्धेन फलम् । अनया सम्पन्नः कम्बुकण्ठः कम्बुसमानकण्ठः प्रोज्ज्वलदीधितिर्भवति । कम्बुसमानकण्ठे प्रोज्ज्वला दीधितिर्यस्येति कण्ठशोभाफलमुक्तम् । शिष्टं स्पष्टम् ॥ ४३ ॥

वैद्युतालक्षणं वक्ति —

**ललाटरोमसन्धौ तु दीर्घिकाव(त्) स्वयं स्थिता ।**
**उक्तिप्रत्युक्तिनिपुणः कविः शान्तः स्वयं प्रभुः ॥ ४४ ॥**

इति । फलम् । अयमत्रार्थः — ललाटे रोमसन्धौ ललाटे या रोमसन्धिः शिरोरोमसन्धिः संसर्गस्थानम्, अत्र दीर्घिकाकारे चतुरङ्गुलपरिमिता या रेखा वर्तते सा वैद्युता नाम । अनया पुरुषः उक्तिवैचित्र्यतत्परः कविः स्वयं शान्तः विवेकी च भवति इति । ऊर्ध्वौज्ज्वल्यं च धर्मोऽत्र स्फुटः विद्युद्वर्णता च भवति इति नामतोऽर्थः ॥ ४४ ॥

व्रतलक्षणमाह —

**कुक्षिभागे स्वयंगूढो बहुशाखासमुद्भवः ।**
**स्वकर्मानन्तनैपुण्यं व्रतसंज्ञा प्रयच्छति ॥ ४५ ॥**

---

१. 'धिका' ग. पाठः. २. 'म्बुकण्ठस', ३. 'म्बुकण्ठे समाने प्रो', ४ 'शेषं स्प' क. पाठः. ५. 'त', ६. 'तं' क. ख. ग. पाठः. ७. 'ता' ख. पाठः.

(इति ।) व्रतसंज्ञा रेखा कर्मसु सर्वेषु पुण्यपापादिषु मिश्रेषु च शिल्पादिषु अनन्तमपरिमेयं नैपुण्यं प्रयच्छति । किं तल्लक्षणमित्यत आह— कुक्षिभागगतः नाभिदेशाच्चतुरङ्गुलं दूरं गत्वा ऊर्ध्वोदरदेशे गतः स्वयं गूढः वलिसम्बन्धादिति शेषः । सङ्करादिति वा (पाठः? ।) एवंभूतो यो निम्नभागः स व्रतमित्युच्यते । व्रतसंज्ञा रेखेति यावत् । अत्र व्रतादिचरत्वमनया सम्पन्नस्य पुरुषस्य भवति इति नामतोऽर्थः । स च फलेऽन्तर्भवति ॥ ४५ ॥

**मदाघूर्णा पार्ष्णिभागे प्रादेशाङ्गुलसन्तता ।**
**अस्याः प्रयत्नसञ्चारी विच्छिन्नः स्वजनैरपि ॥ ४६ ॥**

सा मदाघूर्णा या खलु पार्ष्णिभागे जङ्घापर्यन्तं प्रादेशाङ्गुलेन परिमाणेन परिमिता तत एव सन्तता अविच्छिन्ना । अस्याः फलं — प्रयत्नसञ्चारित्वं कर्मविशेषपरिज्ञानं फलपरिज्ञानं च विना प्रयत्नेन प्रवृत्तिः स्वजनैर्विच्छेदश्च अत्र फलद्वयम् । स्वैः पुत्रादिभिः लोकैश्च वर्जनम् । आत्मना तद्वर्जनं च इति वाक्यार्थः । नामतस्तु मदाघूर्णया मदपरवशया सह संसर्गः । मद-सम्बन्धस्तु तस्या मदिरावशात् इति ॥ ४६ ॥

गतप्रज्ञालक्षणमाह —

**हस्तयोर्बहुरोमत्वं वर्तुलाकारता तथा ।**
**कटकस्थानसञ्चारी गतप्रज्ञेति कथ्यते ॥ ४७ ॥**

(इति ।) यस्य खलु बाह्वोर्बहूनि रोमाणि तथा वर्तुलाकारता च वृत्तबृंहितत्वं च तस्य कटकस्थानसञ्चारी कटकाख्याभरणविशेषो यत्र नि-बध्यते तन्निबन्धस्थाने सञ्चारी तत्र वर्तमान इति यावत् । यो निम्नभाग इति शेषः । सा गतप्रज्ञा । फलं तस्याः शास्त्राभ्यासादिना प्राप्तप्रज्ञस्य तद्-भ्रंश एव इति नामतः सिद्धं भवति इति पृथङ् नोच्यत इति भावः ॥ ४७ ॥

चञ्चलालक्षणमाह —

**अङ्गुलीषु नितान्ता या सामूलान्तमवापिता ।**
**केनाप्युत्तमयोगेन चञ्चला साधुवस्थितिः ॥ ४८ ॥**

(इति ।) सा चञ्चला या केनाप्युत्तमेन योगेनाङ्गुलीषु पादाङ्गुली-ष्विति यावत् । आमूलान्तं मूलादारभ्यान्तपर्यन्तमवापिता प्रापिता । अवे-

त्पुच्छसर्पेण परीत्यर्थेन शिखरसंयुक्तत्वमुक्तम् । सा चञ्चला एवम्भूता रेखा चञ्चला । अस्याः फलमाह — साध्रुवस्थितिः । अध्रुवस्थितिरिति पदच्छेदः । अस्थिरस्थितिरित्यर्थः । अनया सम्पन्नः पुमानस्थिरस्थितिः सर्वत्र इत्युक्तं भवति । रोमशब्देन परिचय उच्यते । उत्तमो नाम विशिष्टः पुरुषः ॥ ४८ ॥

रोमकूपिकालक्षणं[3] कथयति —

**रोमकूपाः पृथुतरा विद्यते यस्य संसदि ।**
**सभाप्रकोपस्तस्य स्याद्रेखा कण्ठगता रुरुः ॥ ४९ ॥**

यस्य खलु पुंसः स्त्रिया वा रोमकूपाः पृथुतरा भवन्ति पृथुतरमूलदेशा भवन्तीत्यर्थः । तस्य संसदि सभायां सभाप्रकोपः सभास्थितजनप्रकोपः विद्यते ध्रुवमेवानुभूयते । सा रेखा पुनः केत्यपेक्षायामाह — रेखा कण्ठगता रुरुरिति । रुरुर्नाम पुरुषावयवविन्यासभेदः । या कण्ठस्थिता रुरुः सा पुना रेखेति ॥ ४९ ॥

पुलिन्दरक्षो लक्षणमाह —

**नयनान्तसंस्थिता धन्या रक्तवर्णा विचक्षणा ।**
**प्रतोदसंस्थितिस्तस्याः[6] प्रतोदः फलमुच्यते ॥ ५० ॥**

या नयनान्तसंस्थिता नयनान्तः कटाक्षः तत्र संस्थिता धन्या विशिष्टतरा रक्तवर्णा रक्तनिभा विचक्षणा विचक्षणवदतितरामुज्ज्वला रेखा सा पुलिन्दरक् । तस्याः प्रतोदाकृतित्वमस्ति । प्रतोदो नाम कश्चन शिक्षार्थो दण्डः पाशाकुशान्वः, तदाकृतिः तस्य आकृतिरिवाकृतिर्यस्याः सा तथा । प्रतोदसंस्थितिरिति वा पाठः । प्रतोदस्य संस्थितिः संस्थानं तद्वत् संस्थानं यस्या इति तदा विग्रहः । प्रतोदस्तस्याः फलम् । अनया सम्पन्नो[7] निरन्तरप्रतोदो भवतीति भावः । पुलिन्दाः किराताः तेषामेषा प्राचुर्येण विद्यत इति पुलिन्दरक् नाम ॥ ५० ॥

क्रमलक्षणमाह —

**क्रमे क्रमे प्रवृत्तिः स्यात् क्रमयुक्तनृणामिह ।**
**स तु प्रवृत्तिसम्पन्नो मस्तकस्थः प्रशस्यते ॥ ५१ ॥**

---

१ 'त' क. ख. ग. पाठः. २. 'विशेषः पु', ३. 'काया ल' क. पाठः. ४. 'स्थि' क. ख. घ. पाठः. ५. 'चलक्ष' क. ख. ग. पाठः. ६. 'तं तस्या.' ख. पाठः. ७. 'न्नश्चिर' ख. ग.. 'न्नश्चि' घ. पाठः.

यो मस्तकस्थः क्रमेणोन्नतो भागः प्रशस्यते सर्वैरेव लोकैस्तज्ज्ञैः प्रशस्यते आद्रियते प्रवृत्तिसम्पन्नः क्रमेण क्रमेणोद्भवेन प्रवृत्त्या सम्पन्नः संवर्धितः य एवम्भूत उन्नतो भागः मस्तकस्थः ललाटोर्ध्वभागस्थः मध्यदेशमारभ्य स क्रम उच्यते। क्रमो नाम लक्षणमुच्यत इत्यर्थः। तत्फलं पूर्वार्धकथितम्। तस्यायमर्थः - क्रमे क्रमे पदे पदे प्रवृत्तिः शुभाशुभव्यामिश्राः प्रवृत्तयः। जातावेकवचनम्। एकयापि प्रवृत्त्या विना स पुरुषः कश्चित् कालं नाधितिष्ठति। किञ्चिदपि वस्तुं न तूष्णीमवस्थानं करोतीति भावः॥ ५१ ॥

कम्रालक्षणमुच्यते —

**अतीव सुभगाकारा नीलाकृतिरथोच्यते।**
**फलं प्रवृत्तिः सर्वासु क्रियासु प्रविचक्षणैः॥ ५२॥**

अयमर्थः—अतीव सुभगाकारा सुभगतरेत्यर्थः। शोभनाकृतिः नीलाकारा नीलवर्णा या रेखा पूर्वोक्तसन्निधावित्यर्थः (सा) कम्रालक्षणसंज्ञाता। वस्तुतश्च तस्याः फलं सर्वासु क्रियासु विचक्षणैः सह निरन्तरप्रवृत्तिः। विचक्षणा विद्वांसः। तैः साकम्। अनया रेखया सम्पन्नः पुमान् निरन्तरं प्रवर्तते। कुत्रेति। सर्वासु क्रियासु शुभाशुभव्यामिश्रलक्षणासु इति॥ ५२॥

हरीलक्षणमाह —

**रोमसन्धौ ललाटे यः[2] पुरुषः पञ्चवर्णवान्।**
**विन्यासभेदः स हरी मूर्खता तत् प्रशस्यते॥ ५३॥**

ललाटे रोमसन्धौ रोम्णां सन्धौ सन्धिदेशे। अरोमविशिष्टस्थले नेति शेषः। पुरुषः दर्शने सति पुरुषत्वेन प्रतीयमानः। पञ्चवर्णवान्। प्रशंसायां मतुप्प्रत्ययः। प्रसिद्धाः पञ्चवर्णाः यस्य सन्ति। असौ विन्यासभेदः हरीति कथ्यते। अस्याः फलं 'मूर्खता तत् प्रशस्यत' इति। तत् तत्र तस्मिन् पुरुषे प्रशस्यत इत्यर्थः। न मूर्खता च दूषणं भवतीति यावत्॥ ५३॥

धर्मालक्षणमाह —

**विशिष्टस्फोटसंभिन्नः करमध्यगतस्तु यः।**
**निम्नदेशः पृथुफलः स धर्मो परिकल्प्यते॥ ५४॥**

---

१. 'गतरे' क. पाठः २. 'रिमूर्ख' न पाठः ३. 'ति। अ' क. पाठः.

करमध्यगतो निम्नभागः विशिष्टस्फोटसंभिन्नः विशिष्टेन स्फोटेन स्फुटयत इति स्फोटः चिह्नं तेन संभिन्नः सहितः । तस्य विशिष्टत्वं नाम बृहत्त्वम् । पृथुफलः पृथूनि फलानि यस्य स तादृशः धर्मेति कथ्यते । धर्म इति वा पाठः । अत्र पृथुफल इत्यनेन यानि यान्यभीप्सितानि फलान्येतस्य पुरुषस्य तानि तानि भवन्त्येव इति फलमुक्तम् ॥ ५४ ॥

**तले पाणिगते यस्य मूलादारभ्य मध्यगा ।**
**रेखा प्रवर्तते सा तु धनानां दायिनी मता ॥ ५५ ॥**

यस्य खलु पुंसः तले स्थले पाणिगते पाणिसम्बन्धिनि । पाणिर्नाम हस्तस्य पञ्चशाखस्य प्रादेशमात्रपरिमितो देशः । तत्सम्बन्धिनी मूलादारभ्य मध्यगा मध्यमां गच्छन्ती रेखा प्रवर्तते या सा तस्य धनानां दायिनी मता । धनानामभीप्सितानां विशिष्टानामर्थानां दायिनी विशिष्टार्थदात्रीत्यर्थः । धनदेत्यत्र नाम । धनप्रदेति वा पाठः । नाम्नैव फलमुक्तमिति पृथङ् नोच्यत इति भावः ॥ ५५ ॥

**वामभागादुपक्रम्य गच्छन्ती तु कनिष्ठिकाम् ।**
**आत्मनः प्रसृतां तां तु गोदामाहुस्तु तत्प्रदाम् ॥ ५६ ॥**

आत्मरेखाया (यात्रायमभिदारभ्य ?) वामभागादारभ्येति । अत्राय-मभिप्रायः — आत्मरेखां संस्पृश्य मध्ये विच्छेदाभावेन विना तेन भागेन गच्छन्ती कनिष्ठिकामिति । या सेत्यध्याहारः । तां गोदामाहु(स्तर्थलां च ? स्तु तत्प्रदाम्) इत्यनेन गोदालक्षणं फलं चोक्तमिति भावः ॥ ५६ ॥

**गन्त्री तु पादतलयोर्हस्तयोश्च पृथक् कृता ।**
**तस्यास्तु नित्यगमनमर्थानां च पृथक् स्थितिः ॥ ५७ ॥**

या खलु पादतलयोः । अत्रात्मन इत्यध्याहारः । आत्मनः आत्मरेखायाः पृथक् स्थिता असंस्पर्शेन स्थिता हस्ततलयोश्च । तस्यास्तु फलं

---

१. 'न्नः । त', २. 'हत्फलः', ३. 'तान्ये' क. पाठः. ४. नी ध' घ. पाठः. ५. 'ता । अभीष्टविशिष्टार्थदायीति भावः । ध' क. पाठः. ६. 'त्रायाभ्राय' घ. पाठः. ७. 'यद्विरार' ग. पाठः.

---

* इत उपरि ग. पाठो लुप्तः ।

नित्यगमनम् । अर्थानामित्यत्रापि सम्बध्यते । अर्थानां पृथक्स्थितिश्च । अयमर्थः — पादतलयोरात्मरेखाया असंस्पर्शेन वर्तते हस्ततलयोश्च सा गन्त्री । उभयत्रापि तुशब्दौ फलद्वयस्योभयत्रापि क्रमेण सम्बन्धं द्योतयतः । पादतलयोर्गन्त्रीरेखायाः अर्थानां नित्यगमनं फलम् । हस्ततलयोश्च तस्याः अर्थानां पृथक् स्थितिः इति ॥ ५७ ॥

महोत्पातालक्षणमाह —

महोत्पाता प्रसूतिर्या तर्जनीमध्यपर्वगा ।
उभयोश्चेद् बहुतरमनर्थं प्रविधास्यति ॥ ५८ ॥

या तर्जनीमध्यपर्वगा वृत्तपरिणामा अन्येन केनचिद्युक्ता वियुक्ता वा वृत्ताकारा रेखा सा महोत्पाता नाम । नामत एव फलसिद्धिः । फलान्तरं दर्शयन्नाह — उभयोश्चेद् हस्तद्वयतर्जनीमध्यपर्वगा । तया तथाविधया बहुतरोऽनर्थः सञ्जायते इति । महोत्पातो नाम सकलपापातिशयितः पापः । तत्परिपाको वा । अनेनैतदुक्तं भवति — अनया सम्पन्नस्य पुरुषस्य कस्यचिन्महापातकादि जायेत । कस्यचन तत्फलं भवेत् । कस्यचन पुनर्महान् सङ्कीर्णोऽनर्थो जायेत । सर्वपापसमुचितं विशेषहेतुश्च तस्या न्यूनतान्यूनते पौष्कल्यं चेति भावः ॥ ५८ ॥

रेखालक्षणमाह—

चिबुकाग्रात् समारभ्य ह्यधराधरसंस्थिता ।
पृथुमूर्तिः सुनिम्नस्था दीर्घमायुः प्रदास्यति ॥ ५९ ॥

या चिबुकाग्रात् । चिबुकप्रदेशादित्यर्थः । समारभ्य, अधराधरसंस्थिता । अधरप्रदेशस्य योऽधरः अधःस्थितः प्रदेशः तस्मिन् संस्थिता पृथुमूर्तिः पृथुतरा मूर्तिर्यस्याः सा । मूर्तिशब्देनाकृतिरुच्यते सुनिम्नस्था सुतरां निम्नमगाधं स्थानं स्थितिर्यस्याः सा तथाभूता रेखा । तस्याः फलं दीर्घमायुः प्रदास्यति । कर्तृत्वोपचारो ज्ञापकेऽपि इत्यनवद्यम् ॥ ५९ ॥

विद्युल्लक्षणमाह —

हारभागे परिन्यूना परिवेषाकृतिर्ध्रुवा ।
रेखा स्तनोपरि वरा विभूतिं तस्य दास्यति ॥ ६० ॥

---

१. 'कः' ख. पाठः २. 'त' घ. पाठः.

अयमर्थः—हारभागे हारस्थाने परिन्यूना बहुला । अतितरामल्पत-
रेत्यर्थः । परिवेषाकृतिः परिवेषस्याकृतिरिवाकृतिर्यस्याः सा । परिवेषो नाम सूर्यचन्द्रमण्डलयोः परितः मेघरश्मिसम्बन्धवशाज्जायमानः कश्चित् तेजोविकारविशेषः श्यामपीतरक्ताकारस्तद्वदाभासमानेत्यर्थः । ध्रुवा नित्या । सैषा विद्युन्नाम । तस्याः फलं विभूतिं तस्य दास्यतीति । या यमाश्रयते स पुरुषस्तच्छब्देनोक्तः । स्त्री वा । तस्मै सा विभूतिं प्रदास्यति । वयोऽर्धेऽतिक्रान्ते विभूतिं तस्य दास्यत इत्यर्थः । षष्ठी चतुर्थ्यर्थे । अत्रापि पूर्ववद् ज्ञापके कर्तृत्वोपचारः । सर्वत्राप्येवं द्रष्टव्यम् ॥ ६० ॥

**मण्डलानि विचित्राणि रेखाकाराणि यस्य वै ।**
**कण्ठे विभान्ति तस्यैषा कण्ठका दीर्घलेखिनी ॥ ६१ ॥**

यस्य खलु पुंसः रेखाकाराणि रेखामयानि विचित्राणि नानावर्णानि मण्डलानि वृत्तानि कण्ठे विभान्ति, तस्य तत्र कण्ठे दीर्घगा दीर्घं गच्छन्ती लेखिनीत्येतन्मुल्लेखनं ज्ञापकं लिङ्गं यस्याः रेखाया इत्यर्थः सिध्यति । सैषा कण्ठकेति कथ्यत इति शेषः ॥ ६१ ॥

अस्याः फलमाह —

**अतिसम्भोगसम्मिश्रा विहारास्तत्र सुप्रभाः ।**
**जायन्ते नियतं तत्र दुःखान्यपि च तत्र वै ॥ ६२ ॥**

अतिशयेन यः सम्भोगः स्रक्चन्दनवनितादीनामनुभवः । तेन सम्मिश्रा विहाराः क्रीडाविशेषाः । सुप्रभाः शोभनप्रभाः । तत्र तद्वति पुरुषे योषिति वा । जायन्ते तदैव प्रभृति भवन्तीत्यर्थः । नियतं नित्यदेत्यर्थः । आनुषङ्गिकं फलान्तरमप्याह -- दुःखान्यपि च तत्र वै इति । तत्र दुःखान्यपि च भवन्ति । वै इति प्रसिद्धौ । अनुभूयन्ते दुःखान्यप्यानुषङ्गिकानीत्यर्थः ॥ ६२ ॥

गृहप्रदालक्षणमाह--

**स्तनयोरन्तरा निम्नमूर्तिराख्या गृहप्रदा ।**

या स्तनयोरन्तरा निम्नमूर्तिः रेखा सा गृहप्रदा नाम । निम्ना मूर्तिराकृतिर्यस्याः सा । स्तनयोरन्तरा वर्तमाना गृहप्रदा कथ्यते ।

तस्याः फलमाह —

**गृहाण्यपि प्रदीयन्ते तथा सद्वृत्तयानया ॥ ६३ ॥**

सद्वृत्तं वर्तुलाकारं यस्यास्तया गृहाण्यपि प्रदीयन्ते । असम्भावितान्यपि सद्मानि भवन्तीत्यर्थः ॥ ६३ ॥

**शुभा स्याद् धूमवल्लीव त्रिशिखा ज्वलन्ती नाभितः परे ।**
**तस्याः कम्राणि रूपाणि दीर्घमायुश्च भूतिकृत् ॥ ६४ ॥**

अनया धूमवल्लीलक्षणमुच्यते सपदया कारिकया । या शुभा नाभितः परे भागे ज्वलन्ती जाज्वल्यमाना । त्रिशिखा शिखात्रयोपेता भवति, तस्याः फलमुच्यते इति शेषः । कम्राणि रूपाणि शोभावहानि रूपाणि । भूतिकृद् दीर्घमायुश्च इति । एवं चपदेन स्थानेन सह फलं लक्षणं चोक्तमिति सर्वमनाकुलं च ॥ ६४ ॥

**मही कनिष्ठिकामूले व्यवधानं विना स्थिता ।**
**तया विद्यामवाप्नोति सामग्रीबन्धवर्जनात् ॥ ६५ ॥**

अयमर्थः—कनिष्ठिकामूले व्यवधानं विना साक्षादेव वर्तते, कनिष्ठिकासन्निधौ व्यवधानप्रतियोगित्वं कनिष्ठिकायां एव यन्निषिध्यते तया पुमान् विद्यामवाप्नोति । ननु सर्वेषामेव स्त्रीपुरुषाणां तस्याः सम्भवोऽस्ति, न विद्या दृश्यते क्वापि । अतो न तत्फलत्वं विद्यायाः । अत आह — सामग्रीबन्धवर्जनादिति । सामग्री नाम कारणसमाहारः । समवाय्यसमवायिनिमित्तकारणत्रयमिति यावत् । तस्या बन्धः प्रतिबन्धः । तद्वर्जनात् । तस्याभावाद्धेतोरित्यर्थः । अयमत्राभिप्रायः—विद्यारेखायां महीसंज्ञायां सत्यामपि विद्याफलं नोत्पद्यते तेषां, येषां तदाधाररेखा गुर्वनुवृत्तिरेखा च न स्फुटं प्रतिभासेते । भाग्यरेखा च नानुगुणा । नैतावन्मात्रेण तस्या विद्याफलत्वाभावः । सहकारिसमवधाने हि सर्वेषां फलहेतुत्वं दृष्टम् । सहकारित्वं च उपादानं प्रति निमित्तासमवायिनोः कारणयोः । अतो न कश्चिद् दोष इति । अनेन श्लोकेन महीलक्षणं तत्फलं चोक्तम् । മഹി= കനിഷ്ഠികേടെ ചുവട്ടിൽ തന്നോട്ടു കനിഷ്ഠികയോടിടയിൽ മററാരു രേഖയോടുകൂടാതെ വിലങ്ങത്തിൽ കരാഗ്രത്തിങ്കൽ നിന്നു ഉള്ളംകൈകനോക്കി ചെല്ലുന്നതു ॥ ६५ ॥

---

१. 'वेर्स नि' ग. पाठः. २. 'अ' क. ख. पाठः.

**तदन्तिकस्था निम्नाङ्गी या सा हृद्गतसत्त्वदा ।**
**तया जायामवाप्नोति तावत्यश्च प्रियाः पुनः ॥ ६६ ॥**

या वा तस्याः प्रकृताया विद्यारेखाया अन्तिके नित्यमेव वर्तते सा हृद्गतसत्त्वदा नाम । तया पुरुषो जायामवाप्नोति । जाया च पतिम् । अनेन सा जायारेखेत्युक्तं भवति । तावत्यः पुनः प्रियाः यावत्यस्तद्गताः । इतरा रेखा इति शेषः । प्रियाशब्देन च विशेषविवक्षा जायाशब्दपर्यायत्वमात्रमेवाभिप्रेतम् । जाया इति यावत् । अत्र सन्धिरेखाया उपरीति मन्तव्यं श्लोके । एवञ्चैतदुक्तं भवति — या विद्यारेखाया अधः सन्धिरेखाया उपरि वर्तन्ते रेखास्ताः प्रत्येकं जायासम्भवं सूचयन्ति । जायाशब्दश्चात्र परिणीतिविषयः[1] परिचितविषयो वा । न यदाकदाचित् सम्भोगमात्रपरिगृहीतां स्त्रीव्यक्तिमात्रमाचष्टे इति । नामावयवार्थस्तु हृद्गतं सत्त्वं हृद्गतं बलम् । मनोबलमिति यावत् । तद् ददातीति हृद्गतसत्त्वदा जायेति यावत् । जायायां हि सत्यां मनोबलं भवति प्रीत्युत्पत्तिद्वारेण पुत्राद्युत्पत्तिद्वारेण वेति । ഹൃദ്ഗതസത്ത്വദ മഹീഭട കീഴ്ബന്ധരേഖയോട ടയിൽ കരഭത്തിങ്കൽ നിൻവുള്ള കൈനോക്കിപോകുന്ന രേ കം ॥ ६६ ॥

आहारालक्षणमाह —

**मध्यमाया अधो या तु चन्द्राकारा तु वर्तते ।**
**साहारा फलमस्यास्तु सर्वराजपरिग्रहः ॥ ६७ ॥**

या तु मध्यमाया अधोभागे, व्यवधानं विनेत्यत्राप्यनुसन्धेयम् । नित्यमेव परिवर्तते साहारा : आहारेति छेदः । यद्यप्याहारेतिच्छेदायात्र न योगस्तथाप्याहरतीत्याहारा इत्यवयवार्थबलादेवमवगन्तव्यम् । यदि वा हारैवाहारा इति व्याख्यातव्यम् । चन्द्राकारा प्रतिपच्चन्द्राकारेत्यर्थः । अस्याः फलं सर्वराजपरिग्रहः । सर्वै राजभिः परिग्रहः परितः सर्वतः शयनासनभोजनादौ आदरादुपादानमिति यावत् । अयमत्राभिसन्धिः— हारारेखाया एकदेशोऽपि यदि कस्यचिद् भवेत् तर्हि तस्य राजसेवया वृत्तिः । फलं तु रेखासाकल्ये सकलं भवति । वैकल्ये तु विकलम् । स्त्रीणां तु

1. 'त' ख पाठः

यद्येषा तर्हि सर्वराजपरिग्रहः इत्यत्र सर्वदा राजपरिग्रहः । रत्नपुरस्सरं स्वभर्तृपरिग्रह इत्येवार्थः । तत्र च स्वभर्तृविशेषो भवति प्राभवं चेति ।

ഹാരഃ=മദ്ധ്യമേടെ താഴത്തു് മദ്ധ്യമേടെ ചുവട്ടിലെ ബന്ധരേഖയോടു് ഉള്ളംകൈയിൽ മേലേ അരികത്തെ ബന്ധരേഖയോടടിയിൽ പ്രതിപച്ചന്ദ്രനെപ്പോലെ ഇരിക്കുന്നതു്. തന്റെ അകത്തു് സ്ഫുടയായിട്ടു മറെറാരു രേഖയില്ലാതെ ഇരിക്കണം ॥

मन्दोष्णदालक्षणमाह —

**मन्दोष्णदा तु तदधो वर्तते मन्दगामिनी ।**
**मान्द्यमेव फलं तस्या धर्मादप्रच्युतिस्तथा ॥ ६८ ॥**

तदधः तस्या हारारेखाया अधः । मन्दगामिनी मन्दगतिर्मन्दस्थितिरिति यावत् । अस्पष्टेत्यर्थः । तस्याः फलं मान्द्यं प्रवृत्तिमान्द्यं, न बुद्धिमान्द्यम् । यद्यपि बुद्धिपुरस्सरत्वं प्रवृत्तेस्तथापि विचारजनितायां बुद्धौ विकासयुक्तायामपि सत्यां गुर्वादिभयाद् भाविविघ्नाशङ्कया च प्रवृत्त्यभावदर्शनाद् बुद्धिमान्द्यं विना प्रवृत्तिमान्द्यं घटते । अतोऽत्र प्रवृत्तिमान्द्यं विवक्षितं, धर्मादप्रच्युतिश्च फलम् । धर्मशब्दः पुरुषार्थान्तरोपलक्षणार्थः । अनया सम्पन्नः पुमान् पुरुषार्थेषु अन्यतमे तिष्ठतीत्यर्थः । नामतश्च फलान्तरं मन्दमुष्णं मन्दोष्णं, तद् ददातीति मन्दोष्णदा । यत् खलु खरोष्णं वस्तु तत् स्पर्शे सत्यस्य पुरुषस्य मन्दोष्णं भवति । किञ्च निदाघादौ उष्णवेदनादिश्च नास्य बहुतरं भवति प्रस्वेदादिश्चेत्यवगन्तव्यम् ।

മന്ദോഷ്ണദഃ ഹാരരേടെ താഴത്തു് അനാമികയോടു് ചുണ്ടാണിയോടിടയിൽ ചന്ദ്രക്കലപോലെ തന്നൊട ഹാരയോടിടയിൽ സ്പഷ്ടയായി[1] മറെറാരു രേഖയില്ലാത്തതു്. കഴുത്തിനു് കീഴ് പൂണെല്ലിന്റെ താഴത്തു് മൂന്നുരേഖ മുത്തുമാലപോലെ ഉണ്ടാകിലവയും ഹാരരേഖ. മേലേവ രണ്ടിനും മുറിവില്ലാതെ ഇരിക്കിൽ ॥ ६८ ॥

**राजी तु मध्यमामध्यपर्वगा शोभनाकृतिः ।**
**ऊर्मिकाकृतिरङ्गानां स्निग्धता तत्फलं भवेत् ॥ ६९ ॥**

राजी तु मध्यमाया मध्यपर्वणि शृङ्खलाकारा परिवृत्ता शोभनाकृतिः स्निग्धच्छाया ऊर्मिकाकृतिः ऊर्मिकाङ्गुलीयकम्, മോതിരം. तदाकृतिः तस्या आकृतिरिवाकृतिर्यस्याः सा तथा । तत्साम्यं चाङ्गुलीपरिवेष्टनेनावस्था-

1. 'സ്പഷ്ടയാ.' क, ख, पाठः.

नम् । तस्याः फलं सर्वाङ्गानां स्निग्धता । यावती हैयङ्गवस्पर्शे स्निग्धतानुभूयते तावती पुंसोऽनया सम्पन्नस्य स्पर्श इति । ഹൈയങ്ഗവം=വെണ്ണ. नामार्थस्तु राजिशब्देनेदमुक्तं — सर्पोदरभागगता काचित् पदवी राजी । सात्यन्तं स्निग्धा । तत्साम्यादियमपि तच्छब्देनोक्तेति । രാജി=മദ്ധ്യമാമദ്ധ്യപർവ്വത്തിങ്കൽ ചുഴലവും മോതിരംപോലെ ശൃംഖലാകാരമായിരിക്കിൻറതു ॥ ६९ ॥

गोमतीलक्षणमाह —

**अनामिकामध्यपर्वगामिनी मध्यवेदिनी ।**
**अयुक्ता सन्धिगतया शब्दवित्त्वं ददाति सा ॥ ७० ॥**

अनामिकामध्यपर्वगामिनी अनामिकाया मध्यपर्व गन्तुं शीलं यस्याः सा तथाविधा । मध्यवेदिनी मध्यमेव वेदिः अलङ्कृतस्थलम् । एवम्भूता गोमती । तस्याः शब्दवित्त्वं फलं, यदि सन्धिरेखया सा न संयुक्ता भवेत् । अन्यथा मिश्रकर्मणां फलमिव मिश्रप्रवृत्तिता भवेदिति । तस्याः सन्धिरेखया व्यवधाने रेखाचतुष्टयभागदेशश्चापेक्षितः । तन्न्यूनतायां फलस्यापि तद्वद्भाव इति द्रष्टव्यम् । ഗോമതി= ആയുർരേഖയുടെ ചുവട്ടിന്നടുത്തു് മണിബന്ധത്തിങ്കൽനിൻറു തുടങ്ങി ഉള്ളംകൈയ്യുടെ കൂടി അനാമികയുടെ മദ്ധ്യപർവാന്തമായുള്ളതു് ॥

धनिलालक्षणमाह—

**धनिला गोमतीस्थानादुपर्युपरि निम्नगा ।**
**फलं तस्या ऊर्ध्वमुखी यशो व्याप्तं भवेदिति ॥ ७१ ॥**

गोमत्या उपरि तत्स्थानाद्वा उपरि निम्नगा ऊर्ध्वमुखी या रेखा सा धनिला । तस्याः फलमिति एवंप्रकारम् । कथमित्याह — व्याप्तं यशो भवेत् । व्याप्तशब्देन सापेक्षेण सर्वेणेत्यपेक्षितम् । धनव्याप्तिश्चात्र फलमिति नामशब्देन सूचितम् । ധനില=ഗോമതിയെപ്പോലെ മണിബന്ധത്തിങ്കൽനിൻറു തുടങ്ങി അനാമികയുടെ അഗ്രത്തോളം ചെൻറതു്. ഇതിന്നു് ആധാരരേഖയെൻറു പേരുണ്ടു് ॥ ७१ ॥

निलालक्षणमाह —

**मध्यमाग्रगता रेखा यश आयुः श्रियो गुणान् ।**
**ददात्यूर्ध्वमुखी पार्श्वमुखी दोषान् प्रदास्यति ॥ ७२ ॥**

1. 'य' ख. पाठः.

अयमत्रार्थः—मध्यमाया अग्रे काचिद् रेखा भवेत्। सा शुभं फलं प्रदास्यति। यद्यूर्ध्वमुखी पुनः सा तदा यशः। तन्मात्रमायुः तथाविधां श्रियं परिमिताम्। गुणान्। ये गुणा इति लोकप्रसिद्धास्तानित्यर्थः। यदि पार्श्वमुखी सा भवेत् तर्हि दोषान् प्रदास्यति। पार्श्वमुखीत्वे दोषफलसिद्धेश्चिरकालापेक्षा विद्यते। अन्यत्र सा नास्तीति विशेषः। निला नाम बीजरोहः। तस्या ऊर्ध्वमुखीत्वं स्वभावः ततोऽत्रापि तत्प्रवृत्तिः। നിള= മദ്ധ്യമാഗ്രത്തിൽ മേല്പട്ടുള്ള രേഖ. നഖത്തോളം അറ്റുതാഴെ മേല്പെട്ടു ചെൻറിട്ടു രണ്ടാലുമൊരുപുറത്തു് വിലങ്ങപ്പോകിലാകാ ॥ ७२ ॥

दवालक्ष्मोच्यते—

**तर्जन्यग्रप्रतिष्ठा या वर्तुलस्थितिरग्रणीः।**
**विदग्धेषु भवेत् सोऽयं तद्वानात्मरतिः प्रियः ॥ ७३ ॥**

तर्जन्यग्रप्रतिष्ठा तर्जन्यग्रे निम्नतया स्थितिर्यस्याः सा तर्जन्यग्रप्रतिष्ठेत्युच्यते। यैवंविधा सा देवीत्युच्यते। वृत्तस्थितिर्वृत्ताकारेण स्थितिः स्थानं यस्याः। फलं तद्वान् पुरुषो विदग्धेष्वग्रगण्यः स्यात्। किञ्च आत्मरतिरात्मन्येव रतिर्यस्य सः। प्रियः सर्वप्रिय इत्यर्थः। ദേവി=തർജ്ജന്യഗ്രത്തിങ്കൽതാൻ കുഴിഞ്ഞു പണംപോലെ വട്ടത്തിലിരിക്കിൻറതു് ॥ ७३ ॥

शतहृदालक्षणमाह—

**अनामिकामूलपर्व प्रतितिष्ठति नित्यदा।**
**आवृणोति च सा नित्यं वैरमेव प्रदास्यति ॥ ७४ ॥**

या खल्वनामिकामूलपर्व प्रतितिष्ठति अधितिष्ठति मध्ये प्रकृष्टनिम्नभागस्था सा तथाविधा शतहृदा नाम। वैरमेव सा प्रदास्यति फलम्। किञ्च यन्नित्यं फलमन्यतः सिद्धं तदावृणोति तत् तिरस्करोति। नित्यदा मद्दिष्टमन्यन्नित्यं च फलं ददाति सहकार्यन्तरसन्निधाने। स च सहकारी वाग्रेखैव। सा च पूर्वोक्ता। नित्यफलावरणं च सहकार्यन्तरसन्निधानवशात्। स च सहकार्यनन्तरोक्ता देवीरेखेत्यूह्यम्। नामतश्च वैरप्रवर्तकत्वं तन्निवर्तकत्वं च फलं स्वतो निरूढस्वभावतया वाप्रतिहतशक्तित्वं स्वभर्तुः प्रतिवेदयति। ശതഹ്രദ=അനാമികയുടെ മൂലപ്പർവ്വത്തിൽ ഉയർന്ന

സ്ഥലത്തിങ്കൽ താൻ കഴിഞ്ഞു പണംപോലെ വട്ടത്തിലിരിക്കിൻറത ॥ ७४ ॥

निष्ठालक्षणं फलपुरस्सरमाह —

**कनिष्ठिकामूलसन्धिमतिक्रम्य प्रवर्तते ।**
**अनामिकामूलदेशादाचारस्थितिमाप्नुयात् ॥ ७५ ॥**

कनिष्ठिकाया मूले या सन्धिरेखा विद्याजाययोरधः, ततः पश्चात् तामतिक्रम्य आ अनामिकादेशात् काचिद् रेखा यदि प्रवर्तते तर्हि सा (प्रति? नि)ष्ठा । अनया खलु प्रतितिष्ठति चिरं पुरुषः इत्यभिप्रेत्य फलमाह — दीर्घमायुरवाप्नोति नात्र संशयश्च[1] भवतीति स्थितिशब्देनाह । अत्रायं भावः — सन्धिरेखाया अधोभागे करतलमभिमुखीकृत्यानामिकामूलदेशाद् यदि प्रवर्तेत तर्हि[2] स चिरञ्जीवी तया रेखया भवेत् । तत्र च रेखापौष्कल्या-पौष्कल्याभ्यां फलोन्नतानूनते न शङ्कनीये इति । നിഷ്ഠാ—കനിഷ്ഠികാനാമികകളുടെ സന്ധിയിങ്കൽ നിൻറു പുറപ്പെട്ടു നഖങ്ങു താണു അവിടുന്നു് കനിഷ്ഠികേടെ ചുവട്ടിങ്കൽ കൂടെ കരഭത്തിൻെറ പുറത്തെഅരികെക്കൂടി മേല്പട്ടുകരേറി ധമ്മസ്ഥാനത്തു് ചെല്ലുന്നതു് ॥ ७५ ॥

धात्रीलक्षणमाह —

**मूलं करतलस्योक्त्वा शङ्खलक्ष्म स्वयं पुनः ।**
**अधितिष्ठति या तस्या विभूतिरभिमोहनी ॥ ७६ ॥**

या करतलमूलगता यदि शङ्खलक्ष्म भवेत् तर्हि तदधितिष्ठति सा धात्री । तस्याः सकाशादभिमोहनी विभूतिर्भवति अभिमोहनी आभिमुख्येन दर्शने सत्येव स्वामिनो मोहमुत्पादयति यादृशी विभूतिस्तादृशी भवेत् । मूलं करतलस्योक्त्वेत्यनेन फलान्तरं वक्तव्यम् । तदयमर्थः — उक्तिशब्दो व्यापारमात्रवाची । करतलस्य मूलमुक्त्वा व्यापृत्य । सर्वदा स्थितिश्च भवतीति शेषः । यदि वा करतलस्य मूलमुक्त्वा व्यापृत्य या काचिद् रेखा[3] तदधितिष्ठति, तेन तद्गतं शङ्खलक्ष्म प्रवर्तयित्वा तदधितिष्ठतीत्येवार्थः सम्पद्यते । सर्वथा नान्वयः । अयमत्रार्थः — करतलमूले आत्मरेखासम्बन्धितया शङ्खो मत्स्यो वा यदि भवति, तच्च काचिद् रेखा अधितिष्ठति

१. 'संशयश्च नात्र भ', २. 'तर्हि', ३. 'खाधि' घ. पाठः.

मध्यमाया मूलत एकाङ्गुलपर्यन्तं यावद् व्याप्य सहस्रशाखा भवति, तर्हि समृद्धविभूतिः सम्पत्समृद्धः चरितार्थ एव पुरुषः स्यादिति । एवं धात्री-लक्षणं फलं चोक्तम् । ധാത്രി=ആത്മരേഖേടെ ഇടത്തെഭാഗത്തു മണിബന്ധത്തിങ്കൽ നിൻറു തുടങ്ങി മത്സ്യാകൃതികൊണ്ടുതാൻ ശംഖാകൃതികൊണ്ടുതാൻ ആത്മരേഖയോടു സംബന്ധിച്ചു ഹാര സ്ഥാനത്തോളം ചെൻറ അനേകം ശിഖകളോടുകൂടിയ രേഖ ॥ ७६ ॥

गोपीलक्षणमाह —

**मूलदेशादुपारभ्य यस्याः संसृतिरिष्यते ।**
**अनामिकामूलदेशं यावद् गोपी विशिष्टदा ॥ ७७ ॥**

या खलु करतलमूलदेशादुपारभ्य करतलमूलदेशं किञ्चिद् गत्वा तदारभ्य दृढमूलतया सम्भूयानामिकामूलदेशं यावत् संसरति, (सा गोपी ।) यस्याश्च तादृशी संसृतिरिष्यते । संसृतिशब्दः प्रवृत्तिवाची । शोभाहेतुतया लोकैः प्रार्थ्यते । शोभाहेतुत्वं च प्रसिद्धम् अनामिकामूलगताया रेखायां दीर्घीभूतायाः । धवलतरे करतले मूलादारभ्य यस्यांकस्यांचिद् रेखायां प्रवृत्तायां दृश्यमानायामतिरमणीयमिदं करतलमिति व्यवहारदर्शनात् । विद्वत्परिषत्सु लोके च यैवंविधा यतश्च, अतस्तस्याः सन्निधानाद् विशिष्टानि फलानि अस्य पुरुषस्य भवन्ति स्त्रिया वेत्याह विशिष्टदेत्यन्त्येन पदेन । विशिष्टशब्देन तादृशं फलमुपलक्ष्यते । तत् सूचयत्येषेत्यर्थः । नामतस्तु राजादिभयविरहोऽपि फलान्तरं सूचितम् । ഗോപി=മണിബന്ധത്തിങ്കൽതുടങ്ങി കരതലത്തൂടെപോയി കനിഷ്ഠികാനാമികകളുടെ നടുവേ ഇറങ്ങുന്ന രേഖ ॥ ७७ ॥

प्रियव्रतालक्ष्माह —

**प्रियव्रता मागधी स्यात् करभस्थानसङ्गताः ।**
**या रेखास्तासु सर्वासु सन्निधत्ते कनिष्ठिकाम् ॥ ७८ ॥**

याः खलु करभस्थानसङ्गता रेखास्तासु सर्वासु या कनिष्ठिकां सन्निधत्ते सा प्रियव्रता । सन्निधानं नाम यावत् सम्भवति तावदेव । न चात्यन्तसान्निध्यं विवक्षितं, कनिष्ठया विरोधादत्यन्ताव्यवधानस्य । अस्याः फलं

१. 'या ध' घ. पाठः.

नामत एवोक्तमिति नोच्यते । तपोधर्मादि एतद्वतः प्रियं भवतीति । मागधीति । मगधो नाम धर्मपूर्वसंस्कारः तत्सम्बन्धिनी मागधी । तद्विकारभूतेत्यर्थः । मगधशब्दस्य च धर्मपूर्वसंस्काराभिधायकत्वं योगाचारमतसिद्धम् । പ്രിയവ്രത=രോഹിണീടെ ചുവട്ടിങ്കൽനിന്നു ഒട്ടടച്ചെന്നു താൻ നടുവോളം ചെന്നുതാൻ ഇടത്തുപോയി മഹിയോടു സംബന്ധിച്ച കനിഷ്ഠികമേൽ കയറുന്ന രേഖ ॥ ൭൮ ॥

धेनुकालक्षणमाह —

**या स्यात् करतले सूक्ष्ममध्यमा मध्यमोन्मुखी ।**
**धेनुका सा परिमितं फलमादाय दीयते ॥ ७९ ॥**

यस्याः खलु सूक्ष्ममध्ये सूक्ष्मेक्षिकया निरीक्षणे सति सम्यङ् मध्यस्थले करतलस्य वृत्तिर्भवति । विशेषश्च या मध्यमोन्मुखी तथात्वे सत्यपि सा धेनुका परिगदिता । परिमितं फलं तया दीयते लोकस्य । अयमर्थः — धेनुकासम्पन्नः पुरुषो न कस्मैचिदपि कस्यैचिद् वा पूर्णं फलं ददाति किन्तु किञ्चित्त्वेव ददाति किन्तु ददाति चेति । लक्षणाभिप्रायस्त्वेवं — या करतलमध्यमध्यगता मध्यमां प्रत्युन्मुखीव तिष्ठति रेखाकृतिः सा धेनुकेति । ധേനുക=മണിബന്ധത്തിങ്കൽ നിന്നു തുടങ്ങി ഇന്ദിരേടെ വലത്തു ഭാഗമേ സൂക്ഷ്മാകാരയായി മധ്യമെ പ്രാപിക്കുന്ന രേഖ ॥ ൭൯ ॥

रोहिणीलक्षणमाह —

**रोहिणी नित्यसम्भूतिर्नित्यवृद्धिसमन्विता ।**
**तर्जनीमूलमाप्नोति तद्गता स्वायुषः फलम् ॥ ८० ॥**

या तर्जनीमूलमाप्नोति, (यै ? सै)वंभूता रोहिणी । कीदृशी तर्जनीमूलं प्राप्नोतीत्यत आह — नित्यसम्भूतेरित्यादि । नित्यं सम्भूतिः सम्भवो यस्याः सा नित्यसम्भूतिः नित्यं नियमेन किञ्चित् किञ्चिदुद्भवो यस्या विद्यत एव, यथा कर्म । यथाहि तस्य पुरुषस्यायुर्निदानभूतं कर्म प्रतिदिवसोपचीयमानं कर्म संस्कारादिना तज्जन्मकृतधर्मरूपं तदायुःकारणं भवति, तथा तज्जन्मायुस्सूचकमपि रेखारूपं प्रतिदिवसोपचीयमानम् । तदभिप्रायेण नित्यसम्भूतिरित्युक्ता । सा नित्यवृद्धिसमन्विता च । अस्यार्थः — यतो नित्योद्भूतित्वं तस्या अत एव नित्यवृद्धिसमन्विता च । उद्भूति-

वृद्ध्योरविनाभावात् । ननु उद्भूतिर्यत्र यत्र तत्र तत्र वृद्धिरिति नियमो नास्ति उत्पत्त्यनन्तरमेव मृते व्यभिचारात् । नैतत् समञ्जसम् । तत्राप्युत्पत्तिकाले यावद् वस्तु तन्न तावन्मरणकाले । ननु न प्रतीयत इति चेदेवं न । यदा योनिद्वारान्निस्सार्यते वायुना, तदा तत्परिमितत्वं जन्तुशरीरस्य सिद्धं न तावत्परिमाणं स्तनपानसमये । जरायुपरिवृतस्याप्यस्त्येव तावत्परिमाणं यावत् पुनर्योनिद्वारा प्रवेशयितुमशक्यम् । इति तावदनुभवसिद्धम् । तस्माद् यत्र यत्रोद्भूतिस्तत्र तत्र वृद्धिः समनन्तरसमये सम्भविष्यतीति व्याप्तिररूढेव । यत्तु पुनरुक्तं जन्मानन्तरमेव मृते व्यभिचार इति तदपि परिपोषविषयमेव न वृद्धिमात्रविषयम् । ननु मृत्यनन्तरमेव जाते व्यभिचार इति चेत् तत्रापि शरीरवृद्धिमात्रस्य सम्भवात् । जीवेन विना न पोष इति चेत् अस्तु, तथापि बृंहणमस्त्येव । तदपि वृद्ध्यपरपर्यायमित्यास्ताम् । ईदृशी सा तर्जनीमाप्नोति । प्राप्त्यनन्तरं तद्गता च तस्यां तर्जन्यां गता च समवेता च । एवम्भूता या रेखा सा रोहिणी रोहणस्वभावा । फलमाह—स्वायुषः फलमिति । स्वायुषः पुरुषस्य फलम् । सामान्यवचनमेतत् । स्वयमेव फलजातमित्यर्थः । प्रयच्छतीति शेषः । नन्वशुभफलमपि प्रयच्छतीति ब्रूमः । अयमभिप्रायः—करतलमूलमध्यादारभ्य क्रमेण क्रमेणोत्पत्तिं पुनः पुनर्लब्ध्वा प्रत्युत्पत्ति वृद्धिं च लब्ध्वा तर्जनीं या प्राप्नोति । पुनस्तर्जनीं गता तत्समवेता तिष्ठति । तत्र यद्यविच्छेदाद् यावत् तर्जन्यन्तगमनं ततश्शतायुः स्यात् । तत्र यदि विच्छेदस्तर्हि स विच्छेदः परिमेयः । अन्यथा कस्मिन् वयसि तद्ध्वंस इति विज्ञानायोगात् । ननु परिमेयत्वेऽपि केन प्रमाणेन परिमेयतेति । अत्र ब्रूमः । सर्वत्रापि रेखास्वरूपं परिमेयं, परिमाणसाधनं च गजरोम । तच्च वालगतम् । तच्चैकैकमेकैकसंवत्सरज्ञापकम् । तच्च नायामतः प्रमाणम् । अपितु विस्तारत इत्यस्मत्स्थितिः । अतोऽत्रापि गजरोम्णा रोहिणीं परिमायायुःफलं निर्दिशेत् । तथाच यत्र यत्र विच्छेदः परिस्फुटस्तत्र तत्र नायुर्भङ्गः । यत्र तु मध्ये खण्डाभावः । खण्डो नामोभयतश्छिन्नो[1] वस्तुविशेषः । अतोऽत्राप्युभयतश्छिन्नो रेखाभागो यत्र न विद्यते तत्रायुर्भङ्गः सुवचनः । यावन्ति च यत्संख्याकानि रोमाणि परिमाणे क्रियमाणे भवन्ति विच्छेदस्थले गतानि,

१. 'न्नो रे' क. पाठः.

तावतो वत्सरान् जीवेत् । यदि खण्डस्तत्र शिष्येत दृश्येत च तदाप-मृत्युः । सोऽपि यावन्ति गजरोमाणि प्रमाणभूतानि यत्र यत्र भवन्ति तावतस्तावतो वत्सरान् गत्वेति वेदितव्यम् । ചന്ദ്രമെന്നു രോഹിണിയെ മറിച്ച് രോഹിണിതന്നോടൊത്ത രേഖയുള്ളേടം । एवं स्थिते यदि तर्जन्यन्तं गमिष्यति रेखा अविच्छेदेन तदा शतायुः । यद्येकोनं त-दैकोनशतायुः । यद्येकोने विच्छेदमात्रं तदापमृत्युः । एवं प्रथमसंवत्सरपर्यन्त-मनुसन्धेयम् । प्रथमदिवसपर्यन्तं च प्रथमनाडिकापर्यन्तं च । ननु वत्सरा ज्ञायेरन् । दिवसा न ज्ञायेरन् नाडिकाश्च । प्रमाणाभावाच्छक्त्यभावाच्च प्रेक्षकाणाम् । अत्र ब्रूमः । सूक्ष्मेक्षिकया तावद् रेखास्वरूपस्य नित्यपरि-चितस्य निरीक्षणे सति दिवसा ज्ञायेरन् नाडिकाश्च । ततोऽप्यधिकपरि-चये सति रेखोद्भूतिवृद्धिभ्यां सूक्ष्मेण विच्छेदेन च । यदि ततोऽपि न ज्ञा-येरन्, तत्र प्रमाणं भवन्ति स्वचेष्टादयः । कथमिति चेद् । एते, स्वचेष्टा तटस्थचेष्टा प्रेक्ष्यचेष्टा च इति त्रिविधा चेष्टा । तत्राद्या — यदवस्थः स्वयं यां च चेष्टां कुरुते तदवस्थां तत्प्रवृत्तिं च प्रेक्ष्यस्यादिशेत् ।

"यदवस्थः स्वयं चेष्टा स्वस्य यादृश्यपि स्फुटा ।
तदवस्थां तां च चेष्टामादिशेत् प्रेक्ष्यगोचरे ॥"

इति सिद्धमुनिः । तत्रायुर्विषये स्वयं यदि स्वपन् प्रेक्ष्यागमनसमये तत्र तत्प्रेक्ष्यस्य मृतिं विद्यात् । आदिशेच्च ताम् । यदि भुञ्जानस्तर्हि रोग-विवृद्धिमादिशेत्, तदवस्थायां स्वयं रोगी । अथ स नीरोगस्तर्हि रोगो-त्पत्तिमादिशेत् । यदि भुजिष्यन् रोगी भविष्यति । यदि स्वापं कर्तु-मिच्छन् रोगावसाने मरणमेष्यति विंशतिदिनादूर्ध्वम् । अथ विषयं बुभूषुः प्रेक्षकः, मृत एवेति वदेत् । अथ संबुभूषुर्दैत्राणि दिनान्यतीत्य मृतिमे-ष्यति । अथ विषयं भुञ्जानस्तस्मिन्नेव दिने मृतिमेष्यति रोगी चेत् । एवं यद्यदवस्थः स्वयं यद्यच्चेष्टश्च तां तामवस्थां तां तां चेष्टां च प्रेक्ष्यस्य वदेत् । चेष्टाशब्देन प्रवृत्तिरुच्यते फलपक्षे । लक्षणपक्षे तु प्रवृत्तिमात्रं शयनासनगमनाद्यपि कर्णमलापहरणाद्यपि यद्यत् किञ्चित् प्रवृत्तिमात्रं तत् सर्वमेव । अथ तटस्थचेष्टाः कथ्यन्ते । समे तले नियतेन्द्रियमनस्कः

प्रशान्तवर्णविन्यासव्यक्तिराचान्तः स्वस्थान्तःकरणो विविक्तदेशवासी चरितनियमव्रतः प्रातरुत्थायेश्वरं हृदयकमलस्थं सञ्चिन्त्य सन्तर्पितविद्वज्जनः प्रेक्षको निर्दयत्वादिदोषरहितः शोभनाकारस्तस्य च स्वयं सुखेनावस्थितः सन् प्रेक्ष्यागमनसमसमयमेव यः कश्चिज्जन आगच्छति, स मुख्यस्तटस्थलोकः। पूर्वमेव तिष्ठन्नपि स्वसमतले आगमिष्यन्नपि तत्तत्फलोक्तिसमये। स्थावराश्च केचन जङ्गमाश्च केचन मनुष्यातिरिक्ताः। अचेतनमपि क्वाचिद् भित्त्यादि यावद् दृष्टिपातमवस्थितम्। स्थले वस्तु यावत् तावत् तटस्थलोकेऽन्तर्भवति वस्तुजातम्। तत्र कथं नियमः स्यादिति चेदत्र रहस्यं ब्रूमः।

"विशेषदृष्टिविषयश्चिह्नमित्यभिधीयते।
कालसम्बन्धमात्रेण न विनाभावमर्हति॥

यादृशं पृच्छ्यते येन तादृशं तस्य लक्षणम्।
असाधारणधर्मत्वान्नियतं तस्य लक्षणम्॥"

यत्र विशेषतो दृष्टिः पतिता भवति झटिति दैववशात् फलोक्तिसमये प्रेक्ष्यदर्शनमात्रसमये[2] वा तत् तटस्थवस्त्वित्यवहितमनसा सङ्कल्प्य निर्णेतव्यम्। तत्र विशेषः कथ्यते। प्रेक्ष्यो यदि वामभागे भवेत् तदा तटस्थोऽपि तत्र चेत् स्यात् तदा तत् तटस्थगतं लक्ष्म तस्य भवेत् ज्ञापकं फलानाम्। यदि तत्राप्येकदेशस्थता एकासनस्थता एककल्पस्थता वा भवेत् तद्गतं लक्ष्म सुतरां ज्ञापकं स्यात्। यदि भिन्नभागस्थता तटस्थस्य स्यात् तर्हि नैकेन तटस्थेन लक्ष्म निर्णेतुं शक्यं, किन्तु द्वित्रैः पञ्चषैर्वा। यदि वा लक्षणबाहुल्यमवेक्षितं तदैकस्मिन्नेवास्तु बहुषु वा। न तटस्थबाहुल्ये नियमापेक्षा। यदि पृष्ठे तटस्थाः स्युस्तर्हि ते न प्रमाणम्। अथ ज्ञातास्ते तर्ह्यपि ते न प्रमाणं भवेयुः आयुषोऽन्यत्र। आयुषि तु प्रमाणम्। पुरोगमनाभाव एव तेषां प्रमाणं प्रेक्ष्यः स्यात् प्रत्युज्जीवने। तस्मात् पृष्ठगतानां न सर्वथा प्रामाण्यम्। पुरोगतानां तु अप्रामाण्यचिन्तावकाशोऽपि न। तटस्थानां मनोवृत्तिर्न चिन्त्या, चेष्टामात्रमेव तु

१. 'तसम' ख. घ. ङ. पाठः. २. 'ये तावत्' क. पाठः.

चिन्त्यम् । अवस्था तु बाह्या । एवं च यदवस्थो यच्चेष्टश्च तटस्थस्तामवस्थां तां चेष्टां च प्रेक्ष्यस्यादिशेत् पूर्ववत् । किञ्च यद्यत्प्रश्ने यद्यदनुरूपं लक्ष्म दृश्यते तत् सर्वं लक्ष्म चेतनाचेतनप्रवृत्तिरूपम् । एवं प्रेक्ष्यचेष्टापि द्रष्टव्या । यदि प्रेक्ष्यगृहं प्रति गच्छेत् प्रेक्षको दूतप्रेषणादिवशात्, तदा स्वापो निषिद्धः, रोगिणो मृतिप्रसङ्गसूचनात् । रोगिणः कल्पितभङ्गप्रसंङ्गात् । कार्यनिर्णये भुक्तिर्युक्ता । स्वापस्तत्रापि निषिद्धः, निश्चेष्टत्वस्याप्रवृत्तिप्रसङ्गात् । एवं तत्राप्यनुरूपं फलेन चिन्तयितव्यं लक्ष्मतया । एवं प्रेक्ष्यप्रेक्षकतटस्थचेष्टात्मकं प्रमाणं सहकारि । श्वासाश्च कीदृग्विधा इति चेद्, अत्र ब्रूमः । पञ्चवृत्तिः प्राणः परीक्ष्यो लक्षणपरीक्षायाम् । कथं पञ्चवृत्तिता इत्यत आह पञ्च भूतानीति हि प्रसिद्धम् । तानि च पञ्च भूतानि सर्वेषु शरीरेषु सन्त्येव पृथिव्यादीनि । तत्र च यत्र यत्र च भूतस्वरूपे वायुर्वर्तते प्राणलक्षणः, तत्र फलविशेषाः सन्ति । ननु कथमेतद् ज्ञातुं शक्यमित्यत आह पञ्चभूतानि शरीरं व्याप्य तिष्ठन्ति । तथा च प्रत्येकमङ्गेषु पञ्चापि भूतानि सन्ति । एवं च प्राणा[1]ख्येऽङ्गेऽपि वायुद्वारे द्वारद्वयवति विद्यन्ते पञ्चापि भूतानि । अतो यत्र यत्र भूतरूपे वायुर्निस्सरतीति ज्ञात्वा फलविशेषानादिशेत् । तच्चापि यद्यत् फलानुरूपमनुभूयते तत्तत्[2]स्वरूपमवहितमनसा निश्चित्य विज्ञेयम् । कुत्र भागे किं भूतं वर्तत इत्युत्तरत्र वक्ष्यति । एवं श्वासोऽपि रेखासहकारी प्रमाणम् । तथा वर्णोऽपि । तथाहि — यादृग् यादृग् वर्णो यासु यासु रेखासु वर्तते स स उपयोगी प्रमाणतया सहकारितया च रेखाया वर्तते । तद्विशेषश्च वक्ष्य(ती ? त इ)ति । രോഹിണീ=ഉള്ളം കയ്യുടെ ചുവട്ടിൽ നടുവിൽ മണിബന്ധത്തിങ്കൽനിന്നു തുടങ്ങി തർജ്ജന്യഗ്രത്തോളം ചെല്ലുന്ന രേഖ. രേഖ ഇല്ലാത്തേടത്ത് രേഖയോടൊത്ത നിറമാകിലും കണക്കുതാനും. പിന്നെ രേഖതുടങ്ങിയേടത്ത് മുന്നെപ്പോലെ നിറമാകിൽ തന്നോടൊത്തൊരു രേഖ വിലങ്ങവന്നു രോഹിണിയെ യാതൊരിടത്തു മുറിക്കുന്നു അച്ചവയസ്സിൽ ചാം. ഈ രേഖക്ക് ആദിയെത്തുടങ്ങിയ യാതൊരു വർണ്ണമുള്ളത് അതിന്റെ നാശത്തിങ്കലും മിക്കവാറും മരിക്കും.

॥ ८० ॥

---

१. 'ख्या' क. ख. पाठः. २. 'स' क. ख. घ. पाठः.

गुल्मिनीलक्षणमाह —

**तर्जनीमध्यपर्वस्था गुल्मिनी वृत्तवर्तिनी ।**
**तस्याः फलं तु दुष्टं तद् यश आयुःक्षयं तथा ॥ ८१ ॥**

या तर्जनीमध्यपर्वस्था तर्जन्या यन्मध्यपर्व तत्रस्था तद्गता, वृत्तवर्तिनी वृत्ततया वर्तितुं शीलं यस्याः सा तथाविधा गुल्मिनी नाम रेखा । तस्याः फलं तु यत् तद् दुष्टं यश आयुःक्षयं च । तत्र विशेषो वक्तव्यः । यदि मध्यपर्वसन्निधौ रेखा उक्तलक्षणा तदैवेदं फलद्वयम् । यदि पर्वमध्यादुपरि तदा सुयशो दीर्घायुश्च फलमिति । ഗുല്മിനി=ചൂണ്ടാണിയുടെ രണ്ടാംപർവ്വത്തിന്ന് മീതെ അടുത്ത് പണംപോലെ അത് ആകാം. മേലേവരേടെ താഴെ എങ്കിൽ നൻറ് ॥ ८१ ॥

अरुणालक्षणमाह —

**तर्जनीमध्यपर्वस्था या रेखा ऊर्ध्वगामिनी ।**
**कृष्णवर्णा कृष्णफलं ददातीति हि नः श्रुतम् ॥ ८२ ॥**

या पुनरुक्तलक्षणायास्तर्जनीमध्यपर्वस्थाया रेखाया ऊर्ध्वगामिनी -ऊर्ध्वगमनशीला । अव्यवहितोत्तरदेशस्थेति यावत् । सा अरुणा नाम कृष्णवर्णा च । तस्याः कृष्णफलं दोषरूपमिति यावत् । विशेषतस्तु न ज्ञायते को दोष इति । दोषरूपं फलमिति हि नः श्रुतं श्रुतिः । कथमरुणेति नामेति चेदत्र ब्रूमः । कृष्णवर्णेत्यनेन रागातिशये कार्ष्ण्यमनुभूयते रक्तपटादीनां, तदेव विवक्षितम् । अतो न दोषः । അരുണ=മേലെ ഗുല്മിനിയിടെ സ്ഥാനത്തു് വിലങ്ങ്. ॥ ८२ ॥

वीरकण्टकालक्षणमाह—

**अधोगतास्तु पञ्च स्यू रेखास्ता वीरकण्टकाः ।**
**तेषां फलं तु वीराणां वृद्धिरेव न संशयः ॥ ८३ ॥**

वीरकण्टका नाम तस्याः फलं तु एकैकस्यामपि वीराणां तेषां प्रसिद्धानां समृद्धिः । कण्टकशब्दस्तु फलान्तरद्योतकः । तच्चेदं फलं, यदि तासां साकल्यं भवेत्, तदा वीरकण्टकता वीरद्रोहः फलम् । वीरशब्देन च वीर्यमुच्यते । वीर्यहानिः फलमिति यावत् । असाकल्ये तूक्तलक्षणं फलमिति न किञ्चिदनवद्यम् । नामतः सर्वासां फलहेतुत्वमङ्गीकृत्य कृतम् । अतोऽपि न दोषः । വീരകണ്ടകകൾ=കീഴെ ഗുല്മിനീടെ സ്ഥാനത്തു കീഴെ പഞ്ചരേഖയോളം ॥ ८३ ॥

हस्तालक्षणमाह —

**तर्जन्यधःपर्वगता सूक्ष्मा वर्णविरूपिणी ।**
**हस्ताभिधाना नितरां शस्यते रूपवेदिभिः ॥ ८४ ॥**

अस्यार्थः — तर्जन्यधःपर्वगता सूक्ष्मा सूक्ष्माकारा वर्णवैचित्र्यजुष्टा वर्णविरूपिणी । वर्णशब्देन पीतादि कथ्यते । पीतादिभिर्वर्णैर्विरूपिणी विरुद्धरूपिणी यादृशस्तद्गतो वर्णः पुरुषस्य स्त्रिया वा तद्विरुद्धा हि नानावर्णरूपेति यावत् । रूपशब्दः स्वरूपवाची । सा हस्ताभिधाना । रूपवेदिभिः । रूपं लक्ष्म । रूप्यतेऽनेनेति व्युत्पत्त्या लक्षणवेदिभिरित्यर्थः । प्रशस्यते सम्भाव्यते । आद्रियत इति यावत् । अनेन शुभमात्रं तस्याः फलमित्युक्तम् । ഹസ്ത = താഴത്തെ പർവ്വത്തിന്റെ മേലെയരികത്തു് രോഹിണിയെ എണ്ണിക്കണ്ടാൽ അറുപത്തേഴു വയസ്സിന്റെ സ്ഥാനത്തു് വിലങ്ങു് ॥ ८४ ॥

महिष्ठो निम्नलक्षणस्तत्स्थ एव । तस्य लक्षणमाह—

**तर्जन्यधोभागगतो मध्यपर्वसमाश्रयात् ।**
**यो निम्नो भाग उक्तः स्यान्महिष्ठस्तत्फलः स च ॥ ८५ ॥**

तर्जन्या मध्यसमाश्रयाद् भागाद् योऽधोभागस्तद्गतो यो निम्नो भागः स महिष्ठ उक्तः स्यात् । स च तत्फलः पूर्वोक्तफलः । മഹിഷ്ഠ= രണ്ടാംപർവ്വത്തിന്നുമീതെ ഉൾമീനിടെ സ്ഥാനത്തു് ഉണ്ടായിരിക്കുന്ന കുഴി ॥ ८५ ॥

गुर्विणीलक्षणं वक्ति[2] —

**तं परीवृत्य यावर्तै पातमेव फलं स्फुरेत् ।**

इति । या तं निम्नभागं परीवृत्य वर्तते परिवृत्य वर्तेत इति यावत् । मण्डलाकारतः परिवेषाकारेण भूत्वा प्रतिवर्तेत इति यावत् । सा गुर्विणी । आवर्तै । नद्याद्योच्चपरिवर्तने सङ्कीर्णाकारे पातं पतनं फलं स्फुरेत् स्फोरयति । नाम्ना गुरुतरत्वार्थेन फलाविनाभावं सूचयति । एकवचननिर्देशेन लक्षणत्रयस्य फलत्रयानुगतिं सूचयति । ഗുർവ്വിണി — അക്കുഴിയുടെ ചുറ്റും ഉൾമീനിനെപ്പോലെ വട്ടത്തിൽ.

---

१. 'स्यायमर्थः', २. 'णमाह—' घ. पाठः.

माधवीलक्षणमाह—

**अङ्गुष्ठोर्ध्वस्थिता लक्ष्मीप्रदा माधव्युदीरिता ॥ ८६ ॥**

इति । या खल्वङ्गुष्ठोर्ध्वपर्वस्थिता सा माधवी । तत्फलं लक्ष्मी-वृद्धिः । तया सम्पन्नः समृद्धविभूतिर्भवतीत्यर्थः । तत्र यदि रेखा बह्व्यः तदा विफलमेतदेव । एतच्च विशेषरूपम् । किं तद् विशेषरूपमिति चेद्, उच्यते । दिवससमृद्धिरिति । दिवससमृद्धिर्नाम प्रतिदिवसं यथेष्ट-वृत्तिता । മാധവി = പെരുവിരലെടെ മേലെപ്പൎവ്വരേഖക്കടുത്തു മേൽവിലങ്ങ് ॥ ८६ ॥

हैमवेत्रिकालक्षणमाह —

**या स्यादधःपर्वगता विसन्धिर्हैमवेत्रिका ।**
**इयं च लक्ष्मीफलदा द्विसहाया त्रयोऽपि वा ॥ ८७ ॥**

या पुनस्तस्यैवाङ्गुष्ठस्याधःपर्वगता सा हेमवेत्रिका नाम । अस्या अपि लक्ष्मीः फलम् । नात्र विशेषरूपता विवक्षिता । प्रत्युत सामान्य-रूपतैव विवक्षिता । सर्वसमृद्धेः फलत्वमनुभूयते । सापि पुनर्द्विसहाया यदि द्वे रेखे सहायभूते यस्याः सा तथा सह आयो गतिरेकत्र गमनं यस्य स तथा । सहाय इति सहकारीति यावत् । तदापि तदेव फलम् । यदि त्रयो रेखाभेदा भवेयुस्तदापि फलमेतदिति शेषः । उभयत्र नामतस्तु स्वर्णवर्णता सर्वाङ्गस्यापि पुरुषस्येति फलान्तरम् । ഹേമവേത്രിക = അംഗുഷ്ഠത്തിന്റെ ചുവട്ടിലെ പൎവ്വത്തിങ്കൽ യുകേതടെ താഴത്തു് വിലങ്ങ് പൊൻപോലെ നിറമായി ഒരു തലനരുങ്ങി വാൎന്നി-രിക്കിന്റതു്. ഇതു് തനിക്ക് സഹായമായി ചേൎന്ന രണ്ടുതാൻ മൂന്റുതാൻ രേഖയുണ്ടാകിലും പേരും ഫലവുംതന്നെ ॥ ८७ ॥

मतिलक्षणमाह —

**अङ्गुष्ठमूलबन्धस्तु सशिखो मतिरिष्यते ।**
**मतिमान्द्यं भवेत् तस्य न जातु प्रतिभागुणः ॥ ८८ ॥**

यः खल्वङ्गुष्ठमूलबन्धः स मतिः । न केवलं तन्मात्रत्वम्, अपितु शिखत्वमपि । शिखा नाम रेखान्तरानुबन्ध उपरिभागे । तद्युक्तोऽङ्गुष्ठमूल-बन्धो मतिरिष्यते । तस्य फलं मतिमान्द्यं भवेत् । फलमिति शेषः ।

प्रतिभागुणो न जातु भवति इति फलान्तरम् । अनेनैतदुक्तम् —अङ्गुष्ठमूलबन्धस्य सशिखत्वाभावे मतिमान्द्यमात्रं फलम् । सशिखत्वे प्रतिभागुणाभावोऽपीति । ननु कथमत्र मतिरिति संज्ञा । उच्यते । विपरीतलक्षणयेति । यदि वा, मतिरस्याङ्गुष्ठमूलबन्धस्य फलं कथमिति चेद्, यदि तन्मूले रेखात्रयं भवेत् परस्परानुबद्धमिति। മതി = അംഗുഷ്ഠത്തിന്റെ ചുവട്ടിൽ മേൽതരംപോലെ അന്യോന്യം ചേർന്നിട്ടുള്ള മൂന്നു രേഖകളുണ്ടാകിലാകാം || ८८ ||

कण्डूलक्षणमाह—

**कण्डूः प्रियप्रदा शङ्खरूपाकृतिरङ्गुष्ठमूलगा ।**
**भ्रातृवृद्धिः फलं तस्या बहुता चापि तत्र वै ॥ ८९ ॥**

या पुनरङ्गुष्ठमूलगा शङ्खरूपाकृतिः सा कण्डूः । तस्या फलं भ्रातृवृद्धिः भ्रातृणां बहुता च । अयमत्राभिप्रायः — नैमित्तिकी अङ्गुष्ठमूलबन्धादधस्तदधो रेखात्रयाश्लिष्टबन्धा रेखा सा परिमितवर्णमिता बहुरूपा चानुरूपा भ्रातृवृद्धिकरी । तस्याश्च नानावर्णतायां तत्या भ्रातृणां पुत्राणां बहुता च भवति । यदि न नैमित्तिकी, तथापि पुंसां स्वबन्धुजनानामतिरमणीयानां भ्रातृपुत्रसमानानां सम्भवस्तद्बहुता चेति । प्रियप्रदेति फलान्तरमाह । न केवलं भ्रातृविवृद्धिः फलं, भ्रातृणां पुत्राणां विवृद्धिश्च न केवलं, अपितु प्रियप्रदत्वमपि । यद्यद् वस्तु प्रियशब्दवाच्यं तत् सर्वमसौ ददातीति । കണ്ഡൂ = അംഗുഷ്ഠമൂലബന്ധത്തിന്റെ കീഴെ മേല്പോട്ടൊരു രേഖ പോലെ തർജ്ജന്യഭിമുഖമായി ചുവട്ടിൽ നേരേയും രണ്ടു പുറത്തും നിന്ന മൂന്നു രേഖയാൽ ആവൃതമായുള്ളത് || ८९ ||

कनिष्ठालक्षणमाह—

**आत्मरेखासन्निधौ या अङ्गुष्ठस्यान्तरुञ्चिताः ।**
**भ्रातृसङ्ख्यामितास्तास्तु भ्रातृणां स्मारयन्ति वै ॥ ९० ॥**

याः पुनरात्मरेखासन्निधौ तत्पार्श्वभागे अङ्गुष्ठान्तरुञ्चिताः । अङ्गुष्ठान्तः, अङ्गुष्ठशब्देन तन्मूलमुच्यते, तदन्तरुञ्चिता व्यापिता व्याप्ता वा भ्रातृसङ्ख्यामितास्ता भ्रातृणां (भ्रातृ[1])सङ्ख्यां स्मारयन्ति बोधयन्ति । अतश्च यावत्यस्तत्र रेखा अङ्गुष्ठमूले आत्मरेखासन्निधौ तावन्तो भ्रातरः । अस्ति तु

1. 'वा' घ. पाठः.

तत्र विशेषः । यास्तत्र तर्जन्यादिकनिष्ठिकान्ता अङ्गुलयस्तन्मुखेन या उक्तलक्षणा रेखा वर्तन्ते ता भ्रातॄन् सूचयन्ति । याः पुनस्तद्विपरीता अ-ङ्गुष्ठाग्रमुखान्तास्ता न भ्रातॄन् सूचयन्ति । वैपरीत्यादिति लक्ष्यलक्षणयोर-न्वयव्यतिरेकौ सूचयति नाम्ना अङ्गुष्ठाधोवृत्तिताम् । കനിഷ്ഠ = അംഗുഷ്ഠത്തിൻെറ താഴത്തു ഭ്രാതൃസ്ഥാനത്തിങ്കൽ നിന്നു തർജ്ജന്യഭിമുഖങ്ങളായുള്ള രേഖകൾ. തർജ്ജന്യാദി നാലു വിരലുടെ കീഴ് (മേലെ?) ബാധരേഖക മേലേ തർജ്ജന്യാദി നാലുവിരലെയും നോക്കി വിരമ്മേത്തട്ടാതെ കനിഷ്ഠാദ്യുല്യവർണ്ണങ്ങളായിരിക്കിൻെറ രേഖകളും കനിഷ്ഠകൾ ॥ ९० ॥

सौराष्ट्रिकालक्षणमाह—

**अङ्गुष्ठाग्रमुखान्ता या आत्मसन्निधिलम्बिताः ।**
**शत्रूणां सूचिकास्तास्तु मातृस्थानादधः स्थिताः ॥ ९१ ॥**

याः पुनरात्मसन्निधिलम्बिताः आत्मसन्निधिमात्मरेखासन्निधिमव-लम्ब्य वर्तमाना अङ्गुष्ठाग्रमुखान्ताः । अङ्गुष्ठाग्रे अङ्गुष्ठाग्रविषये । अङ्गुष्ठाग्र-मुद्दिश्येति यावत् । मुखान्तः मुखस्वरूपं यासां तास्तथा । अन्तशब्दः स्वरूपवाची । ईदृश्यो रेखाः शत्रूणां सूचिकाः शत्रून् सूचयन्ति मातृस्था-नादधः स्थिताः । मातृस्थानं नाम तर्जनीमूलभागे तर्ज्जनीमध्यमयोरन्तर्भाग-स्याधोभागस्तर्जन्या अधोभागः । पितृस्थानं तर्जन्या अधोभागः । आत्म-रेखासङ्गतिस्थानम् आत्मस्थानम् । मध्यमाया अधोभागो भ्रातृस्थानम् । अना-मिकाया अधोभागो बन्धुस्थानं विद्यास्थानं च । कनिष्ठिकाया अधोभागः सुतस्थानम् । तदनेनैतदुक्तम् । अङ्गुष्ठमुख्यस्तर्जन्यधोभागवर्तिन्यः शत्रुरेखा इति ॥ ९१ ॥

तत्फलमाह—

**बहुवर्णा घर्घराङ्गयः स्फुरत्तनुमनोहराः ।**
**मण्डलाकारसंस्थानस्थानवृत्तिनिरोधिकाः ॥ ९२ ॥**

बहुवर्णाः बहवो वर्णा यासां तास्तथा, घर्घराङ्ग्यः दर्शने सति स्पर्शनेऽपि च घर्घराङ्गत्वेन प्रतिभासमानाः । तथा स्फुरत्तनुमनोहराः स्फुरन्ती तनुः स्फुरत्तनुः । स्फुरत्तनुर्नाम काचित् रेखा दीर्घाकारा । तया मनोहराः सुन्दर्यः । तथा मण्डलाकारसंस्थानस्थानवृत्तिनिरोधिकाः । मण्डला-

---

൧. 'മേലും നോക്കി പെരുവിരമ്മേ' ഖ. പാഠഃ. २. 'वासनि' मूलकोशपाठः. ३. 'त्तुर्नाम' ख. पाठः.

कारं संस्थानं यस्य तन्मण्डलाकारसंस्थानम् । तादृक्स्थानं मण्डलाकारसंस्थानस्थानम् । अत्र प्रवृत्तिनिरोधिकाः । तत्र प्रवृत्तेर्विरोधिका विरोधकारिण्यस्ता प्रकृता रेखा एव । विशेषणच्छलेन फलमुक्तम् । तत्र तावदाद्येन विशेषणेन बहुवर्णत्वेन भिन्नवर्णता भवतीति फलमुक्तम् । भिन्नवर्णत्वं नामैकस्मिञ्जन्मन्येव भिन्नवर्णता तस्य तद्वत पुरुषस्य स्यात् स्त्रिया वा । तथा द्वितीयेन विशेषणेनाङ्गस्य जर्जरता । तृतीयेन शरीरमनसोः प्रभ्रंशः फलं सूचितम् । चतुर्थेन स्थानप्राप्तिनिरोधः, प्राप्तस्थाननिरोधश्चेत्यवगन्तव्यम् । अत्रैवं विशेषोऽवगन्तव्यः — यदि छिन्नाकारा रेखास्तर्हि बहुवर्णता फलम् । यदि घर्घराङ्गित्वं शाखान्तरसत्त्वे सति तदैव कलेवरजर्जरता फलम् । तृतीयमपि फलं पूर्वोक्ततनुरेखासन्निविसत्त्वे सत्येव । चतुर्थमप्यङ्गुष्ठपार्श्वभागे तर्जन्या अधःपार्श्वभागे च इत्युभयमप्ये मण्डलाकारसंस्थानं यदि भवेत् तदैवेति । नाम शोभनराज्यस्य राज्ञ इयं प्रायेण दृश्यते इत्यस्मात् कारणादिति ॥ ९२ ॥

धन्वनीलक्षणमाह—

**धन्वनी तर्जनीपार्श्वे पर्वत्रयसमागता ।**
**धाष्टर्यमाशास्यमाशास्ते न प्रागल्भ्यं कथञ्चन ॥ ९३ ॥**

तर्जनीपर्वत्रयगता तत्पार्श्वगामिनी रेखा धन्वनी नाम । सा आशास्यं बहुमाननीयं धाष्टर्यं वैयात्यमाशास्ते सूचयति । ननु धाष्टर्यप्रागल्भ्ययोरविनाभावो दृश्यते प्रायेण सर्वत्र । तदत्रापि धाष्टर्ये सति प्रागल्भ्यमपि तद्वत् स्यादिति चेन्नेत्याह — नेति । प्रागल्भ्यं प्रगल्भतां प्रतिभावत्तामिति यावत् । कथञ्चन न सूचयति । न केनचित् प्रकारेण किञ्चिदपि सूचयतीत्यर्थः । तदनेनात्यन्तावश्यकं विद्वदादियोग्यं सर्वयोग्यं च प्रतिभावत्त्वं न कथञ्चन स्यात् । सर्ववर्ज्यम् अन्यत्र युद्धादिभ्यो वैयात्यं सूचयति चेति विरुद्धफलदातृत्वमुक्तं, धन्वनीनाम्ना दारिद्र्यं च । तत् कथमिति चेद् धन्वा मरुभूमिः, धन्वनी च तद्योगशीला । अतो मरुभूमियोगशीलेत्युक्तम् । तेन च लक्षणया दारिद्र्यमपि फलं सूचितमेव भवतीति मन्तव्यम् ॥ ९३ ॥

रागदन्तिकालक्षणमाह—

**विरुद्धा यात्मरेखायाः सन्निधौ वर्तते नराम् ।**
**सा मत्स्यवृत्तना चेत् स्यात् स्त्रीणां पुंसां च वृद्धिकृत् ॥**

या खल्वात्मरेखायाः सन्निधौ नित्यं वर्तते विरुद्धा । आत्मरेखा तर्जन्यभिमुखी, इयं तु तद्विरुद्धा । तस्या मत्स्याकारेण वृत्तता चेत् तर्हि स्त्रीणां पुंसां चासौ वृद्धिकृत् फलं फलोपायो वा तत् सम्पादयतीति शेषः । मत्स्यवृत्तता नाम मत्स्याकारता । नामतश्च प्रसिद्धिकार्याणि सम्भोगादीनि फलान्यपि भविष्यन्तीति सूचितम् । രാഗദന്തിക = തർജ്ജനിയുടെ താഴത്തു പിതൃസ്ഥാനത്തു് ആത്മരേഖയുടെ ഇടത്തെപ്പുറത്തു് അധോമുഖമായുള്ള രേഖ ഇതു് മത്സ്യാകാരമായിരിക്കും ॥ ९४ ॥

इन्दिरालक्षणमाह —

**आत्मरेखासन्निधौ या वर्तते दीर्घगामिनी ।**
**मध्यमाया अधोभागे चन्द्रपर्यन्तमत्र धीः ॥ ९५ ॥**

या पुनरात्मरेखायाः सन्निधौ रागदन्तिकायाश्च दीर्घगामिनी ऊर्ध्वमुखीत्यर्थः, काचित् रेखा समुन्निपतति, मध्यमाया अधोभागे या चन्द्राकारा रेखा तत्पर्यन्तमितीन्दिरालक्षणम् । अत्रेन्दिरायाम् अस्या इति यावत् धीः फलम् । बुद्धिसिद्धिः फलमिति यावत् । तद्वान् पुरुषो भूपतिश्च भवति । नामतश्च सा भगवती लक्ष्मीः प्रसन्ना भवतीति सूचितम् । तत्र च हेतुरिति च । ഇന്ദിര = മണിബന്ധത്തിങ്കൽ നിന്നു തുടങ്ങി രോഹിണിയുടെ ഇടത്തെപ്പുറത്തു് ഉള്ളംകൈയുടെ നടുവോളംതാൻ കീഴ്ബന്ധരേഖയോളം താൻ ഹംസരേഖയോളംതാൻ മദ്ധ്യമമേൽ കരേറുകതാൻ വലത്തെപ്പുറത്തിങ്ങുകതാൻ ചെയ്യുന്ന രേഖ ഇന്ദിര ॥

पुञ्जिकालक्षणमाह—

**करतलमूले या वा पुञ्जीभूता स्थितिस्तु रेखाणाम् ।**
**सा पुञ्जिकेति नाम्ना कुटिलाकारा मतियूनाम् ॥ ९६ ॥**

या खलु करतलमूले करतलाधोभागे मध्यप्रदेशे रेखाणां पुञ्जीभूता स्थितिः सा नाम्ना पुञ्जिकेति भविष्यति प्रसिद्धा । तस्याः फलं यूनां यौवनं

प्राप्तानां मतिः कुटिला स्यात् । असौ भूपतिश्च भवेत् । പുഞ്ജിക=ധർമ്മസ്ഥാനത്തിന്റെ ചുവട്ടിൽ സൂക്ഷ്മങ്ങളായ് അനേകരൂപങ്ങളായുള്ള രേഖായോഗം ॥ ९६ ॥

कन्धोर्लक्षणमाह—

**कन्धुः करभपर्यन्तभागे धर्मस्य नित्यगा ।**
**रोगमाप्नोत्यकालेन पुरुषः कामिनी रतिम् ॥ ९७ ॥**

या पुनः करभाख्यप्रदेशस्य पर्यन्तभागे धर्मस्य स्थाने नित्यगा नित्यं वर्तमाना सा कन्धुः तद्वान् पुरुषो नित्यरोगमाप्नोति । कामिनी पुनर्नित्यरतिं नित्यप्रीतिमिति यावत् । नामतस्तु कं शिरो धुनोतीति व्युत्पत्त्या शिरोरोगं फलं सूचयति । കന്ധു=കരഭസ്ഥാനത്തിങ്കൽ ധർമ്മസ്ഥാനത്തിന്റെ അരികെ കൂടി കനിഷ്ഠാംഗുലിയുടെ ചുവട്ടിൽ നിന്ന് പോകുന്ന രേഖ ॥ ९७ ॥

कमलालक्ष्माह—

**कमला कपिलाङ्गाढ्या श्रीप्रदा दीर्घसंस्थितिः ।**
**करमध्यप्रतिष्ठा च सा चायं च प्रयच्छति ॥ ९८ ॥**

या कपिलाङ्गाढ्या कपिशमूर्तिरमणीया, दीर्घसंस्थितिः दीर्घाङ्गीति यावत्, करमध्यतलस्था च, सा कमला नाम । तस्याः फलं श्रीर्विभूतिरित्यर्थः । फलान्तरम् आयं च सा प्रयच्छतीति । द्वितीयेन चशब्देन फलान्तरं सूचयति । तच्चायुरित्यवगन्तव्यम् । न च तत्रायुर्मात्रं फलमभिमतं, किन्तु चतुष्षष्टिवत्सरसमाप्तिपर्यन्तमिति दीर्घताफलत्वेन बुधैर्निश्चेतव्यम् । കമല=ഇന്ദിരയുടെ ഇടത്തെപ്പുറത്ത് ഇന്ദിരയെപ്പോലെ മേല്പെട്ടു പോകുന്നത് ॥ ९८ ॥

कामहस्तिकालक्षणमाह—

**करमध्यादुपरि या तत्प्रदेशोज्ज्वलप्रभे ।**
**प्रदेशे वर्तमाना सा कथ्यते कामहस्तिका ॥ ९९ ॥**

या करमध्यात् करतलमध्यात् तदुपरि करतलमध्योपरि तत्प्रदेशोज्ज्वलप्रभे करतलमध्यप्रदेशेनोज्ज्वलप्रकाशे प्रदेशे वर्तमाना सा कामहस्तिका कथ्यते बुधैः । फलमपि नाम्नैवोक्तम् । कथमित्यत आह— कामहस्तिका श्रीमती नारी । तथा च तया सम्पन्नस्य यादृक् फलं तादृगनया सम्पन्नस्यापि

भवतीति सत्पुत्रसुखादि फलं भवतीति कथितं भवति । കാമഹസ്തിക = മദ്ധ്യമയുടേയുമനാമികയുടേയുമിടയിൽ ബന്ധരേഖക്കുമേൽ മേല്പോട്ടുള്ള രേഖ ॥ ९९ ॥

रतिप्रदालक्ष्माख्याति —

**रतिप्रदा वर्तते सा मूलभूमौ द्रवत्तनुः ।**
**कनिष्ठिकायाः स्वर्णाभा स्त्रीभोगसुखमिष्यते ॥ १०० ॥**

या वै कनिष्ठिकाया मूलभूमौ मूले द्रवत्तनुः शिथिलीभवत्तनुः स्वर्णाभा रेखा वर्तते सा रतिप्रदा नाम । तया स्त्रीभोगसुखं फलमिष्यते सद्भिः । तस्यास्तत् फलमित्यर्थः । രതിപ്രദ = കനിഷ്ഠികയുടെ താഴത്തു് നേരെ ചെറുതായി പൊൻപോലെ വിലങ്ങു് ॥ १०० ॥

हेमवल्लीलक्षणमाह—

**हेमवल्ली हेमवर्णा वल्लीवद् द्योततेतराम् ।**
**अनामिकामूलतो या सापि प्राक्फलदा स्थिता ॥ १०१ ॥**

या पुनरनामिकामूले हेमवर्णा वल्लीवातिशयेन शोभते सा हेमवल्ली । सापि प्रागुक्तफलदा रतिप्रदाफलमेवास्या अपि फलमिति । ഹേമവല്ലി = അനാമികയുടെ താഴത്തു് രണ്ടേടത്തു് വളഞ്ഞു് വിലങ്ങത്തിൽ ॥ १०१ ॥

पल्लक्षणमाह —

**परमा मध्यमामूलगामिनी पत् प्रकीर्तिता ।**
**भ्रातृसम्पत् सुखं विद्या त्रयं फलमुदीरितम् ॥ १०२ ॥**

(पर ? परा) मा श्रीः कान्तिर्यस्याः सा तादृशी मध्यमामूले वर्तमाना पदिति कीर्तिता । तया भ्रातृणां निर्विशङ्कं सम्पत्तिः सुखं सर्वकारणजन्यं विद्यासामान्यम् इति त्रयं फलं भवतीत्युदीरितमभियुक्तैर्ज्योतिःस्थितिविद्भिः । പത എന്ന രേഖ മദ്ധ്യമയുടെ കീഴ്‌വിലങ്ങത്തിൽ സ്ഥൂലമായുള്ളതു ॥ १०२ ॥

पवित्रतनोर्लक्ष्माह —

**स्यात् पवित्रतनुः शुक्ला मन्दात्मा तर्जनीं गता ।**
**तया मनश्शुद्धिरलं कल्पनीया प्रवृत्तिवत् ॥ १०३ ॥**

या पुनस्तर्जनीं गता तर्जनीमूलगता शुक्लाकारा मन्दात्मा अस्पष्टाकारा सा पवित्रतनुः स्यात् । तया मनःशुद्धिरलं कल्पनीया प्रवृत्तिवत् । प्रवृत्त्या यथा शुभाशुभव्यामिश्रया मनश्शुद्ध्यशुद्धी कल्प्येते, तद्वदनयापि रेखया मनश्शुद्धिः कल्पनीयेत्यर्थः । പവിത്രതനു = തർജ്ജനിയുടെ കീഴ് വെളുത്തവിലങ്ങ് ॥ १०३ ॥

कृतालक्षणमाह —

**कृता त्वङ्गुष्ठमूले स्याद् रक्तवर्णा स्फुटाकृतिः ।**
**तया प्रवृत्तिसंरम्भः स्त्रीणां यूनामपि स्फुटम् ॥ १०४ ॥**

या त्वङ्गुष्ठमूले रक्तवर्णा स्फुटाकृती रेखा तया प्रवृत्तिसंरम्भः उक्तलक्षणासु प्रवृत्तिषु संरम्भः उपक्रम उत्साह इति यावत् । इदमपि लक्षणं स्त्रीणां पुंसां च । स्फुटम् असंशयमित्यर्थः । കൃത = അംഗുഷ്ഠത്തിന്റെ കീഴ് വിലങ്ങത്തിൽ ചുവന്ന ശംഖാകൃതിയോടു തട്ടാത്ത രേഖ ॥ १०४ ॥

रुक्मप्रभालक्ष्माह —

**अङ्गुष्ठपर्वणि परे वर्तमाना ज्वलच्छिखा ।**
**रुक्मप्रभा तया विश्वं विश्वरूप इव स्फुरेत् ॥ १०५ ॥**

या परे, परशब्द उत्कर्षवाची, अङ्गुष्ठस्योर्ध्वपर्वणीति यावत् । वर्तमाना ज्वलच्छिखा ज्वलन्ती शिखा ज्वाला यस्याः सा अग्निवर्णा । अत एव ज्वलच्छिखा सा रुक्मप्रभा नाम तया विश्वं सर्वोऽपि जनः जात्यादिविभागमप्राप्तः विश्वरूपो विष्णुस्तद्वत् स्फुरेत् परिस्फुरेत् । രുക്മപ്രഭ = അംഗുഷ്ഠത്തിന്റെ മേലെപ്പർവ്വത്തിന് മേൽ ഊർദ്ധ്വമുഖിയായുള്ളത് ॥ १०५ ॥

भवित्रीलक्षणमाह —

**रेखा भवित्री सुदृढा श्यामाकारा जरत्तनुः ।**
**अङ्गुष्ठाग्रगता सापि विश्वमेव वशं नयेत् ॥ १०६ ॥**

याङ्गुष्ठाग्रगता, सुदृढा निम्नस्थितिः, श्यामवर्णा, जरत्तनुर्जरठाङ्गी, रेखा सा भवित्री नाम । सापि, न केवलं पूर्वोक्ता । सापि विश्वमेव वशं नयेत् । विश्वं वशं नयेदेवेति वा योजना । ननु पूर्वोक्ता न विश्वं वशं नयेत् , अपितु सर्वं विष्णुरिव स्फोरयेदेवेति चेद् न । विष्णुवत् स्फोरणेनैव

सर्वस्य सर्वत्रशनयनस्योक्तत्वान् तस्य तथाभावादिति नावद्यं किञ्चित्। भवित्री नाम जन्मापेक्षया, जन्मावस्थायां तस्या अभावात्। ഭവിത്രി= അംഗുഷ്ഠത്തിന്റെ മേലേ അരികത്ത് ഉൎദ്ധ്വമുഖിയായി ഇടം പെട്ട് ശ്യാമവൎണ്ണയായി നഖസന്ധോളം ചെന്നതു॥ १०६ ॥

गोर्लक्षणमाह —

**गौः पृथुः प्रथिता रेखा धवलाङ्गी मृदुः  भा।**
**तर्जनीमूलपर्वस्था नीलाभा स्याद् यशस्करी॥ १०७॥**

या पृथुः स्थूलाङ्गी प्रथिता प्रस्फुटा, धवलाङ्गी, मृदुः स्पर्शे सति, शुभा दर्शने सति, तर्जन्या मूलपर्वस्था, सा गौर्नाम। तया स्त्री नीलाभा, नीला नाम विष्णुवल्लभा, तस्या इव शोभा यस्याः तथाभूता। यशस्करी यशस्सम्पादनकरी च स्यात् स्त्रीणामेवैतल्लक्षणमिति भावः। गोसादृश्या-न्नामसादृश्यम्, उक्तफलकारित्वात्। ഗൌഃ=തൎജ്ജനിയുടെ ചുവട്ടിലെ പൎവ്വത്തിലുരുപത്തെട്ടുവയസ്സിന്റെ സ്ഥാനത്ത് വെളുത്ത് വിലങ്ങ്॥ १०७॥

कालहृल्लक्षणमाह —

**स्यात् कालहृत् सुकपिला तर्जन्यूर्ध्वप्रवर्त्तिता।**
**तया सुखं दुःखभिन्नमनुभुङ्क्ते स मानवः॥ १०८॥**

या सुतरां कपिलाकृतिः तर्जन्यूर्ध्वपर्वगता रेखा सा कालहृन्नाम। तद्वान् मानवः सुखं निरतिशयमाप्नोति न तद्विच्छेद इत्यनुप्रयोगादवगम्यते। वर्तमाननिर्देशात् शीघ्रसिद्धिं सूचयति। दुःखभिन्नं दुःखाद् भिन्नं, दुःखासंस्पृष्टमित्यर्थः। കാലഹൃത്=തൎജ്ജന്യഗ്രത്ത് കപിലവൎണ്ണയായി വിലങ്ങ്॥ १०८॥

कृतलक्षणमाह —

**तर्जनीमध्यपर्वस्था स्थूला जर्जरदर्शना।**
**कृताख्या सा फलमलं दुःखमेव विभावयेत्॥ १०९॥**

तर्जनीमध्यपर्वण ऊर्ध्वांशगता, स्थूलमूर्तिर्दर्शने, विषमाङ्गी कृताख्यालं दुःखमेव फलं विभावयेद् उत्पादयेत्। जर्जरं दर्शनं यस्या सा तथेति बहुव्रीहिर्द्रष्टव्यः। नामतस्तु पूर्वदुष्कृतसूचकत्वं सूचयति। अत्र कृतमिति नाम, पूर्वं तु कृतेति भेदः। കൃത=തൎജ്ജനിയുടെ മദ്ധ്യപൎവ്വമദ്ധ്യത്തിങ്കൽ കുരട്ട എന്നപോലെ സ്ഥൂലയായി വിലങ്ങ്

१. 'रेति द', २. वैवद् दु' क. ख. ङ. पाठः.

विष्णुगीर्लक्षणमाह—

**सा विष्णुगीर्गतिर्यत्र तर्जनीमध्यपर्वगा ।**
**अधोंशे स्फुटसङ्कीर्णा रेखाभिर्व्याधिपीडनम् ॥ ११० ॥**

अयमर्थः—यत्र यस्या इत्यर्थः । यस्यास्तर्जन्या मध्यपर्वणोऽधोंशे गती रेखाभिरन्याभिः स्फुटसङ्कीर्णा स्पष्टतया व्यामिश्रिता सा विष्णुगीः । फलं व्याधिपीडनम् । सामान्यवचनात् सर्वव्याधिव्याप्तता तद्वतः पुरुषस्य द्योतिता । नामतस्तु आत्मा विष्णुरिति गीर्मात्रं, न विष्णुताध्यवसीयते, प्रत्युत परिच्छिन्नतया दुःख्यहमित्याद्यनुभूयत इति गम्यते । വിഷ്ണുഗീഃ=തർജ്ജനിയുടെ മദ്ധ്യപർവ്വത്തിൽ വിലങ്ങരേഖകളെ മുറിച്ചിട്ടു ടത്ത് ഭാഗമുയർന്നു വലതുഭാഗത്തു വിലങ്ങനെയായിരിക്കുന്ന രേഖ ॥ ११० ॥

वरिष्ठालक्षणमाह—

**वरिष्ठा तर्जनीमूलपर्वणि स्यात् स्वयंगमा ।**
**युग्माकृतिरनेकाङ्गी बन्धुवर्गं प्रसूचयेत् ॥ १११ ॥**

सा नाम वरिष्ठा, या तर्जनीमूलपर्वणि स्वयंगमा अप्रतिहतप्रकाशा, रेखाद्वयश्लेषजन्या, अनेकाङ्गी अनेकाङ्गोपोद्बलिता उपकरणभूताभिरनेकसङ्ख्याभी रेखाभिरुपोद्बलिता, सा बन्धुवर्गं सूचयेत् , प्रकृष्टं बन्धुजनं स्वसम्बन्धिजनस्य भाविनं सूचयति । बन्धुर्हि सर्वोपकरणेषु सम्पादनीयः तन्निमित्तत्वात् सर्वफलानाम् । अतस्तत्सम्पत्संसूचनादियं रेखा वरिष्ठाख्या । बन्धूनां वरिष्ठफलहेतुत्वेन वरिष्ठत्वात् तत्संसूचनी रेखापि वरिष्ठेति नामार्थः । വരിഷ്ഠ=തർജ്ജനിയുടെ ചുവട്ടിന്നടുത്തു മീതെ വിലങ്ങത്തിന്നു രണ്ടുതലയും കൂടാതായിരിക്കുന്ന ചില രേഖകളോടു ബന്ധിച്ചിരിക്കുന്നത് ॥ १११ ॥

स्मृतिलक्षणमाह—

**या विद्युत्सदृशाभोगा मध्यमामूलपर्वगा ।**
**अधःस्थितामतिक्रम्य वर्तते सा स्मृतिप्रदा ॥ ११२ ॥**

पूर्वपूर्वजन्मकृतानुभूतस्मारकत्वात् स्मृतिरियं शब्द्यते । यासौ विद्युत्समानप्रकाशा, मध्यमामूलपर्वगता, तत्राप्यधःस्थितां रेखामतिक्रम्य उपरिभागे वर्तते तिष्ठति, एषा स्मृतिरिति स्मृता तज्ज्ञैर्व्यासप्रभृतिभिः ।

സ്മൃതി=മദ്ധ്യമയുടെ ചുവട്ടിൽ നിന്നു് മേലൊരു രേഖകഴിച്ചു് മീത്തെ രേഖ. കീഴെ രേഖയില്ലായ്കിലും തന്റെ സ്ഥാനത്തുള്ളത എല്ലാടവും. സ്ഥാനനിയമമില്ലാത്തെടത്തിങ്ങനെയെ റ്റരിക ॥ ११२ ॥

ऊह्यालक्षणमाह—

**ऊह्या स्याद् बिन्दुसङ्कीर्णा तदूर्ध्वस्थानसंस्थिता ।**
**तया तर्कपरिच्छित्तिरिष्यते शाब्दिकी तथा ॥ ११३ ॥**

बिन्दुर्नाम रसाभः कश्चिद् वर्णखण्डविशेषः । तत्सङ्कीर्णा तैर्बहुभिरुपबृंहितेति प्रतीयमाना प्रतिपत्तॄणां पूर्वोक्तलक्षणाया रेखाया उपरि स्थिता ऊह्या नाम । तया तर्कपरिज्ञानं सूच्यते शाब्दं च परिज्ञानम् । प्रथमं तर्कपरिच्छेदो विज्ञायते, तदनन्तरं शब्दस्वरूपपरिच्छित्तिरपि । तद्वशादप्रत्यूहमुत्पद्यत इति हेतुहेतुमद्भावेन फलद्वित्वं विवक्षितम् । ഊഹ്യ=സ്മൃതിയുടെ മീത്തെവിലങ്ങു് വെളുത്ത ചിലബിന്ദുക്കളോടു കൂടിയിരിക്കിന്റതു് ॥ ११३ ॥

कपिलालक्षणमाह—

**कपिलाकृतिरङ्गुष्ठपूर्वसन्धिमतीत्य या ।**
**प्रवर्तते सुविपुला सायुरूर्जितमादिशेत् ॥ ११४ ॥**

या कपिलाकाराङ्गुष्ठस्य पूर्वसन्धिं मूलसन्धिमतीत्यातिक्रम्य पृथुतरा वर्तते प्रकाशते, सा कपिला नाम । तत्फलमूर्जितायुष्ट्वं सा ऊर्जितामायुःस्थितिं सूचयति । കപില=അംഗുഷ്ഠത്തിന്റെ ചുവട്ടിലെ ബന്ധരേഖക്കു മേലെ വിലങ്ങു ॥ ११४ ॥

कामवल्लिकालक्षणमाह—

**तत्र मध्यस्थिता वक्राकृतिरिष्टा परा पुनः ।**

परा कामवल्लिकाख्या पुनस्तत्राङ्गुष्ठ एव मध्यस्थिता मध्यपर्वस्थिता वक्राकृतिरनृज्वाकृतिरिष्टा विदुषां व्यासप्रभृतीनाम् । तत्फलमाह —

**सर्वासां वश्यता साक्षात् सुखसिद्धिर्गरीयसी ॥ ११५ ॥**

सर्वासामभीप्सितानां नारीणां वश्यता यथेष्टानुवृत्तिता साक्षाद् भवति । ततश्च गरीयसी गुरुतरा सुखसिद्धिः साक्षाद् भवति । सर्वा एवाभीप्सिताः स्त्रियोऽस्यानया रेखया सम्पन्नस्य वशे स्युः । तथा महत्तमा

सुखसिद्धिश्च भवतीति भावः । नामार्थः स्पष्टः । കാമവല്ലികാ=അംഗുഷ്ഠത്തിന്റെ ചുവട്ടിങ്കൽ നിന്നു മീനെ യുഗ്മത്തെന്റു മേൽചൊല്ലുവാനിരിക്കിന്റ രേഖയുടെ അടുത്ത് മീതെ വിലങ്ങു വളഞ്ഞിരിക്കിന്റതു് ॥ ११५ ॥

कन्दलीलक्षणमाह—

**कन्दली मकुटस्थाने तस्यैव स्फुटकाशिनी ।**
**फलं तु चक्रवर्तित्वं पुरुषाणां स्त्रिया रतिः ॥ ११६ ॥**

या पुनस्तस्यैवाङ्गुष्ठस्य मूर्धनि मकुटस्थाने प्रस्फुटप्रकाशनस्वभावा, सा कन्दली नाम । फलं तु तस्या इदं पुंसां चेच्चक्रवर्तिता, स्त्रीणां चेत् समुचितप्रियतमलाभेन परा रतिः, सुरतसम्पत्समृद्धिरित्यर्थः । प्रसूनस्यैतत्तदाख्यस्य संसेवनादिदमुभयफलम् । तथा तदाख्यया रेखया सङ्गतस्यापि तत्फलसिद्धिरिति मन्तव्यम् । കന്ദളി=അംഗുഷ്ഠത്തിന്റെ പകളിൽ നഖത്തിന്റെ ചുവട്ടിങ്കൽ നിന്നു മേലങ്കത്തു രണ്ടുപുറവും നഖത്തോടു തട്ടിയിരിക്കിന്റ രേഖ ॥ ११६ ॥

केलिकालक्षणमाह—

**मध्यमा पूर्णमध्याङ्गी रेखाभिश्चेत् क्वचिद् भवेत् ।**
**तदा तत्रोर्ध्वपर्वस्थाधोंशाधःस्था तु केलिका ॥ ११७ ॥**

अयमर्थः—यदि बहुधो रेखा मध्यमामध्यदेशं व्याप्नुयुः क्वचित् तर्हि तत्र तस्योर्ध्वपर्वणो योऽधोंशस्तस्य योऽधोंशस्तत्र स्थिता या रेखा सा केलिकेति ॥ ११७ ॥

तत्फलमाह—

**यथेष्टकरणे तस्य नास्ति यन्ता नृपः स्वयम् ।**
**किमुतान्ये नच पुनः कामदेवः स्वयंप्रभुः ॥ ११८ ॥**

तस्य तद्वतः पुंसः यथेष्टाचरणे स्वयं नृपोऽपि न नियन्ता न नियामकः, किमुतान्ये । न च कामदेवोऽपि नियन्ता । तेन जितेन्द्रियत्वं तस्य सम्पद्यत इत्युक्तं भवति सर्ववश्यता च । किञ्च सर्वमेवास्य कर्म केवलं लीलाविशेषमेव भवतीति नामतोऽवगम्यते । കളിക=മദ്ധ്യയുടെ മേലെ മദ്ധ്യപർവ്വത്തിന്റെ നടുവിലേതു് ॥ ११८ ॥

युक्तालक्षणमाह—

**युक्ता तत्र तु सन्ध्यंशरेखया सङ्गता स्फुटम् ।**
**तस्या अभीष्टयोगस्तु फलमिष्टं न संशयः ॥ ११९ ॥**

तत्राङ्गुष्ठपर्वसन्धिकार्यांशभूतया रेखया सुप्रकाशं सङ्गता रेखा युक्ता नाम। तस्याः फलमभीष्टसिद्धिः। अभीष्टयोगशब्देन चक्रवर्तित्वं सूचितम्। असंशयश्च सर्वत्रेति द्वयमिष्टम्। യുക്ത=അംഗുഷ്ഠത്തിന്റെ ചുവട്ടിലെ സന്ധിരേഖയുടേയും നടുവിലെ സന്ധിരേഖയുടേയും നടുവിൽ സന्धിരേഖ എന്നപോലെ ഉള്ളതു് ॥ ११९ ॥

वृत्तेर्लक्षणमाह —

**तत्रापि मकुटाकारा सा रेखान्तरसंयुता ।**
**वृत्तिं योग्यां विधत्ते च फलं तस्याः प्रयच्छति ॥ १२० ॥**

तत्राप्यङ्गुष्ठवन्मध्यमायामपि मकुटाकारा रेखान्तरसंयुता च रेखा वृत्तिरिति शब्द्यते। योग्यां ब्राह्मणादेर्ब्रह्मचर्यादेश्च योग्यां समुचितां विहितामिति यावत्, विधत्ते करोतीत्यर्थः। समुचितप्रवृत्तेः फलं च भावयति। अविघ्नं च कारयतीत्यर्थः; तत् सर्वं सूचयतीत्यभिप्रायः। नामार्थः स्फुटः। വൃത്തി=മദ്ധ്യമയുടെ അഗ്രത്തിങ്കൽ നഖത്തിന്റെ ചുവട്ടിന്നു് നേരെ കണ്ടളിന്റെപ്പോലെ മറ്റൊരു രേഖ കൂട്ടുകയാൽ പെളിഞ്ഞതപോലെ ഇരിക്കുന്നതു് ॥ १२० ॥

आश्रयपावनीलक्षणमाह —

**तदन्तरालखण्डार्धमार्गमाश्रित्य तिष्ठति ।**
**स्यादाश्रयपावन्याख्या नामतः फलशंसनम् ॥ १२१ ॥**

तस्या मध्यमाया अन्तरालखण्डो मध्यमपर्वं तदेव मार्गं स्थानमाश्रित्य तिष्ठति या, साश्रयपावन्याख्या भवेत्। किं फलमित्याकाङ्क्षां शमयति — नामतः (इति।) स्पष्टार्थः। (पाद? मार्ग)माश्रित्य तिष्ठति, व्यादाय स्वपितीतिवद् द्रष्टव्यम्। अस्य नाम्न एषोऽर्थः — रेखा स्वाश्रयभूतं पुरुषं पावयतीति पावनकर्मानुष्ठानसूचनेन पावनत्वं सूचयतीति यावत्। ആശ്രയപാവനി=മദ്ധ്യമയുടെ മദ്ധ്യപർവ്വത്തിന്റെ ഒപ്പായിലും വലിയ രേഖ കേളികെടെ താഴത്തു താനും ॥ १२१ ॥

मेदुरालक्ष्माह —

**कनिष्ठिकामध्यपर्वस्थिता रेखान्तरान्विता ।**
**या रेखा मेदुरा नाम सैषा पुत्रादिसूचनी ॥ १२२ ॥**

पुत्रभ्रातृबन्धुज्ञात्यादिभिः स्वाश्रयस्य मेदुरतां बृंहिततां सूचयतीति नामार्थविवरणेन फलकथनम् । മേദുര=കനിഷ്ഠികയുടെ മദ്ധ്യപർവ്വത്തിങ്കൽ എല്ലായിലും സ്ഥൂലയായി ചുഴലവുമുള്ളതു്. ചിലക്കു് ഇടയിടെ അസ്പൃഷ്ടയായിരിക്കും. അകത്തെപ്പാർശ്വത്തിങ്കൽ തന്നോടു തട്ടാതെ മററു ചില രേഖകളുമുണ്ടായിരിക്കിൻറതു്. ॥ १२२ ॥

रात्रिलक्ष्माह —

रात्रिस्तन्मूलपर्वस्था कृष्णाकृतिरमङ्गला ।
रेखान्तराभियुक्ता सा मोहमेव तु भावयेत् ॥ १२३ ॥

या पुनस्तस्याः कनिष्ठिकाया मूलपर्वगता कालाकृतिः, अत एवामङ्गलप्रकाशा, सा रेखान्तरैरन्विता च, सा रात्रिर्नाम रेखा । सा मोहमेव फलं नान्यत् किञ्चिदपि, इदं तु विभावयेत्, सूचयेदित्यर्थः । രാത്രി=കനിഷ്ഠികാമൂലപർവ്വത്തിങ്കൽ മേദുരയാകിൻറ രേഖപോലെ॥ १२३॥

अत्युच्चालक्षणमाह —

अत्युच्चाप्यूर्ध्वपर्वस्था सम्मिश्रिततनुः स्वयम् ।
अन्याभिः स्फुटगर्भाभिः स्वायुःपोषं प्रपालयेत् [॥ १२४ ॥

या पुनरप्यूर्ध्वपर्वस्था रेखान्तरैः सम्मिश्रिततनुः सङ्कीर्णस्वभावा स्फुटतरैः सात्युच्चा नाम । सा शोभनमायुःपोषं परिपालयेत्[1], यथावत् सूचयतीत्यर्थः । स्फुटगर्भाभिः स्फुटतागर्भाभिरित्यर्थः । അത്യുച്ച=കനിഷ്ഠികയുടെ അഗ്രത്തിങ്കൽ കന്ദളികയെപ്പോലെ മകുടാകാരയായിരിക്കിൻറതു്. ഇതിന്നു വിശേഷം; അടുത്തു് രേഖാന്തരങ്ങളുണ്ടായിരിക്കും ॥ १२४ ॥

कमठध्वस्तिकालक्षणमाह —

या तत्रैवोत्तरांशाधःस्थिता परुषदर्शना ।
सा मता कमठध्वस्तिः फलं कठिनता नृणाम् ॥१२५॥

या तत्रैव कनिष्ठिकायामेवोत्तरांशस्य ऊर्ध्वतमांशस्याधःस्थिता अधोभागगता दर्शने परुषप्रतीतिजननी सा कमठध्वस्तिर्मता । फलं तु नृणां स्वाश्रयभूतानां कठिनता अधृष्यता, अजेयता, अपरिच्छेद्यता, अलघुता चेति चतुष्टयम् । കമഠധ്വസ്തി=അത്യുച്ചയുടെ അടുത്തു താഴത്തു് വിലങ്ങു് പരുഷയായിരിക്കിൻറതു് ॥ १२५ ॥

1. 'त् सु' क. ख. पाठः.

आमलालक्षणमाह —

तत्रैव बन्धनीश्लेषे सामला परिशब्द्यते ।
मनोवैशद्यमाख्याति नात्र कार्या विचारणा ॥ १२६ ॥

तत्रैव कनिष्ठिकायामेव बन्धनीरेखाया ऊर्ध्वपर्वस्वरूपायाः श्लेषे द्वित्वे सामला संशब्द्यते । सा मनोनैर्मल्यमनवद्यमाख्याति । अत्र सर्वत्र साधारणं निश्चायकप्रमाणमाह —नात्रेति । अन्वयव्यतिरेकाभ्यामस्माभिरेवावगतम् । वयं प्राप्ता इति न विचारकारणं संशय इति न विचार्यमित्यर्थः । ആമല= കനിഷ്ഠികയുടെ മേലെ ബന്ധരേഖയോട് കൂടുകകൊണ്ട് താൻ മീതെ നിൻറ യവാകൃതിയെ തോൻറിക്കിൻറ രേഖ. ബന്ധരേഖയോട് ഒരരികത്ത് തട്ടാതേയുമിരിക്കിൻറതു് ॥ १२६ ॥

मरालनेत्रिकालक्षणमाह —

मराणनेत्रिका कृष्णा या सा चानामिकाश्रयात् ।
ऊर्ध्वस्थिता फलं त्वस्याः स्त्रीणां सौभाग्यमिष्यते ॥ १२७ ॥

सा मरालनेत्रिका नाम, या कृष्णवर्णा अनामिकाश्रयादूर्ध्वस्थिता । आश्रयशब्दो मूलवचनः । ऊर्ध्वभागस्थिता च । तस्याः फलं सौभाग्यम् । स्त्रीणामेवेदं लक्षणम् । नामार्थतस्तु सौन्दर्यं ध्वनयति । മരാളനേത്ര = അനാമികയുടെ മൂലപർവ്വത്തിങ്കൽ എല്ലായിലും ചുവട്ടിൽ കറുത്ത് വിലങ്ങ് ॥ १२७ ॥

गोघ्नीलक्ष्माह —

तदूर्ध्ववर्तिनी निम्नपदव्यात्मा(का?) च सा मता ।
गोघ्नी सर्वप्रवृत्तीनां प्रमाणानां च हानिकृत् ॥ १२८ ॥

तस्याः पूर्वोक्तलक्षणाया ऊर्ध्वभागे वर्तितुं शीलं यस्याः सा तादृशी निम्नमार्गस्वरूपिणी च गोघ्नी मता । तस्याः फलमाह — सर्वेति । सर्वप्रवृत्तीनां शुभाशुभव्यामिश्रात्मकानां सर्वप्रमाणानां च प्रत्यक्षादीनां हानिकृत् परित्यागकारकः पुरुषः स्यात् । स्त्री वापि । ഗോഘ്നി = മരാളനേത്രികയുടെ മുകളിലെ മേൽ മേല്പെട്ടു ഉപമുഖിയായി കഴിഞ്ഞു വിദ്യാധരരേഖയോട് ചേന്നിരിക്കിൻറത് ॥ १२८ ॥

वृत्ताख्यलक्षणमाह —

**या तदूर्ध्वस्थिता नम्रमुखी वृत्तं न निह्नुते ।**
**सा वृत्तसंज्ञा सर्वेषां स्ववृत्तमनुयच्छति ॥ १२९ ॥**

या तदूर्ध्वस्थिता तस्याः पूर्वोक्तलक्षणाया रेखाया ऊर्ध्वस्थिता ऊर्ध्वभागास्थिता नम्रमुखी वक्राग्रभागा वृत्तं वर्तुलाकारं न निह्नुते न तिरस्करोति सा वृत्ताख्या रेखा । सर्वेषां स्वाश्रयाणां स्ववृत्तं स्वाचारं यच्छति अनुयच्छति च निरन्तरं यच्छति च । तत् सूचयतीति यावत् । വൃത്ത = രേഖാസ്ഥിയുടെ അഗ്രത്തെ മറിച്ച് വിലങ്ങ് ॥ १२९ ॥

लम्बपयोधरालक्षणमाह —

**या स्याच्चिबुकसन्धौ तु पश्चिमावरभूगता ।**
**तिर्यङ्मुखी सुनिम्नाङ्गी सा तु लम्बपयोधरा ॥ १३० ॥**

स्त्रीलक्षणमात्रमेतत् । अस्यायमर्थः — या पश्चिमावरभूमिगता अधरावःप्रदेशगता तत्रापि चिबुकसन्धौ स्यात् । किञ्च तिर्यङ्मुखी तिर्यक् प्रवृत्ता, सुतरां निम्नरूपा या, सा लम्बपयोधरा नाम । तुरवधारणे लम्बपयोधरैव । आद्यस्तुशब्दो विशेषार्थः । अत्र फलं नामत एव स्फुटं प्रतिभातीति पृथङ् नोच्यत इति द्रष्टव्यम् । ലംബപയോധര = കീഴെ ചുണ്ടിന്റെ താഴത്ത് കഴിഞ്ഞസ്ഥാനത്ത് വിലങ്ങ് സ്ഥൂലയായുള്ള രേഖ ॥ १३० ॥

महामतिलक्षणमाह —

**महामतिः स्फुटाकारा दीर्घरूपा विशेषतः ।**
**कनिष्ठिकानामिकयोरन्तरा तलगामिनी ॥ १३१ ॥**

सा महामतिर्नाम । तदेव फलं यन्नामतो गम्यते, नोच्यते च । स्फुटतराकृतिविशेषा दीर्घरूपा च विशेषतः, कनिष्ठिकानामिकयोरन्तरा मध्यमार्गेण करतलगमनप्रवृत्ता च । तत्र विशेषो द्रष्टव्यः । कनिष्ठिकासन्निधौ चेद् बह्वीषु सतीषु तदैवैतन्नामतः फलं च नानामिकासान्निध्ये इति । മഹാമതി = കനിഷ്ഠികാനാമികകളുടെ നടുവിൽനിന്ന പുറപ്പെട്ട് ബന്ധരേഖയോളം താനതിലൊട്ടു കുറഞ്ഞുതാനുള്ളം കൈകനോക്കി നീണ്ട ഒന്റായിട്ടുതാൻ പലവായിട്ടുതാനിരിക്കിൽ അത് അനാമികയുടെ അടുത്ത് ഇരിപ്പുമും ചെയ്യും ॥ १३१ ॥

---

१. 'राधराधः' ख. पाठः.

पतिलक्षणमाह —

**पतिः पृथ्वी मृदुगर्भा तयोरेवान्तरा स्थिता ।**
**अनामिकासन्निधौ चेत् सा पुत्रं सूचयत्यलम् ॥ १३२ ॥**

या तयोः कनिष्ठिकानामिकयोरन्तरा मध्ये स्थिता, पृथ्वी पृथुतरा मृदुगर्भा अत्यन्ताल्पा रेखा गर्भाकारा यस्याः सा तादृशी, सानामिकासन्निधौ चेत् तर्हि पुत्रम् अलं सूचयति । एवं चेत् पुत्रमप्यलं गमयतीति भावः । പതി — ഇപ്പോൾപ്പറഞ്ഞവണ്ണം കനിഷ്ഠികയുടെ അടുത്തു നിൻറ പുറപ്പെട്ടകിൽ മഹാമതി സ്ഥൂലയായുള്ളു. പതി ചെറുതായിരിക്കും. ഇവ രണ്ടിൻേറയും നടുവിൽ മറെറാൻറ നെടുതായുണ്ടാകിൽ മഹാമതിയിൽ കൂട്ടു. കറുതാകിൽ പതിയിൽ കൂട്ടു ॥ १३२ ॥

क्लेशलक्षणमाह —

**क्लेशस्तु तर्जनीमध्यमामध्ये सा प्रतिष्ठिता ।**
**तर्जनीसन्निधिश्चेत् स्यात् तत्फलं समुदीरयेत् ॥ १३३ ॥**

सा क्लेशो नाम रेखा, या तु तर्जनीमध्यमामध्ये प्रतिष्ठिता, तत्रापि तर्जनीसन्निहिता च तं क्लेशमेव फलमुदीरयेत् प्रकाशयेदित्यर्थः । ക്ലേശം — തർജ്ജനീമദ്ധ്യമകളുടെ നടുവിൽ നിൻറ് ഉള്ളംകൈനോക്കി ബന്ധരേഖയോളം നീണ്ടതാൻ നീളാതെതാനൊൻൻറായിട്ടുതാൻ പലവയായിട്ടുതാൻ ഇരിക്കിൻറത്. മദ്ധ്യമയുടെ അടുത്താകിലും തർജ്ജനിയുടെ അടുത്താകിലും ഫലവും പോലെ മൊൻറ് ॥ १३३ ॥

पाशलक्षणमाह —

**पाशस्तु पृष्ठतो हस्ततलस्य प्रथिता स्फुटा ।**
**वृत्ताकृतिस्तया विश्वं वश्यमेव भवेत् सदा ॥ १३४ ॥**

या हस्ततलस्य पृष्ठतः पृष्ठे । पृष्ठशब्दः स्वरूपवाची । भूपृष्ठ इतिवत्, हस्ततल इति यावत् । प्रथिता सुप्रकाशा स्फुटा वृत्ताकृतिर्वर्तुलाकारा रेखा, तया विश्वं सर्वमपि जगद् वश्यं भवेत् । सदा, न कचित् कदाचित् केनचित् । उपलक्षणतयेदं द्रष्टव्यम् । പാശം — ഉള്ളംകൈയുടെ നേരെ നടുവിൽ കാലുപോലെ വട്ടത്തിലിരിക്കിൻറത് ॥ १३४ ॥

बाललक्षणमाह —

**बालः स्निग्धस्पर्शयोगी दर्शने स्वर्णदीधितिः ।**
**तदधः करबन्धस्था जात्युत्कृष्टं प्रयच्छति ॥ १३५ ॥**

बालो नाम सा । दर्शने स्निग्धस्पर्शयोगी, दर्शने स्वर्णदीधितिः स्वर्णच्छविः, करतलादधःस्थिता बन्धस्थानगता करस्य । सा जात्युत्कृष्टं रत्नं फलं प्रयच्छति । स्निग्धस्पर्शयोगीति पुँल्लिङ्गनिर्देशो बालशब्दापेक्षया इत्यनुसन्धेयम् । ബാല = രോഹിണിയുടെ ചുവട്ടിൽ നിന്നുതാൻ കട്ടു വലത്തുനിന്നുതാൻ ക്രമത്താലെ ധന്മസ്ഥാനം നോക്കിപ്പോകിന്റ രേഖ ॥ १३५ ॥

मदलक्ष्माह—

**मदः पादतलस्था या मध्यमामभिगच्छति ।**
**तद्दाने तस्य सामर्थ्यं शुभमेव प्रयच्छति ॥ १३६ ॥**

या खलु पादतले मध्यमामभिगच्छन्ती रेखा, सा मदो नाम । तद्दाने मददाने सामर्थ्यं सा प्रयच्छति शुभं सामर्थ्यं च सर्वविषयं शक्तिशब्दवाच्यम् । नचास्या ऊर्ध्वरेखात्वमाशङ्कनीयं, तस्या मूलतोऽनुगमाद् अस्याश्च मदाख्यायाः पादतलचतुर्भाग एवारम्भादिति भावः । മദം = ഉള്ളംകാലിൽ മദ്ധ്യമയ്ക്കു നാലുവിരൽ താഴത്തു നിന്നുതുടങ്ങി മേല്പെട്ടു മദ്ധ്യമയുടെ മേൽ ചേരുന്റ രേഖ ॥ १३६ ॥

अलसालक्षणमाह —

**तत्रैवानामिकां या तु गच्छन्ती स्फुटनिम्नगा ।**
**अविच्छेदे स्थानयुग्मे सालसा परिकीर्त्यते ॥ १३७ ॥**

या तत्रैव पादतले अनामिकां गच्छन्ती स्फुटनिम्नगा स्फुटं निम्नतया गच्छतीति तथाभूता, सा अलसा परिकीर्त्यते । किञ्च विशेषोऽस्ति, स्थानयुग्मे यद्यविच्छेदो भवेत् । अन्यथा तूभयत्र विच्छेदे नास्या अलसेति नाम, किन्तर्हि स्फुटेत्यवगन्तव्यम् । अत्रापि नामत एव फलं गम्यत इत्यनवद्यम् ॥ १३७ ॥

इति स्कान्दशारीरके नानाविधरेखालक्षणं नाम सङ्कीर्णो द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः।

एवं तावन्नानास्थानगतानां नानाविधानां रेखाणां पृथक् पृथग् लक्षणानि फलानि च दर्शितानि। सम्प्रति स्थाननियतानां रेखाणां स्थानानां च तद्गतवर्णानां च लक्षणानि फलानि चोच्यन्ते। तत्र तावल्ललाटस्थानगतवर्णलक्षणमाह —

**रजो ललाटपर्यन्तरोमसन्धौ तु वर्तते।**
**तत्फलं मानिता नृणां स्त्रीणां त्वत्यल्पपुष्पभीः॥ १॥**

ललाटपर्यन्तभागे रोमसन्धौ यो वर्णविशेषो वर्तते, स रजो नाम। तुशब्दो विशेषार्थः। पूर्वं सङ्कीर्णानां रेखाणां लक्षणमुक्तम्। इदानीं तु नेति विशेषः। तत्फलं तस्य वर्णस्य फलं, पुरुषाणां मानः ख्यातिपूजादिना। स्त्रीणां त्वत्यल्पपुष्पभीः। अत्यल्पं मे पुष्पं भवति, न यथायोग्यमिति चिन्ताकुलितमानसतया निरन्तरं भीर्जायत इति। അത്യല്പപുഷ്പഭീ=കുറെ തീണ്ടായിരിക്കയും കുറെ കുറെ പൊട്ടുകകൊണ്ടുള്ള പേടി॥ १॥

सत्त्वलक्षणमाह —

**सत्त्वं ललाटमध्यस्थस्फुटबिन्दुविराजिता।**
**वर्णभङ्गिस्तत्फलं तु धर्मनित्यप्रवृत्तिता॥ २॥**

अयमर्थः — यस्तु पुनर्ललाटदेशमध्यस्थास्तिर्यक्प्रवृत्तः स्फुटैर्बिन्दुभिः स्वर्णाकारैरतिशयेन शोभमानो वर्णभङ्गिविशेषः, स सत्त्वमित्याख्यायते। तत्फलं नित्यधर्मप्रवृत्तिः॥ २॥

तमोलक्षमाह —

**तमस्तु भ्रूलताद्वन्द्वमध्ये कस्तूरिकाकृतिः।**
**तिलकाकार आभाति तत्फलं कृष्णचारिता॥ ३॥**

यस्तु पुनस्तमो नाम वर्णभङ्गिविशेषस्तस्येदं लक्षणम्। भ्रूलताद्वन्द्वमध्ये भ्रूलतयोर्द्वन्द्वं यत् तस्य मध्ये अन्तराले तिलकस्थाने यस्तिलकाकार आभाति, स तमो नाम वर्णविशेषः। तस्येदं फलं, यत् कृष्णचारिता भवतीति। कृष्णं चरतीति कृष्णचारी तस्य भावस्तत्ता कृष्णचारिता। कृष्णं नाम निषिद्धकर्मोच्यते॥ ३॥

मोहलक्ष्माह —

**नयनावारके या तु वर्णस्थितिरुदीरिता ।**
**मोहनाम्ना फलं तस्याः स एव परिकीर्त्यते ॥ ४ ॥**

या पुनर्नयनावारके नयनबहिर्गोलिकायां तत्रापि बहिर्भागे वर्णस्थितिः धवलवर्णस्थितिः, सा मोहाख्ययोदीरिता । तस्याः फलं स एव परिकीर्त्यते बुधैः यो नामोक्तो मोहः स एवेत्यर्थः ॥ ४ ॥

परिक्लेशलक्षणमाह —

**परिक्लेशस्तदन्तर्या वर्णस्थितिरुदीरिता ।**
**धवला तत्फलं क्लेशः स च चक्षुषि वर्तते ॥ ५ ॥**

या पुनस्तदन्तर्वर्णस्थितिस्तस्य नयनावारकस्यान्तर्वर्णस्थितिर्वर्ण-व्यक्तिः धवला, धवलवर्णव्यक्तिरिति यावत् । सा परिक्लेशो नामोदीरिता । तस्याः फलं क्लेशः । तत्रापि विशेषः कथ्यते स च चक्षुषि वर्तत इति । चक्षुःक्लेशः परिक्लेशस्य फलम् । नाम्नि परिशब्दबलाच्चक्षुःक्लेशस्य बाहुल्यमपि द्योतितं भवतीत्यवगन्तव्यम् ॥ ५ ॥

क्षयलक्ष्माह —

**अन्तश्चक्षुर्गोलकायां बहिर्यः परिवर्तते ।**
**स क्षयस्तत्फलं मासषट्कादर्वाङ् मृतिर्ध्रुवा ॥ ६ ॥**

यस्तु पुनरन्तश्चक्षुर्गोलकायां बहिः परिवर्तते परिवेषाकारेण वर्तते तारकां परितः, स क्षयः । स च मासषट्कादर्वाक्[1] मृतिं यच्छति, ध्रुवा यावन्मासषट्कं पर्यवस्यति तावत् तद्वतः पुरुषस्य मृतिर्भवति निश्चितेति सूचयतीत्यर्थः ॥ ६ ॥

कफलक्षणमाह —

**कफस्तु तारकाधस्तात् पिण्डाकारः स कृष्णिमा ।**
**तत्फलं नयनध्वंसो यत्रकुत्रापि चेदपि ॥ ७ ॥**

अस्यार्थः — तारका कनीनिका (൭ൃ൨൭ൗ) । तस्या अधस्ताद् यः पिण्डाकारः कृष्णिमा, स कफः । तत्फलं नयनध्वंसः चक्षुर्भङ्गस्तस्य फलम् । अधस्ताद्गतस्य पिण्डाकारस्य कृष्णिमाकारस्येदं फलं नाम च । अपितु यत्रकुत्रापि चक्षुर्गोलकाया मण्डलाकारे गतस्येति भावः ॥ ७ ॥

1. 'क् षण्मासादर्वाङ् मृ' क. पाठः.

पाणिप्रदालक्ष्माह —

हनौ या वर्तते कृष्णा वर्णाकृतिरभङ्गुरा ।
पाणिप्रदा मता तस्याः फलं स्यात् तु वदान्यता ॥ ८ ॥

या पुनर्हनुप्रदेशे कृष्णा कृष्णवर्णा अभङ्गुरा अविच्छिन्ना वर्णविशेषस्थितिः, सा पाणिप्रदा नाम । तस्याः फलं वदान्यता स्यादेव । तुशब्देनावधारणार्थेन वर्णस्थितेः फलव्यभिचाराभाव उक्तः । अत एव नामार्थोऽपि घटते । यत्किञ्चिद् द्रविणाभावे स्वपाणिप्रदानेऽपि तद्वतः पुरुषस्य स्त्रिया वा अप्रतिहता दृढा बुद्धिर्भवतीति ॥ ८ ॥

पाणिहतेर्लक्ष्माह —

तत्रैव धवलाकारा वर्णभङ्गिस्थितिर्ध्रुवा ।
मता पाणिहतिर्नाम दृष्टवैरं प्रयच्छति ॥ ९ ॥

या तु पुनस्तत्रैव हनुप्रदेशे एव, धवलाकारा धवला, वर्णभङ्गिस्थितिर्वर्णस्य चतुरश्राद्याकारेण भङ्ग्या स्थितिः, पाणिहतिर्नाम सम्मता, विदुषां व्यासादीनाम् । सा तु पुनर्यो यो दृष्टः पुरुषः स्त्री वा तेन तेन तया तया च वैरं प्रयच्छति स्वाश्रयपुरुषस्य स्त्रिया वा । नामार्थः पाणिहतिमप्यसौ कारयतीति ॥ ९ ॥

कोटिलक्षणमाह —

कोटिस्तत्र त्रिकोणस्था वर्णस्थितिरुदाहृता ।
आभिचारप्रधानत्वं तद्वृत्तिं च प्रयच्छति ॥ १० ॥

या तत्रैव हनुप्रदेशे एव त्रिकोणेन त्रिकोणतया स्थितिर्यस्याः सा तथाभूता वर्णस्थितिः कोटिर्नामोदाहृता । सा, आभिचारप्रधानत्वम् आभिचारोऽभिचारकर्म स एवाभिचारस्तत्प्रधानत्वं तत्स्वभावत्वं, तद्वृत्तिं च तेनाभिचारकर्मणा वृत्तिं जीवनस्थितिं कालयापनमित्यर्थः, प्रयच्छति सूचयतीति यावत् ॥ १० ॥

अत्रोटनलक्षणमाह —

कपोलतलयोर्यस्तु यत्रक्वापि द्वयोरथ ।
जर्जरो वर्णविन्यासः स चात्रोटनमुच्यते ॥ ११ ॥

यस्तु पुनः, कपोलतलयोर्मध्ये यत्रक्वापि एकत्रेत्यर्थः, अथ द्वयोर्वा जर्जरः स्पर्शने परुषो, दर्शने धूसरश्च, वर्णविन्यासः वर्णविनिवेशो दैवकृतः,

सः अत्रोटनमुदीरितं नाम। उदाहृतमित्यपपाठः। चशब्दो विशेषणनियमार्थः। य एवं विशेषणो वर्णविनिवेशः स अत्रोटनम्। स एव चात्रोटनमिति नामतश्चास्य लक्षणमुक्तम्। यस्य खल्वङ्गुल्यास्फोटनं स्वभावो दृश्यते करयोः पादयोर्वा, तस्यात्रोटनं विद्यते इत्यनुमेयम्। शब्दसिद्धानियमवशात् शब्दमूलानुमानमपि नाप्रमाणं, शब्दस्याप्तप्रणीतत्वेन प्रमाणभूतत्वात् प्रमाणभूतशब्दमूलस्य चानुमानस्य (च?) प्रमाणत्वेन प्रामाणिकैरङ्गीकृतत्वाच्चेत्यवगन्तव्यम्॥ ११॥

अस्य फलमाह —

**शत्रुभङ्गः फलं तस्य यशश्च परिदन्तुरम्।**
**रोगतश्चेत् तथेदं स्यान्नैव तत्फलमिष्यते॥ १२॥**

तस्यात्रोटनस्य शत्रुभङ्गः फलं परिदन्तुरं यशश्च। परिदन्तुरमयसोमिश्रितमिति यावत्। इदं रोगतश्चेत् स्यादत्रोटनं कुष्ठादिना रोगेण, तदुक्तं फलं नैव स्यादित्यवगन्तव्यम्॥ १२॥

लम्बिनीलक्ष्माह —

**लम्बिनी तत्र चिबुकं यान्ती कृष्णा लघुप्रभा।**
**नीरोगः स पुमांस्त्री वा विद्यते सा तु यत्र वै॥ १३॥**

सा लम्बिनी नाम वर्णस्थितिः, या तत्र कपोलतले कृष्णा चिबुकं यान्ती चिबुकमभिमुखीकृत्य गच्छन्ती वर्णस्थितिर्यत्र सा विद्यते पुरुषे स्त्रियां वा, स नीरोगो भवेत्। विगतक्लेशः शुद्धबुद्धिः सर्वदा धर्मपरः कृतकृत्यः स पुमान् स्यात्। यदि च सा कृष्णवर्णत्वेऽपि लघुप्रभा तर्हि तस्या उक्तफलहेतुत्वं न दृश्यते, श्रूयते एव तु केवलमिति वैशब्देनाह। अथवा या उक्तसर्वविशेषणविशिष्टा वर्णस्थितिः सा लम्बिनी। तद्वतः पुरुषस्य स्त्रिया वा उक्तं फलं भवतीति वै किलेति॥ १३॥

ऊर्ध्वालक्ष्माह —

**ऊर्ध्वोन्मुखी चिबुकतो या प्रवृत्ता कपोलयोः।**
**तत्फलं पुरुषार्थेषु विशदा मतिरिष्यते॥ १४॥**

सा ऊर्ध्वा नाम वर्णस्थितिः, या चिबुकतः कपोलयोरूर्ध्वोन्मुखी ऊर्ध्वमुखी प्रवर्तते। यद्वा ऊर्ध्वा उन्मुखीतिच्छेदः। उन्मुखीत्यस्य ऊर्ध्वमुखीत्यर्थः। तत्फलं तस्याः फलं पुरुषार्थेषु चतुर्षु धर्मादिषु विशदा दृढा मतिः प्रज्ञेष्यते ईक्ष्यते च॥ १४॥

कादम्बरीलक्षणमाह—

**चिबुके धूसरा या तु वर्णस्थितिरुदाहृता ।**
**दन्तेषु वा फलं तस्यां मार्गभ्रंशः कथञ्चन ॥ १५ ॥**

या चिबुके चिबुकाख्यावयवविशेषे दन्तेषु वा बृहद्भूतयोरुपरितनयोर्वान्तरयोर्धूसरवर्णा । (वि ? द्वि) प्रकारेणेत्यर्थः ॥ १५ ॥

मेखलालक्ष्माह—

**कर्णयोर्मूलमाबध्य कण्ठनालान्तमेकतः ।**
**स्थिता या मेखला नाम विद्यां यच्छति सा शिवाम् ॥१६॥**

या पुनः कर्णयोर्मूलमाबध्य कर्णमूलादारभ्य कण्ठनालान्तं कण्ठनालादारभ्य कर्णमूलपर्यन्तं वा, एकतः एकाकारेण स्थिता, सा मेखला । सा च शिवां शुभप्रदां विद्यां ज्ञातां लक्षणान्तराज्ञातां च यच्छति निम्रच्छति । नियतामिति सूचयतीति यावत् ॥ १६ ॥

लाक्षाप्रवृत्तेर्लक्षणमाह—

**उरःस्थलीं गता या तु स्तनद्वयतलं गता ।**
**लाक्षाप्रवृत्तिर्विज्ञेया कुङ्कुमाङ्कं स्फुरेदियम् ॥ १७ ॥**

काल्पनिक्यपीति शेषः । या कण्ठनालादारभ्य उरःस्थलीं गता उरःस्थलीं प्राप्य स्तनद्वयपर्यन्तं गता शोणाकारा च, सा काल्पनिक्यपि औपाधिक्यपि लाक्षाप्रवृत्तिर्विज्ञेया वर्णस्थितिः । इयमुक्तलक्षणा वर्णस्थितिः कुङ्कुमाङ्कं स्फुरेत् कुङ्कुमसम्बन्धं यदाकदाचिदस्य भविष्यतीति द्योतयति । अनेनैतदुक्तं — बहलकुङ्कुमकुचतटीपरिरम्भोऽस्यैतद्व्रतः पुरुषस्य स्त्रियाश्च तादृशपुरुषपरिरम्भो भविष्यतीति द्योतयत्येषा वर्णस्थितिरिति । स्फुरेदित्यत्र निजान्वयो द्रष्टव्यः । यदि वा एवंलक्षणा लाक्षाप्रवृत्तिर्यदि स्फुरेत् तर्हि कुङ्कुमाङ्कं भाविनं सूचयतीत्यध्याहारेणार्थः ॥ १७ ॥

यतिकूललक्ष्माह—

**यतिकूलं कपिला ज्ञेया स्तनयोरन्तरा स्थिता ।**
**बहुजायादियोगं सा संसूचयति साम्प्रतम् ॥ १८ ॥**

या पुनर्वर्णस्थितिः कपिला, स्तनयोरन्तरा स्थिता, सा यतिकृत् । सा च बहुजायादियोगं पुरुषस्य बहुजायायोगं, जायायास्तु बहुपुरुषयोगं, सूचयति अविनाभावेन सूचयति । चशब्दः साम्प्रतमित्यत्र योजनीयः । न केवलं बहुजायादियोगं संसूचयति, अपितु तं साम्प्रतं सुन्दरं च सूचयतीति तस्यार्थः । तस्य पुरुषस्य सुन्दरत्वं च पुत्रादीच्छितफलदायित्वं कृतार्थतया यतिसमा(नं ? नत्वं) करोतीत्यर्थः ॥ १८ ॥

[1]तारुण्यद्रमिलालक्षणमाह —

**विशुद्धा नाभिमूले या तर्जनीपरिमाणिका ।**
**अन्तराच्छिन्नसर्वाङ्गा फलं संसूचयत्यघम् ॥ १९ ॥**

अयमर्थः — या खलु नाभिमूले नाभेरधः, विशुद्धा धवलाकारा रेखा, सा अन्तराच्छिन्नसर्वाङ्गा अन्तरा मध्ये मध्ये आच्छिन्नसर्वाङ्गा ईषच्छिन्नसर्वभूतनिजाङ्गा, सर्वभूतनिजाङ्गयुक्तेति छान्दसतया प्रयोगः । सा यदि तर्जनीपरिमाणिका तर्जन्या यावत्परिमाणं तेन कुत्सितभूतेन सह वर्तते चेत् तर्हि तन्नामा, नोचेत् या वक्ष्यमाणद्रमि[2]लो नाम रेखा, सैवेयम् । तयोस्त्वयं विशेषः — अन्तरान्तराच्छिन्नत्वं नाभिमूलदेशत्वमित्युभयम् । साधारणविशुद्धत्वं तु केवलं द्रमिलाया एव भवति । तर्जनीयपरिमाणवत्त्वं च पूर्वस्या इति । तत्र विशुद्धत्वेन विना लक्षणावशेषेण केवलेन युक्ता तारुण्यद्रमिला । सा महाघं सूचयति । कथमुत्पन्नमिति चेद्, ब्रूमः । यथायथं स्वजन्मप्रभृति तत्तत्प्रवृत्तीः कुर्वाणस्तत्तदघस्मरणप्रमोषविद्रोहशेमुषीभिस्तानि तानि कर्माणि करोति । तथा च केवलैरेव मतिभेदैरनुष्ठाने प्राप्ते कर्मणां स्वर्गादिफलानां मतिभेदवशाद् यथाकथमप्यनुष्ठानप्राप्तौ कथञ्चित् कथञ्चित् प्रस्खलनादि भवति । काम्यविषये तु विशेषः यथाशक्त्यनुष्ठानाभावेन । नित्यानां न विरोधः कश्चित्, अन्यत्र तु महान् विरोधः, अङ्गसाफल्यं विना फलासिद्धेः । नैमित्तिकानां तु उभयस्वरूपत्वात् सर्वाङ्गानुष्ठानेन वा कतिपयाङ्गानुष्ठानेन वा फलसिद्धिः । उभयरूपत्वं तु प्रत्यवायानिवृत्त्यापि योजनीयम् । ननु कथं नैमित्तिकानां फलमिति चेद्, उच्यते । यद्यपि प्रायश्चित्तरूपत्वमेतेषां, तथापि दुरितनिवृत्तिः फलमस्त्येव ।

---

१. 'का' क. पाठः. २. 'ला रे' ख. ङ. पाठः.

तथाच तद्विपरीतमघं सूचयतीति महद् वैशसम् । किञ्च यद्यपि यदाकदाचित् प्रायश्चित्तरूपत्वं नैमित्तिकानां, तथापि पितृक्रियारूपाणां[1] फलं न केवलं दुरितनिवृत्तिः, किन्तु पितृसन्तोषादिलक्षणमस्त्येव । तथा तद्द्वारा पुत्रलाभादि । एवं निजर्णापाकरणद्वारेण निजाभ्युदयसिद्धिः । तथाचोक्तवैपरीत्यादघं सूचयतीत्युक्तं युक्तमेव । नामार्थस्त्वसौ — तारुण्ये तरुणभावे या द्रमिलवधूः यथेष्टचारिणी, सा यथायथं यथाघं करोति तथेयमपि रेखा बाल्ये यथेष्टमेवाघं कारयति, करोति च पुरुषः स्त्री वा । अत्रेदं रहस्यम् — अनया सम्पन्नः पुरुषो निजचारित्रदूषणात्, स्त्री वा पञ्चविंशतिसंवत्सरादर्वाक् प्रकृष्टाभिव्यक्तनिजदूषणसमूहानभिरतनिजसर्वस्वप्रवृत्तिः कतिपयेषु प्रक्षीणनिजमनोवृत्तिः कतिपयेषु च वर्धमाननिजवृत्तिरास्ते । पुनश्च सन्तापसन्ततिवशः शेते तिष्ठति चेत्यतिविषमतया विरसनिजचरित्रपात्रभूतः कष्टं सर्वदा सम्भवतीति ॥ १९ ॥

सतीलक्षणमाह —

**या प्रोक्ता पृथुनिःष्यन्दा कल्पिता जघनस्थलीम् ।**
**अधि प्रेत्य प्रवर्तन्ते पुरुषाः स्वगुणैः स्त्रियः ॥ २० ॥**

अस्यार्थः — या खलु जघनस्थलीमधिकृत्य जघनस्थलीमूलभूतान्मूलाधारादुपरिदेशे स्वयं समुद्भूता, प्रेत्य ऊर्ध्वं गत्वा, प्रोक्ता तज्ज्ञैरिति शेषः । पृथुनिःष्यन्दा पृथवः निःष्यन्दाः निजकार्यभूतरेखांशा यस्यास्तथाभूता, कल्पिता अन्यत्र कण्ठनाले अंसद्वये च रज्जुसर्पादिवत् कल्पिता आरोपेण ज्ञाता । यैवंभूता सा सती नाम । तस्याः फलं प्रवर्तन्ते स्त्रियः पुरुषाश्च । किं कारणं, स्वगुणैरात्मीयैरेव गुणैः, यदि वा स्वाभाविकैर्गुणैः । स्वाभाविकत्वं नाम नित्यत्वमभिमतं स्वोचितत्वं, शौर्यादिभिर्लज्जादिभिश्च प्रवर्तन्त इत्यत्रापि प्रैत्यक्षोपन्यासेन स्वारसिक्यं, तत्तत्स्वभावं च कर्मप्रवर्तकत्वमभिव्यज्यते, प्रत्ययनिर्देशवशात् । इदमत्र तात्पर्यम् — किशोरभाव एव नाभेरधस्ताद् यः प्रदेशस्तस्य यत् पार्थवं, तस्य दर्शनाभावे सति विपरीतनिम्नताकल्पनया तस्याः शोणिताधारभूतपात्रविपरिवृत्ततया रेतःस्कन्दादिप्रयुक्तौ गर्भाधानाभिधानपुंलक्षणसंयोगविवशतया सुखमात्रमेव तन्मै-

१. 'तथा नि' ङ. पाठः. २. 'हे', ३. 'प्रात्यक्ष्योप' घ. पाठः.

थुनफलं, नान्यत् किञ्चित् । अतश्च नास्त्येवास्याः प्रसूतिफलमिति सुतरामवधारणीयमिति स्त्रीपक्षे फलम् । पुरुषपक्षे तु येषां तस्य भागस्यापार्थत्वं, तेषां रामाप्राप्तिः, विपरीते तु सर्वदा प्रस्वापवशात् कल्मषादीति ॥ २० ॥

असतीलक्षणमाह --

**असत्यः काश्चन मता रेखाः स्त्रीणामुरःस्थले ।**
**अनामिकावदश्लिष्टा विधवा विप्रसूतकाः ॥ २१ ॥**

अयं वाक्यार्थः —स्त्रीणामुरःस्थले उरःस्थलेषु काश्चन रेखाः सन्ति, ता असत्यो नाम मताः । ता यासां सन्ति ता विधवा मताः, विप्रसूतकाश्च । प्रसूतकाः कुमाराः, विगतः प्रसूनको याभ्यस्तास्तथाभूताश्च भवेयुः । इदं विवक्षितं—स्तनपरिमण्डले काश्चन कासाञ्चित् स्त्रीणामपरिमिताः प्रच्छन्नाकारा रेखा दृश्यन्ते, तास्तासां रत्यौत्सुक्यात् परिसमाप्तेः पूर्वं विधवात्वमापादयतीति ॥ २१ ॥

कौशिकीलक्षणमाह--

**कौशिकी प्रथमाङ्गस्य सन्धौ वर्तुलसंस्थितिः ।**
**एतदेव फलं प्रायो विदधाति शुभं क्वचित् ॥ २२ ॥**

प्रथमाङ्गमुत्तमाङ्गम् । अनेन यत्र रोमसिद्धिः स एव भागोऽभिधीयते । तेन अस्य रोमभागस्य ललाटस्य च यः सन्धिः, तत्र स्थिता वर्तुलाकारसंस्थानविशेषा, कौशिकी सा । एतदेव स्त्रीणां विधवात्वमेव, फलं प्रायो विदधाति ज्ञापयति । क्वचित् पुनः शुभमपि विदधाति । क्रियाया ज्ञप्तौ पर्यवसानात् । प्राय इत्यनेन किमुक्तम्, इदमुक्तं, येषु हि पुरुषेषु मुखविवर्णता कार्कश्यं च, तेषां याः स्त्रियस्तेषां प्रजाश्च यास्तत्र सर्वत्र स्त्रीषु प्रजासु च विधवात्वम् । प्रजासु विस्वामित्वम् अन्यत्र च विभर्तृकत्वम् इत्येतदुभयं सम्पद्यते इति । किं तच्छुभमिति चेन्न प्राचुर्यम् । प्राचुर्यं नाम कालभेदेन सिद्धिरेव । बह्वन्नसम्पत्ते नैककालीनतया बह्वन्नप्राचुर्यम् । तेन नामरणान्तमन्नवियोग इत्युक्तं भवति । स्त्रीणां चैतत् । क्वचित् पुनः पुरुषविषयेऽपि सम्भवति । तदभिप्रेत्य प्रजासु विधवात्वं फलमित्युक्तवानिति द्रष्टव्यम् । अयं तु नामार्थः — कौशिकी नाम दिवाभीतस्त्री तया साम्यमेषा रेखापादयतीति ॥ २२ ॥

---

१. 'रमा', २. 'क्या प' क. ख. पाठः.

ज्येष्ठालक्षणमाह—

**मूर्ध्नि स्थिता त्रिवलिका रक्तस्वेदादियोजनी ।**
**ज्येष्ठा प्रस्विन्नगात्राणां पुरुषाणां मता ध्रुवा ॥ २३ ॥**

अस्यार्थः—ज्येष्ठा पुरुषविषये । ये तावत् सर्वदा प्रस्विन्नगात्राः पुरुषास्तेष्वेषान्वेषणीया नान्यत्र, कुतः, तल्लक्षणत्वादस्याः । तद् विवृणोति — रुधिरस्वेदादियोजनीति । इयं स्वाश्रयं पुरुषं सर्वदा रुधिरस्वेदादियुक्तं करोति । आदिशब्दात् पूयगन्धिता लक्ष्यते । मूर्धसु प्राचुर्येणास्या दर्शनान्मूर्ध्नि स्थितिरित्युक्तम् । अस्यास्तु स्पर्शने सति दर्शने सत्यपि च जर्जरता इति विशेषणान्तरेणोक्तम्, अशुभफलं च तत् सूचयति । तदप्यशुभं कालतो विक्लेदः स्वशरीरगतः ॥ २३ ॥

गरिष्ठालक्षणमाह—

**गरिष्ठा स्वसमृद्धा स्त्री वरिष्ठगुणभूषणा ।**
**तस्याः फलं विन्दति सा नात्र प्रत्ययविस्मृतिः ॥ २४ ॥**

अस्यार्थः—या वरिष्ठगुणभूषणा । गुणशब्देन तन्तुरुच्यते । तेन तदाकारा रेखा लक्ष्यते । सा च वरिष्ठा । अतः सा भूषणं यस्या मूर्ध्नि संस्थिता यस्या भूषणस्य तदाकारेण तत्र स्थितत्वात् । तथाभूता गरिष्ठा नाम । तत्फलं स्त्री विन्दति । अत्र प्रत्ययविस्मृतिर्न भवेत् । प्रत्ययविस्मृतिः संशयः । प्रत्ययो विश्वासः तस्य विस्मृतिः विस्मरणमनेन भवतीति ॥ २४ ॥

किञ्च चान्द्रमण्डला तत्सन्निधिवर्तिनी यदि भवति तदा तत्फलं विशिष्टं सा सूचयतीत्यतस्तल्लक्षणमाह—

**या दर्दुरप्लवेनासौ संस्थिता पूर्वसन्निधौ ।**
**विशिष्टं फलमस्यास्तु पूर्वप्रत्ययकारणम् ॥ २५ ॥**

या पूर्वसन्निधौ गरिष्ठायाः पूर्वोक्तलक्षणायाः सन्निधौ प्रवर्तते, सा चन्द्रमण्डला नाम । अस्या यद् विशिष्टं फलं शुभं पुत्रसमृद्ध्यादि तदस्या अपि फलं, नान्यत् फलान्तरं सूचयति । कुत इति चत् तत आह—पूर्वप्रत्ययकारणमिति । एषा केवलं पूर्वप्रत्ययकारणं पूर्वस्या रेखाया यत् फलं तत् प्रति च यद् ज्ञाप(कत्वं ? कं) तदुभयं प्रति लोकस्य प्रत्ययकारणं यतोऽसौ, अत इत्यर्थः ॥ २५ ॥

१. 'या' ख. पाठः.

गन्धावलिर्नाम शिरोगता मण्डलाकारा रेखा । तल्लक्षणं फलं चाह—

**गन्धावलिर्मता तस्याः फलं रोमविकून्तनम् ।**

या भिषजां मता गन्धावलिर्नाम सा शिरःपरिवर्तनेन वर्तमाना इत्यसाधारणधर्मो लक्षणतयाभ्यूहनीयः । स चाध्याहार्यः श्लोके । तस्याः फलं रोमविकून्तनम् । यस्तदाश्रयः असौ भिषग् भवतीत्यर्थः ॥

एतदेव फलमुद्दिश्य लक्षणान्तरमाह—

**पाणिपृष्ठे प्रवृत्ता या पृष्ठाख्यान्तरसङ्गता ॥ २६ ॥**

अत्रैषोऽर्थः—या पाणिपृष्ठे, पाणिपृष्ठो नाम करतलमूलप्रदेशः[1], तत्र प्रवृत्ता मागधी । तस्या नामान्तरमपि विद्यते पृष्ठेति । सापि पूर्वोक्तमेव फलं सूचयति । अनया सम्पन्नः पुरुषो भिषग् भवतीति ॥ २६ ॥

ईज्यालक्षणं कथयति—

**तदुपान्तस्थिता वन्ध्यफलदायिन्यतः परा ।**

या तदुपान्तस्थिता, सा परा ईज्या । सा वन्ध्यफलदायिनी वन्ध्यशब्देन वन्ध्यात्वमुच्यते स्त्रीविषये । अपरत्र शून्यत्वम् । तत एतदुक्तं भवति—स्त्रीणामेषा वन्ध्यात्वं गमयति । पुरुषाणां तु शून्यत्वम् । तत्र विचारः । किं शून्यत्वं नाम, आयुर्भङ्गः अथवा द्रविणभङ्गः, उभयत्र प्रयोगदर्शनात् । शून्यदेशोऽयमिति शून्यीभूतोऽयं देश इति च । शून्योऽभूत् पुरुष इत्यादौ च । तत उच्यते । शून्यत्वं नायुर्भङ्गः किन्तु द्रविणभङ्गः । तत्रापि न स केवलो व्ययमात्रः विशिष्टव्ययस्य वाभिधानात् । अत एव न प्रयोगविरोधः । देशवैरस्यं कालवैरस्यं रूपवैरस्यं च । तेन तस्य यत् सर्वस्वं तदभावे शून्यशब्दः पर्यवस्यतीत्युक्तं भवति ॥

कोलाहलो नाम काचिद् रेखा । करतलमध्यभागो देशः । तत्रापि सौक्ष्म्य[2] विवक्षितमित्यभिप्रेत्य[3] लक्षणं फलं च कथयति—

**कोलाहलः पृथुर्मूलभूमौ पलण्डुसदृशागमः ॥ २७ ॥**

अस्यार्थः—यः कोलाहलो नाम मूलभूमौ वर्तते रेखा अवयवसन्निवेशो वा, मूलभूमिशब्देन तदभिधानम्, करतलस्य प्रकृतत्वात् । पल-

---

१. 'लम्र' घ. पाठः. २. 'स्यं', ३. 'त्य फलं लक्षणं च' ख. पाठः.

ण्डुमृदशागम इत्यनेन फलकथनम् । यावान् पलाण्डोरागमः यथार्घं च तावांस्तथार्घं न एतद्वतः पुरुषस्यागमः । यद्येष पृथुः पृथुलः नान्यथा । पार्थवे हि कारणं मनसः स्वल्पद्रव्याभिलाषिता । स्वल्पद्रव्याभिलाषे हि स्वल्पद्रव्यसिद्धिस्तदनुरूपा भविष्यति । यादृशोऽभिलाषः तादृशः फलप्रकार इति न्यायात् । नचाभिलाषव्यभिचारफलसिद्धिरिति वाच्यम्, अङ्गवैगुण्यस्यैवानुमेयत्वात् ॥ २७ ॥

कृतघ्निकालक्षणमाह —

**(तया) कपिस्थवृत्तिः स्याद् या तु रेखा फलस्थिता ।**

फले अवयवविशेषे स्थिता या रेखा, तया कपिस्थवृत्तिः स्यात् । कपिस्था कपिवत् स्थिता, कपेर्या वृत्तिः वृत्तिसाधनं, तद्वदस्य वृत्तिरिति या द्योतयति, सा तथाभूता परयन्त्यपरपर्याया प्रसमरस्वभावा च । एतदुक्तं भवति — कपेर्हि यद्यद् दृष्टं वस्तुजातं तत्तदुपजीवनेन वर्तनं, दृष्टवार्तिकत्वाद् इति । एवमनया सम्पन्नोऽपि पुरुषो विशेषोपजीवनेन विना तत्तद्दृष्टोपजीवनेनैव जीवति इति । अतो नामापि लब्धार्थमित्यनुसन्धेयम् ॥

योषालक्षणमाह—

**या स्यादङ्गुलिमुद्राढ्या प्रगल्भवचनो भवेत् ॥ २८ ॥**

अङ्गुलिमुद्रोर्मिका, तया या सोष्मणा श्वासेन चोपलक्षिता, देशश्वास्या हृदयदेशः, सा योषा नाम । तया प्रगल्भवचनो भवेत् । प्रगल्भशब्देन भाववचनेन प्रागल्भ्यमत्रोक्तम् । तच्च तत्, यत् स्फुरितविषयाभिमुख्यम् । तत्राप्रतिहतत्वं च प्रतिभाप्रतिहतत्वमिति यावत् । तत्प्रधानवचनो भवेत् तदधीनवचनश्चेति ॥ २८ ॥

कामिनीलक्षणमाह —

**कामिनी मरुतां श्रेष्ठा रत्युत्पादा पृथक्स्थिता ।**

या मरुतामुरःस्थितानां रेखाणां मध्ये श्रेष्ठा हाराधःस्थिता च, सा कामिनी । तत्फलमाह— रत्युत्पादा पृथक्स्थितेति । उत्पादशब्दः स्वरूपवचनः । रतेरपृथक्स्थितेत्यर्थः । अत्र नामद्वयेन स्त्रीवाचकेन स्त्रीप्रधानत्वं लक्षणस्योक्तम् । पूर्वत्र वचनबलात् तु पुरुषोऽपि लक्ष्यते ।

लक्षणलक्ष्यार्थभूतोऽसाधारणधर्मो लक्षणं, तेन च लक्ष्यं लक्ष्यते, न शब्देन । तथापि शब्दस्य धर्मान्तर्भूतत्वात्, तस्य च तदर्थत्वात्; यत् तेनापि प्रतीयते तदपि लक्षणान्तर्भूतमेव । यदि वा उपलक्षकमात्रत्वाच्छब्दस्य न दोषः ॥

अथेति । अवयवविशेषगतानां रेखाणां लक्षणान्यधुनोच्यन्त इत्यर्थः ॥

**तले पादस्य द्वास्था सा वामस्याङ्गुष्ठसन्निधौ ।**
**कीर्तिं धर्मादिजनितां कीर्तिमन्तं सुतं तथा ॥ २९ ॥**

या वामस्य पादस्य तले अङ्गुष्ठसन्निधौ अङ्गुष्ठस्याधःप्रदेशे या बन्धनी रेखा तस्या अव्यवहिताधःप्रदेशे स्थिता द्वास्था नाम । तया सम्पन्नः पुरुषः कीर्तिमान् जायते । स्वकीर्तिपरिपोषात्[1] प्राक् कीर्तिमन्तं सुतमपि लभते । ननु स्वकीर्तिपरिपोषात्[3] प्राक् कथं कीर्तिमन्तं सुतं लभते, कीर्त्याभासवत्त्वस्यैव तत्र सम्भावनात् । अत्रोच्यते । भाविवृत्त्या तदुपदेशात्, दर्शपूर्णमासयाजी पुत्रोऽस्य भवितेतिवत् । किञ्च शुभाशुभे अपि प्रगुणतरफले लभते । तत्र शुभस्य तारतम्यमशुभस्य तारतम्यमपि विद्यत एव । तथा पक्षद्वयेऽपि रेखातारतम्यं विद्यते । निमित्ततारतम्याभावे नैमित्तिकतारतम्यस्यापि वक्तुमशक्यत्वात् । किञ्च तारतम्यस्वरूपमप्यभिधीयते । चतुरङ्गुलपरिमाणे रेखायाः फलचतुष्टयं भवति । फलद्वयं अङ्गुलद्वयपरिमाणम् । परिमाणमप्येकं फलैकत्वे, त्रित्वे त्रित्वमिति ॥ २९ ॥

वालिकालक्षणमाह—

**वालिका स्वच्छवर्णाभा क्वचिद् विल्वस्थिता ततः ॥ ३० ॥**

ततस्तस्य सन्निधौ, प्रकृतस्याङ्गुष्ठस्य सन्निधौ पूर्वोक्तरेखाया यावदेकाङ्गुलपरिमाणं गत्वा या स्थिता, तया वालिकासंज्ञया पूर्वोक्तमेव फलं लभते । यदि विल्वस्थिता । विल्वं नाम अवयवसंस्थानविशेषाभिव्यङ्ग्यं रूपान्तरम् । तच्च रूपं केनचिदपि विशेषेण प्रयोगतो वा

१. 'य' घ. पाठः २. 'पुरुषम' ख पाठः. ३. 'य' घ. पाठः. ४. 'पुरुषम' ङ. पाठः. ५. 'प्यभिधीयते चतुरङ्गुलपरिमाणमङ्गुम' क. ख. पाठः.

अत्याज्यम्। यद्युपाधिना औषधेन वा छेदादिना वा न त्याज्यं, तर्ह्येव तत्स्थिता फलसूचिका भवति नान्यथा। बिल्वाकारे कृष्णवर्ण-विशेषे रेखायाः स्थितिः प्रलोभविषयं फलं सूचयति ॥ ३० ॥

शाकटायिनीलक्षणमाह—

**पादस्य मध्यतले या गता प्राप्तासनो भवेत्।**

या पुनः पादस्य मध्यतलं प्राप्ता, प्राप्तासनो भवेत् तया पुरुषः। एतदुक्तं भवति — पादस्य मध्ये काचिद् रेखा समुन्मिषेत्। तर्हि तया स पुरुषः सर्वस्वसम्पन्नो भवति। धनधान्यसमृद्धिमांश्च भवति। सा कथंभूतेति चेद् वक्तव्यं नान्तरात्मनीति। नान्तरात्मनि रूप-प्रकाशिका एषा, अपितु यथोर्ध्वरेखा अन्तरात्मनि रूपप्रकाशिका, तद्व-दियमपि पादतलमध्ये स्थिता विपरीततया विभूत्यादिकं सूचयत्यवि-चारेणेत्यवगन्तव्यम् ॥

अपरा शाकटायिनी, तल्लक्षणमाह—

**विद्रुमप्रभया युक्ता महाद्भिः सेव्यते बुधैः ॥ ३१ ॥**

या पुनर्विद्रुमप्रभयोपेता विशिष्टकान्तिमती रेखा, तया महाराज्यं लभते पुरुषः। स्त्री चेत् तन्महिषी भवति। शाकटायनो नाम सः, यः पूर्वं मात्रा गर्भसमये निजरुचिव्यपनोदनाय तत्तद्भिरुचिव्यपोहाय च भक्षितः शाकपुञ्जः प्रचुरमेदुरः, स शाकटः। सोऽयनं यस्य गर्भ-पात्रस्य तस्मादुत्पन्नेयं शाकटायिनी। तदुत्पन्नत्वं चास्या निमित्तमात्र-तयोपचर्यत इत्यवगन्तव्यम् ॥ ३१ ॥

शङ्खोऽच्यते लक्षणम्—

**शङ्करावपनं पुंसः पार्ष्णिमूलस्थिता भवेत्।**

या पार्ष्णिमूलस्थिता पार्ष्णिमूलसन्निधौ पादतले स्थिता, तया पुंस आवपनं भवेत् पूर्वप्रवृत्तिविच्छेदो भवेत्। पूर्वप्रवृत्तिश्च सा, या क्वचित् क्वचिदिङ्गितादीभिर्व्यज्यतेऽस्यात्र धीरिति सा पूर्वप्रवृत्तिः। अनया सम्प-न्नस्य विच्छिन्ना भवति। आवपनं नाम यद्यपि सम्पादनं, बीजावापादौ तथा दर्शनात्, तथाप्यावपनस्यात्र शङ्कशब्दसमभिव्याहारात्, 'प्रसिद्धार्थ-समभिव्याहारेणाप्रसिद्धार्थे बोधनमि'ति न्यायाच्छेद एवाभिधीयते। तस्य तदर्थकत्वमेव यतो युक्तम्। अन्यथा निगमप्रामाण्यभङ्गप्रसङ्गात् ॥

---

१. 'ला' क. पाठः. २. 'त' ग ङ. पाठः.

आक्रोटनलक्षणमाह —

**आक्रोटनं परं पुंसामनालस्यं प्रयच्छति ॥ ३२ ॥**

विपरीतलक्षणया नामाभिधानम् । या पुनः केशग्रन्थ्या परिमाणे क्रियमाणे अङ्गुष्ठादारभ्यैकाङ्गुलं गत्वा काचन रेखा प्रवर्तते, साक्रोटनम् । तया पुरुषोऽनालस्यवान् भवति । तत्र प्राक्तनमालस्यं किमिति प्रश्ने एव-मुत्तरकथनम् । यस्य लक्षणं परीक्ष्यते प्रेक्षणपुरस्सरं, तस्य रोम उपादेयम् । ततस्तदुपादाय तेन केशग्रन्थिं कृत्वा परिमाणे क्रियमाणे यदि तस्य वेप-थुर्जायते तर्हि वातो रोगः तस्यालस्यं पूर्वकृतं स्मारयति । यदि वा रोगा-न्तरं तस्य पूर्वकृतं सर्वं तस्यालस्यशब्दाभिधेयं भवति । कारणान्तरनिमित्तं चेदालस्यं, तत्राप्युपायोऽयमवधेयः । कथम् । यत्र यत्र सीमालक्षणेषु पादस्पर्शो वा हस्तस्पर्शो वा नयनपातो वा स्थावरादिषु चेतनानधिष्ठितेषु दृश्यमानेषु तेभ्योऽन्यत्र भवति, तत्स्वभाव आलस्यकारणमिति वक्तव्यम् । किञ्च चेतनाधिष्ठितेषु वृत्तान्तमात्रवशात् कारणता गम्यते इत्यनुसन्धेयम् ॥

पृष्ठालक्षणमाह –

**पृष्ठा प्रतिष्ठिता भूमौ पूर्वस्याः सङ्कुलाधरा ।**

अस्यार्थः —या पूर्वस्याः पूर्वोक्तलक्षणाया भूमौ आधारभागे स्थिता प्रतिष्ठितेत्यस्यार्थः, सा पृष्ठा । सा सङ्कुलाधरा । फलकथनमेतत् । सङ्कुलं, संशब्देन सम्यक्त्वं लक्ष्यते । सम्यगधरेत्यर्थः । गुणपूर्णाधरवर्तिनीनां रे-खाणां यत् फलं यावच्च, तत् सर्वमत्रैव सम्पद्यते इति सम्यक्शब्दार्थः । सोऽत्र संशब्देनाभिधीयते । पूर्णगुणगणाधरा । तद्वानस्य लक्षणस्याश्रयो भवति तद्वती तरुणी वा । अथवा संकुलाधरत्वं नाम रतिव्रणादिना व्याप-न्नाधरत्वम् । तेन रत्यौत्सुक्यं सुतरामस्य सम्पद्यते इत्युक्तं भवति । स्त्रीप्रियत्वं च । स्त्रीपक्षेऽपि योजनीयः ॥

धियो लक्षणमाह —

**धीः प्रतिष्ठास्थिता तस्याः काञ्चनं फलमुच्यते ॥ ३३ ॥**

या प्रतिष्ठा नाम रेखा, तस्यां स्थिता या सा धीः । तस्याः फलं काञ्चनं, काञ्चनलाभः । काञ्चनशब्देन स्तुतिविषयं धनमुच्यते । तस्मिाद्धि-र्भवतीति । तत्र भावोऽयं द्रष्टव्यः । यदि काञ्चनलिप्सा विषयविशेषे तस्य

भवति तर्हि तल्लभ्येत। किञ्च काञ्चनशब्देन सर्वमेवास्याभिलषितं वक्तव्यम्। तत् सर्वं सिध्यतीत्यर्थः ॥ ३३ ॥

कन्दोर्लक्षणमाह —

**कन्दुर्नाम मनुष्याणां तस्करत्वप्रयोजिका।**
**पार्ष्णिमूलप्रदेशे तु चतुरङ्गुलमायता ॥ ३४ ॥**

यो मनुष्याणां पुरुषाणां स्त्रीणां च पार्ष्ण्यन्तर्भागे, स एव पादतलस्य मूलदेशः ऊर्ध्वदेशे शाखादर्शनात्। वृक्षादीनां ह्यूर्ध्वदेशे शाखा दृश्यन्ते। ततः शाखावतः पादतलवस्तुनः पार्ष्ण्यन्तर्भागो मूलदेश इवाभाति। ततस्तथोक्तम्। तत्र स्थिता रेखा कन्दुर्नाम। तत्र विशेषोऽपि विद्यते। तमाह — चतुरङ्गुलमायतेति। चतुरङ्गुलप्रमाणेन मिता मतेत्यस्यार्थः। फलकथनपूर्वकं विशिनष्टि — तस्करत्वप्रयोजिकेति। तस्करत्वं चोरत्वं, तत् प्रयोजयतीति तथा, चोरो भवतीति यावत्। अभिहितं किंविषयं चौर्यमुच्यते इति चेत्, पुरुषाणां तावद् यद्विषया प्रथमाभिरुचिस्तद्विषयं चौर्यम्। तथाहि दृश्यते लोके। अतो न प्रमाणान्तरगवेषणावकाशः। एवमेव स्त्रीणाम्। नामार्थोऽप्यनेनैव लब्धः ॥ ३४ ॥

कागणेर्लक्षणं कथयति —

**कागणिर्जितकन्दर्पा भवेत् स्त्री निजभाषणात्।**
**लक्षणं तु तले पादगामिनी जर्जरस्थितिः ॥ ३५ ॥**

अस्यार्थः — पादगामिनी या जर्जरस्थितिः जर्जराकारतया स्थितिः तले भवति, पादतले दोषादन्यत्र[1] यः परुषरवः, क्रूरा जर्जरस्थितिः स्मरविकारो रतिविकारश्च, सा कागणिर्नाम। तया स्त्री जितमन्मथा भवति। किं रूपादथवा स्वप्रवृत्त्या, किं वा मदनचेष्टया, किं वान्येन केनचित्। तदाह — निजभाषणादिति। तत एव कारणात्, न तदुचितेन कारणान्तरेण, अनेनैवासम्बन्धेनेति। अयं तु नामार्थः — का गणिका वारयोषिदिति या मन्यते, सा तथाभूता स्त्री कागणिः। तद्द्योतितेयमपि कागणिरिति ॥ ३५ ॥

---

१. 'भेदाद' क. पाठः.

छिदिलक्षणमाह —

**छिदिः प्ररोहपर्यन्ता पार्ष्णिभागे क्वचित् स्थिता ।**

या पार्ष्णिभागे क्वचित् स्थिता, सा छिदिः । तत्र पार्ष्णिभागे यदस्थि तस्मिन् स्थितैषा एकाङ्गुलिपर्वपरिमाणम् । सर्वत्र च परिमाणानुक्तौ तावत्परिमाणमित्यभ्यूहनीयम् । तया पुरुष उक्तफलभाग् भवति । प्ररोहशब्देन सर्वाण्यङ्कुराण्यभिधीयन्ते । अङ्कुराणां[1] सामान्यस्य विशेषवाचित्वाद् विशेषोऽत्र पर्यवस्यति । पर्यवसानं च फलविशेषे । तच्च कामिनां सम्भवति, रतिप्ररोहादौ भवति । अङ्कुरश्च द्विधा प्रयुज्यमानो मुख्येऽमुख्ये च प्रयुक्तश्च दृश्यते इति न किञ्चिदस्ति वक्तव्यम् ॥

अपरा श्यामिका, तल्लक्षणं फल चाह —

**मामकीनः प्रेष्ठ इति वदेत् पुरुषमञ्जसा ।**
**यः प्रेष्ठः पुरुष+ +स्तमुद्दिश्य वदन्ति हि ॥ ३६ ॥**

प्रपदस्था इति । या प्रपदस्था रेखा पीतवर्णा च. तस्याः फलं श्यामिका(?) । या प्रेष्ठं पुरुषमुद्दिश्य मामकीनः प्रेष्ठ इति वदेत् । तथाहि लोके दृश्यते इति प्रमाणमाह उत्तरार्धेन ॥ ३६ ॥

घोणिकालक्षणमाह —

**(घोणिका सा) तयाथा स्यादङ्गुष्ठोपरि संस्थिता ॥ ३७ ॥**

या अङ्गुष्ठोपरि संस्थिता समावर्तनमाख्याति अस्यार्थः । औपाधिकत्वं च व्यावर्त्यते । सा घोणिका । तया आया स्यात्, आया आभीक्ष्ण्येन प्राप्तुं गन्तुं योग्या योषिद् भवति । अनया सम्पन्नानां न जातु योषिदलाभो भवति । यदिवा, आया निधिः, प्राप्यभूमिरिति यावत् । ननु प्राप्यभूमिरन्यापि विद्यते यो निधिमान् भागस्तस्मादन्यत्रापि प्रवृत्तिदर्शनात् पुंसाम् । सत्यं, साप्ये(स्तुभि ? स्त्विति) गृह्यतां लक्ष्यपक्षविशेषेषु ॥ ३७ ॥

मालालक्षणमाह —

**जङ्घागता तु या माला प्रपदस्थानसङ्गता ।**
**मालाभृतां[3] प्रशस्तः स्यात् सिरा वा स्थूलसङ्गता ॥ ३८ ॥**

---

१. 'नफ', २. 'न्य' घ. पाठः. ३. 'व' छ. ख. क. पाठः.

अस्य योजना — या जङ्घागता रेखाणां माला प्रपदस्थानान्तं गत्वा प्रसरविच्छेदमकृत्वा स्थिता, तया मालाभृतां वरिष्ठः स्यात्। मालाभृतामस्य प्राधान्यमिति सिध्यति। सिरा वा तथा गता यदि भवति, तथाप्येतत् फलं भवति। के मालाभृतः। उच्यते। परिणेता, लौकिकदेवः वैदिकदेवश्च। नन्वेते मालाभृतः, कथं तर्हि वरिष्ठत्वं भवति। एतेषु वरिष्ठस्य देवत्वान्मनुष्याणां न देवत्वम्। देवश्च मालाभृत्सु वरिष्ठ इति यद्यपि स्थितिः, तथाप्ययमर्थो लभ्यते मालाभृतां वरिष्ठ इत्यनेन। अयं देवशब्दाभिधेयः स्यादित्यर्थस्य विवक्षितत्वात्। देवशब्दाभिधेयः स्यादित्यस्याप्ययमर्थः — अयं राजा स्यादिति। राज्ञोऽपि लोकपालांशत्वेन देवशब्दाभिधेयत्वात्। तथाच स्मृतिरिममर्थं भाषते॥ ३८॥

तपोलक्षणमाह —

**जान्वस्थिसंस्थिता साक्षात् तपःफलमवापयेत्[1]।**

या जान्वोः स्त्रीपुरुषसामान्येन कपालास्थ्न उपरि संस्थिता तत्पीठं कृत्वा तदाधारतया तिष्ठति, सा तपो नाम। इह जन्मनि तपःकरणाभावेऽपि तपःफलं प्रापयेत्। तपस्साध्यं यत् फलं महदतीव दुर्लभं च, तदिह जन्मन्येव सिध्यत्यस्य पुंसः॥

किञ्च —

**यावत् केवलमेवास्य पुंसः सिध्यत्यकालतः[2]॥ ३९॥**

अस्यार्थः — यावत् फलं केवलमेव, (विपरीतफलमेव?)विपरीतफलमिश्रतां विना स्थितं, तदकालतोऽचिरेणास्य पुंसः सिध्यति। तच्च फलं विशिष्टदेशकालोपभोग्यमप्यस्मिन् जन्मनि सिध्यति॥ ३९॥

मन्दारवल्लिकालक्षणं कथयति —

**कथासौरभ्यशाली स्याद् यस्मिन् मन्दारवल्लिका।**
**प्रवृत्तिमानपि प्रोक्तकर्माणि प्रविचारवान्॥ ४०॥**

यस्मिन् जान्वोरुपरिभागे जान्वोरन्यतरस्योपरिभागे द्वयोर्वोपरिभागयोर्मन्दारवल्लिका संस्थिता, स पुरुषः कथासौरभ्यशाली भवति। कथासौरभ्यं कथाफलमिति त्रिवर्गव्युत्पत्तिस्तुरीयस्वरूपपरिज्ञानं वा, तद्युक्तो भवति। न केवलमेतदेव फलं, फलान्तरमप्यस्तीत्युत्तरार्धेनाह॥ ४०॥

---

१. 'लमवाप', २. 'तः। या' क. पाठः.

महागजालक्षणमाह —

**जान्वोरन्यतरे कृष्णा मलिष्ठा मलभूमिका ।**
**दक्षिणे तु विशेषोऽत्र फलभावी गतो भवेत् ॥ ४१ ॥**

या जान्वोरन्यतरे । भागशब्दोऽत्र साधःपदोपलक्षितोऽ(त्रा ?)ध्याहर्तव्यः । अन्यतरे भागे अधःस्थिता, कृष्णा वर्णतो, मलिष्ठा मले स्थिता । मलं नाम स्वेदसम्पर्कः तस्मिन् सत्यभिव्यक्ता मलभूमिका विशेषतः पूयगन्धापादनी सा महागजा । तया पुरुषो गतो भवेत् । अपगतो भवेदित्यर्थः । स्तैन्यादिनेत्यध्याहर्तव्यम् । दक्षिणभागे तु फलविशेषनिश्चयः । तत्र न संशयकारणमस्ति । वामे तु स्त्रीणां चेन्न संशयः । तत्र कृष्णशब्दो यः सम्भावितस्त्वचि दोषस्तन्मात्रमभिदधाति । यश्च मलशब्दः स स्वेदमात्रमभ्यासयति भूमिकाशब्दोऽपि । अनया सम्पन्नायाः स्त्रियः स्नानादिवैयात्यं विगतं सूचयति । किञ्च दृष्टिपातोऽपि विशेषतोऽपेक्ष्यत इति । नामार्थस्तु महान् गजः सर्वेषु गजेषु दोषं पश्यति मदातिरेकात्, सः अतिशयितोऽनया इति ॥ ४१ ॥

तरुप्रेक्षालक्षणं कथयति —

**तरुप्रेक्षा तरुसमं पुमांसं कथयेद् ध्रुवम् ।**
**विशेषस्तत्र पश्यन्त्या युक्तश्चेत् संशयः स्फुटम् ॥४२॥**

एषोऽर्थः — या तदूर्ध्वभागे मेघवर्णा सप्तप्रकारविशेषा, सा रेखा तरुप्रेक्षा । तरुवत्, यथा तरुः शाखाभिरुपेतो महान् मेघ इवाभाति, तद्वदियमपि तज्ज्ञैः प्रेक्ष्यते इति तथा । नाम्ना चात्र लक्षणसिद्धिः । सा पुनः पुमांसं तरुसमं दीर्घाकारविशेषादाकारान्तरविशेषाद् वा सूचयति । या पुनः पश्यन्ती नाम वायुमराणिः, तया युक्तश्चेत् स पुरुषस्तर्हि ध्रुवं तत् सूचयेत् । यदि तया न युक्तस्तर्हि स्फुटं संशयो भवति । अनेन विपक्षे बाधकथनात् पूर्वोक्तलक्षणं दृढीकृतम् । एतदुक्तं भवति — तरुप्रेक्षासमन्वितः पुरुषश्चतुर्द(शमे ? शे) वत्सरे गते पश्चात् पूर्णकायो विजृम्भितसन्धिसन्ध्यङ्गविजृम्भितः विवृत्तनेत्रास्यललाटस्थलः धूसरकेशः सम्यगनधीतसकलविद्यास्थानस्तरुवद् दृश्येत । तत्र विशेषः । वृक्षाणां चैतन्यं न स्पष्टीकृतम् । एतेषां तु स्पष्टमपि न कार्यक्षमम् । अर्थक्रिया हि बुद्धिकार्यमिति ॥ ४२ ॥

---

१. 'बिता' ङ. पाठः २. 'हाने' क. ख. ङ पाठः. ३. 'ति । समतः', ४. 'त' घ. पाठः.

शालिकालक्षणं[1] कथयति —

**विशुद्धा त्वचि सर्वाङ्गी मयूखैरपि निष्ठिता ।**
**फलं प्रयच्छति शुभं स्त्रीणामूरुविजृम्भितम् ॥ ४३ ॥**

ऊरुकार्यम् । सा शालिका । फलपक्षगतमन्यत् ॥ ४३ ॥

दैविकालक्षणमाह —

**दैविका मागधीमध्ये प्रह्वाङ्गी मधुराकृतिः ।**
**पुरुषः स्यात् तया साध्वी सदाचारपरा भवेत् ॥ ४४ ॥**

एषोऽर्थः— या मागधिमध्ये पूर्वोक्तलक्षणफलाया मागध्या मागधीसंज्ञाया मध्ये, तां जित्वोर्ध्वगामिनी प्रह्वाङ्गी पार्श्वयोरन्यतरस्मिन् प्रह्वीभूताङ्गी, सा दैविका । तया पुरुषो मधुराकृतिः स्यात् । यश्चतुर्दशसंवत्सरावधिः कालभागस्तत उपरीत्यध्याहर्तव्यम् । स्त्री चेत् साध्वी, सर्वाभिगम्या, न पतिव्रता । तथात्वे उत्तरविशेषणानन्वयात् । तत्र ह्यसदाचारपरेति छेदः समायाति । अर्थस्य तदर्थत्वात् । यः सन् आचारः सतामाचारो वा तस्मात् परा अन्या तदसम्बद्धेति यावत् । ततोऽसदाचारपरेति छेदः सिध्यति फलवशात् । नच सदाचारपरेति वक्तुं युज्यते परशब्देन तात्पर्यमभिधाय, तदा साध्वीशब्दस्य विशेष्यत्वापातात् । तथाच पदान्तरं विशेषणं स्यात् । नच तद् युज्यते, पौनरुक्त्यापातात् । तस्मादुक्त एवार्थः । नामार्थः — या दैविकी प्रवृत्तिः तादृशी रेखेयं सम्पद्यते । उक्तफलाननुष्ठाने प्रत्यवायापादनाद् इति रहस्यम् ॥ ४४ ॥

कवेर्लक्षणमाह —

**दक्षिणे वर्तुलाकारसंस्थाना चेतसि स्फुटम् ।**
**दुःखमापादयेन्नान्यत् कविः सर्वफलं तथा ॥ ४५ ॥**

अस्यार्थः— या दक्षिणे स्तने वर्तुलाकारसंस्थाना, वर्तुलः आकारः यस्याः स्थानम्, आकार आकृतिः तस्याः संस्थानं वर्तुलं, वलयाकारसंस्थानविशेषाभिव्यङ्ग्या, षड् वलयाकारा अस्याः, सा कविः । सा चेतसि दुःखमापादयेद्, नान्यत् । अन्यच्छब्देन सर्वं कार्यमुच्यते, न प्रतियोगि-

१. 'णमाह —' घ. पाठः  २. 'वि' ख. घ. ङ. पाठः.  ३. 'न्यशब्दे' घ. पाठः.

भूतं सुखमात्रम् । किञ्च यथैतत् फलं सम्पादयेत् फलान्तरमपि सम्पादयेदित्याह — सर्वफलं तथा । कवित्वमित्यर्थः । तेन सर्वफलसिद्धेर्वर्णाधिक्यमर्थलाभादिति श्लिष्टम् ॥ ४५ ॥

इति स्कान्दशारीरके तृतीयोऽध्यायः ॥

---

## अथ चतुर्थोऽध्यायः ।

एवं तावच्छरीरावयवेष्वनियतगतानां रेखादीनां लक्षणमुक्त्वा सम्प्रति नियतगतानामेव तेषां लक्षणमाह तुर्येणाध्यायेन । तत्र तावद् वामकरतलगता रेखाः कथ्यन्ते —

कोर्परालक्षणमाह —

**न्यूनान्यूनाधिकत्वेन दृश्यते या मनीषिणाम् ।**
**अनामिकामूलभूमौ परिस्तीर्णा प्रशस्यते ॥ १ ॥**

या अनामिकामूलभूमौ मनीषिणां वामकरतले न्यूनान्यूनाधिकत्वेन परिस्तीर्णा दृश्यते तया तद्वान् पुरुषः प्रशस्यते प्रशस्तिं प्राप्नोति । प्रशस्तिश्च द्विधा । बद्धाश्रयत्वेनाबद्धाश्रयत्वेन च । तत्र बद्धः कुटुम्बभरणादिलक्षणः । तदाश्रयत्वेन तिष्ठन्नेव प्रशस्तिं प्राप्नोति । तेन धर्मादिना करणभूतेनेत्यर्थसिद्धम् । एतच्चात्र विवक्षितम् । अपरस्तु स्वविद्यया पर्यटनादिना । स च व्यवहारलक्षणः । स नात्र विवक्ष्यते । अनेन कोर्परालक्षणमुक्तं फलं च । नामार्थस्तु— का पर्याप्तिरस्या अन्या न कापि इति । अयमप्यर्थः फलानुगुण एव ॥ १ ॥

करिणीलक्षणमाह —

**करिणी मदिराभोगा यथा गच्छति तर्जनीम् ।**
**या प्रशस्तिं दोषगूढां विदधाति न संशयः ॥ २ ॥**

या तर्जनीं गच्छति तस्मिन्नेव करतले, सा करिणी नाम । यथा खलु करिणी गजवधूर्मदिराभोगा मदिराया आभीक्ष्ण्येन भोगः अनुभवो यस्याः, सा तथाविधा सती वक्रतया गच्छति । अन्यमन्यमुद्देशमुद्दिश्येव, तथेयमप्यनामिकां मध्यमां कनिष्ठिकां वा गच्छति इति मन्दप्रत्ययमुत्पा-

---

१. 'णाश्रयः । त' ङ. पाठः. २. 'गा' क. घ. पाठः.

द्यन्ती तर्जनीं सरति । सा दोषगूढा दोषो गूढो यस्यां तां तथाविधां प्रशस्तिं विदधात्येव, नात्र संशयकारणमस्ति । अतो न संशय इत्यर्थः ॥ २ ॥

मेहालक्षणमाह—

**मध्यमां गच्छति पुनर्या दीर्घाकारसंस्थिता ।**
**तया फलमनन्तं सा कीर्त्या यच्छति मध्यमम् ॥ ३ ॥**

या पुनर्दीर्घाकारसंस्थिता दीर्घे आकारे सम्यक्स्थितिः संस्थानं यस्याः । इदं विवक्षितं मूलमारभ्याविच्छेदेन मध्यमां मध्यमापर्यन्तं या गता, सा फलमनन्तं मध्यमं वा तया कीर्त्या यच्छति । तत्रानन्तशब्देनैतदाह— यादृशं भोगमनुभोक्तुं पुरुषरुचिस्तादृशं भोगं यच्छत्यसाविति । मध्यमशब्देनाप्येतदाह — यादृशं भोगमनुभोक्तुं श्रद्धायां विद्यमानायामपि न शक्तिर्मेऽस्तीति भोगः कथमप्यस्य सम्पद्यत इति । तयेत्येतदाह— या पूर्वाभिलाषात् प्राप्तव्या तयेति । कीर्त्येति । कीर्तिर्नाम न यशः, किन्तु किंवदन्तीमूला कापि विश्रुतिः । अनेन मेहालक्षणमुक्तम् । नामार्थस्त्वयम्— हा मे कथं कीर्तिः स्यादिति यः पूर्वाभिलाषस्तं द्योतयतीति ॥ ३ ॥

लोहिकालक्षणमाह—

**प्रसिद्धिर्या शब्दमूला शास्त्रीया वा स्वतःस्थिता ।**

अस्यार्थः — या करतलमूलमारभ्याङ्गुष्ठनखपर्यन्तं गच्छति विच्छेदेन च न युज्यते, तया या प्रसिद्धिः शब्दमूला शब्दशास्त्राभ्यासजनिता, सा लभ्यते । यदि वा, शास्त्रीया शास्त्रान्तराभ्यासजनिता सा लभ्यते । कोऽत्र नियमहेतुरिति चेत् तदाह— स्वतःस्थितेति । स्वतःस्थितिर्नाम वर्णान्तरासंक्रान्तिः । यः करतले वर्णः स एव चेद् रेखायामपि, तर्हि सा रेखा स्वतःस्थिता । अन्यश्चेदौपाधिकी सा, इत्यन्यो ज्ञेयः परो विभागः । अत्र लक्षणमभ्यूह्य फलमात्रमुक्तम् । फलं च लोहिकायाः समुचितमेव । ननु लक्षणाकथने कथं फलमात्रस्य प्रयोजनम् । शृणु । लोहिकानाम लक्षणं कथयति । अस्यार्थः लोहिका लोहकारिणी । लोहोऽङ्गुष्ठमुद्राविशेषः । स च वर्णान्त( र ? रा )संक्रमणम् । तद्धेतुभूता रेखा इत्यतो नान्नैव लक्षणलाभो भवतीति तात्पर्यम् ॥

करिदन्तुरालक्षणमाह—

**अङ्गुष्ठोपरि संस्थानं यस्या वक्राङ्गहृद्यता ॥ ४॥**

अयमर्थः — यस्याः खल्वङ्गुष्ठोपरि नखसन्निधौ यावत्सिद्धत्वकपर्यन्तं गतिः, सा करिदन्तुरा नाम । तस्याः फलमुक्तं विशदम् । नामार्थस्तु तस्या लक्षणान्तरमीष्टे । करिवदसौ दन्तुरा उन्नतदन्तसमानरेखाद्वयोपेता, सा करिदन्तुरा नाम । अस्मिन् पक्षे फलमप्यनेनैवोक्तम् । किं तदिति चेद्, यन्नामप्रतीतं दन्तद्वयोन्नतत्वेन दन्तुरत्वम् । दशमवयस आरभ्य परस्तात् तुरीयद्वयोपरि (?) वर्तमानादर्वाक् स्थितौ । रेखाद्वयं वा क्वचित् । नामास्य न भिन्नामित्यूहापोहपटुमतिभिरभ्यूह्यम् ॥ ४ ॥

बालहृद्यालक्षणं कथयति—

**बालहृद्या तस्य पृष्ठे तदधःस्था प्रियप्रसूः ।**

या अङ्गुष्ठस्य पृष्ठे तदधःस्था तस्याः पूर्वोक्तलक्षणफलाया अधःस्था अधःस्थिता सा बालहृद्या नाम । तत्फलं प्रियप्रसूरिति । प्रिया[1] प्रसूः प्रसूतिर्यस्य स तथा । एवम्भूतो भवति पुरुषः स्त्री वा । प्रसूतिः कस्य चेत् स्वजायाया इति सिध्यति । यदि वा, यत् प्रियं वस्तु तस्य प्रसूः प्रसवः जन्मेति यावत् । तद्युक्तो भवति स्त्री वा पुरुषो वा इति वाक्यार्थः । बालवत् सदा हृद्यश्च भवति सर्वस्य स पुरुषः स्त्री वा इति नामार्थः ॥

(वसुप्रेक्षालक्षणमाह—)

**वसुप्रेक्षा वसुमती तदधः स्थितिसङ्गता ॥ ५ ॥**

इति तदुत्तरलक्षणम् । या तदधः तस्याः प्रकृतरेखाया अधः स्थिता सा वसुप्रेक्षा । वसुमत्त्वं, स्थितिः स्थानं तत्सङ्गतत्वं च फलं सूचयति । अतो विशेषणानुपपत्तिर्न भवतीति ॥ ५ ॥

(रोहिणीलक्षणमाह—)

**रोहिणी सर्वमध्यस्था श्रियमायुश्च यच्छति ।**

या तत्सर्वमध्यस्था सा रोहिणी श्रियं मध्यमपरिमाणाम् आयुश्च तावत् प्रयच्छति । नात्र परः प्रमाणम् ॥

---

१. 'यं प्रसूतिः. क., 'या प्रसूति' ख. पाठः.

(चेतसालक्षणमाह—)

**चेतसा सर्वसन्धिस्था धान्यमायुश्च दापयेत् ॥ ६ ॥**

या सर्वसन्धिः तस्या अभिगता सा चेतसा धान्यसमृद्धिं फलमायुश्च पुरुषंकारेण दापयेत् । कियदिति चेद्, दापयेदिति संवत्सरप्रमाणं यावत् । चेतसः करणत्वं द्योतयितुं करणवाचिपदप्रयोगः ॥ ६ ॥

धनेर्लक्षणमाह—

**धनिरङ्गुष्ठपर्वस्था यवसंज्ञा फलं कृषिः ।**

याङ्गुष्ठपर्वस्था यवरेखा सा धनिः । तत्सम्पन्नस्य कृषिः परिपूर्णा भविष्यति पूर्णता चेत् लक्षणस्य नान्यथा ॥

**क्वचिद् विच्छेदयुक्तश्चेत् क्वचिदेव फलोदयः ॥ ७ ॥**

इति विच्छेदलक्षणम् । स एव यवः क्वचिदंशे विच्छेदयुक्तो यदि भवति तर्हि क्वचित् कालविशेषे फललाभः न सर्वदा इति सम्बन्धः ॥ ७ ॥

यवक्यालक्षणमाह—

**यवक्या तदुपान्तस्था वैद्यवृत्तिकरी नृणाम् ।**

या पुनः तत्सन्निधिवर्तिनी, सा यवक्या नृणां स्त्रीणां पुरुषाणां च विशां या वृत्तिर्वृत्तिसाधनं तत्सम्पादिका ॥

रागबधिरालक्षणमाह—

**रक्ता या रागबधिरा विरहं सा प्रयच्छति ॥ ८ ॥**

या तत्र रक्ता रेखा तत्सन्निधिवर्तिनी, सा रागबधिरा नाम । फलं स्वप्रियविरहं प्रयच्छति । नित्यशः शयनेऽपि विरहं सहितत्वे नियमेन ददाति सम्भोगसारस्याद्यनुत्पत्त्या ॥ ८ ॥

(मदयन्तीलक्षणमाह —)

**मदयन्ती कारणेन विना मदयति ध्रुवम् ।**
**तदधःस्थितिमाप्नोति विच्छेदेन विनापि सा ॥ ९ ॥**

या तस्या अधःस्थितिमाप्नोति विच्छेदवियुक्ता च सा कारणेन विना मदयति मोदयति चेति फलम् ॥ ९ ॥

---

१. 'यवका' क. ख. पाठः.

मनोरमालक्षणमाह —

**मनोरमा मधुक्लेशस्तयाभिक्रियते स्फुटम् ।**

याङ्गुष्ठबन्धे स्फुटं प्रकाशते सा मनोरमा । तया मधुक्लेशः क्रियते । मधुर्वसन्तः तेन क्लेशस्तथोक्तः । वसन्तकृत कामसन्ताप इत्यर्थः । अत्र तात्पर्यं — तत्तद्वसन्तकाले नित्यभोगयुक्तस्यापि पुंसः सुचिरं कामसन्तापो भवतीति ॥

हेमावतीलक्षणं[1] कथयति —

**तद्बन्धयुक् पृथुः श्रीमान् निम्नभागस्तथा कृतः ॥ १० ॥**

यः पुनस्तद्बन्धयुक् तस्याङ्गुष्ठस्य यो बन्धः आदिग्रन्थिः स च पृथुः तत्सम्बन्धित्वे सति पृथुः स्थूलः श्रीमान् आकारश्रीमधुरः, यो निम्नभागः कृतः छिन्नः, स हेमावती नाम । तस्य तद्वतः पुरुषस्य तथा भवति । तथा-शब्दो यथार्थवाचकः । तथ्यवाचक इति यावत् । यत् तथ्यं वस्तु तद् भवति, न तं कदाचित् कोऽपि वञ्चयतीत्यर्थः । नामार्थस्तु हेमप्रधानत्वं नान्यत् किञ्चिदिति ॥ १० ॥

(रतिलक्षणमाह —)

**रतिरङ्गुष्ठमूलस्था ।**

या अङ्गुष्ठमूलस्था अङ्गुष्ठमूलसन्धिबन्धनरेखासम्बद्धा सा रतिः । सैव फलं सर्वत्र ( सैव ?) भवति तस्य पुरुषस्य ॥

हृद्यालक्षणमाह —

**हृद्या तस्याः स्थिता त्वधः ।**

तस्या या अधःस्थिता सा हृद्या । तस्यैव हस्तस्य अङ्गुष्ठस्य वा सम्बन्धिन्याः सन्धिबन्धनरेखाया अधःस्थिता इत्यर्थात् सिद्धम् । सा हृद्या नामानुरूपं फलं ददाति । यो यो दृश्यते या या वा यद्यद् वा तत् सर्व-मस्य हृद्यं भवति, य एतद्वान् पुरुषः स्त्री वा । उपाधिवशात् तु कञ्चित् कालमहृद्यता भवति ॥

वसुघ्नीलक्षणमाह —

**वसुघ्नी तच्छिदिः प्रोक्ता**

1. 'णमाह — त' घ. पाठः.

या तच्छिदिस्तस्या उक्तलक्षणाया रेखायाः छिदिः छेदनं सा वसुघ्नी। तस्याः फलं सैव प्रोक्ता । प्रोक्तं प्रवचनमित्यर्थः । यदि वा, उक्तिरित्यध्याहारः, तत्र वसुघ्नीति विशेषणं च सम्बध्यते । या तद्गतामुक्तिः प्रोक्ता प्रयत्नेनोक्ता, सा वसुघ्नी भवति, वसुहन्त्री भवतीत्यर्थः ॥

(रोमविस्रसुलक्षणमाह—)

तथाधो रोमविस्रसुः ॥११॥

रोम्णां विस्रंसनं शीलमनया सम्पन्नस्य पुरुषस्य स्त्रिया वेति । तथा इति फलमप्युक्तम् । अत्राधश्शब्देन तलबहिर्भागोऽभिधीयते । तेन रोमसन्धिरिति यावत् ॥ ११ ॥

गजाह्वयालक्षणमाह —

गजाह्वया तु याङ्गुष्ठवामभागस्थिता स्वयम् ।

या स्वयं स्वस्य वामहस्तस्य अङ्गुष्ठवामभागस्थिता सा गजाह्वया। फलमप्यनेनैवोक्तम् । गजवदाह्वयोऽभिधानमनया सम्पन्नस्य भवति । तुशब्दो विशेषार्थः संज्ञाध्यायगतः । को विशेष इति चेत् तदुच्यते। अङ्गुष्ठाद् गतो लक्षणप्रकारविचारः सम्प्रति तर्जनीं गच्छतीति ॥

(धरणिलक्षणमाह—)

धरणिस्तर्जनीमूलपर्वगा मितभाषिणी ॥ १२ ॥

अस्यार्थः — या तर्जनीमूलपर्वगा तर्जनीमूलगतं यत् पर्व तस्मिन् गच्छतीति तथा, सा धरणिः । फलमाह — मितभाषिणीति। तया युक्ता स्त्री मितभाषिणी भवतीत्यर्थः । पुरुषपक्षे तु धरणिरेव फलम् ॥ १२॥

मेचकलक्षणमाह —

++++++++ मेचकः पर्वमध्यगः[1] ।
लक्ष्मीवृद्धिस्तथा सिद्धा ++++++++ ॥ १३ ॥

यस्तन्मध्ये पूर्वपर्वं[2] तद्गतो यो निम्नभागः क्वचिद् भवति केषाञ्चित्, स मेचकः । तस्य फलं तृतीयपादेन कथयति—लक्ष्मीवृद्धिस्तथा सिद्धेति । प्रथमं पठितव्यश्चासौ । तथा लक्ष्मीवृद्धिः सिद्धा । येन येन प्रकारेण लक्ष्मीवृद्ध्यर्थं प्रवर्तते तथा तथा सा सिध्यतीति भावः । नाम तु वर्णवशात् ॥ १३ ॥

---

१. 'मध्य पर्वे' क. ख. ङ. पाठः. २. 'चरित' ख. पाठः.

मोचिकालक्षणमाह —

**मोचिका मध्यपर्वस्था बन्धनात् स विमुच्यते ।**

या मध्यपर्वस्था तस्या एव, सा मोचिका । फलं स बन्धनाद् विमुच्यते । बन्धनं नाम चौर्यादिकृतम् । रेखाया आकारविशेषस्त्वयम् , ऊर्ध्वाधोमुख एकः, अपरस्तु तन्मध्ये पार्श्वाभिमुख इत्ययं प्रकारः ॥

**आद्यपर्वगता या स्यान्मुचिस्तस्याः फलं शिवम् ॥**

या आद्यपर्वगता पार्श्वाभिमुखी रेखा, सा मुचिः । तस्याः फलं शिवम् । अनयोः परस्परसम्बन्धः सम्बन्धनीयः ॥ १४ ॥

असिक्नीलक्षणमाह—

**आद्यपर्वगता या स्यात् पार्श्वाभिमुखसंस्थिता ।**
**आयुःक्षयं तत्र विद्यादष्टाविंशे तु वत्सरे ॥ १५ ॥**

या तस्या एवाद्यपर्वगता पार्श्वाभिमुखसंस्थिता च । पार्श्वाभिमुख-संस्थितं संस्थानं स्थितिर्यस्यास्तथाभूता असिक्नी । तद्वति पुरुषे आयुःक्षयं विद्यात् । तत्राद्यपर्वात्यन्तसन्निधिगतेयं रेखेत्यनुसन्धेयम् । नानार्थः — असिनिमित्तमियं मृतिं मरणं द्योतयतीति ॥ १५ ॥

सुरुचेर्लक्षणमाह —

**सुरुचिस्तदुपस्थानसंस्थिता कण्टकस्पृशा ।**
**तथैव स्थितिमापन्ना तदेव फलमीरयेत् ॥ १६ ॥**

या पुनस्तत्समीपस्थानसंस्थिता, तथैव पार्श्वाभिमुख्येनैव स्थिति-मापन्ना, तथा कण्टकस्पृशा कण्टकवत् स्पृशः स्पर्शो यस्यास्तथाभूता, सा सुरुचिर्दर्शने । तदेव फलमायुःक्षयं तत्रापि विद्यात् ॥ १६ ॥

पाटीलक्षणमाह —

**यो मध्यपर्वबन्धः स्यात् तत्र योगे तु सा भवेत् ।**
**फलमाश्चर्यसन्धिः स्यात्**

अस्यार्थः—यो मध्यपर्वबन्धः तत्र यदि योगो भवेत् तर्हि स एव सा भवेत् । तस्याः पाटीसंज्ञा । रेखायाः फलं सन्धिः । विप्रतिपत्तौ पूर्वं सत्यां

१. 'त्तं तयनं मृतिं म' ङ., 'त्तं तमयनं म' ख. पाठः.

शत्रुवशात् स्वयमक्षीणे च शत्रुः स्वयमागत्य प्रणिपतेत् । तदनन्तरं सन्धिश्च भविष्यति । पाटो नाम सन्धिः, तद्वान् पाटी इति नामार्थः ॥

**लुटिः कृच्छ्रात् तदन्तरा ॥ १७ ॥**

लुटिलक्षणमेतत् । या तदन्तरा तस्य प्रकृतस्य बन्धस्य अन्तरा मध्ये, वर्तत इति शेषः । सा लुटिः । अत्र फलं कृच्छ्रादित्युक्तम् । कृच्छ्राद् भवति । कृच्छ्रमत्तीति कृच्छ्रात् तद्वान् पुरुषः कृच्छ्रभोक्ता भवति । कृच्छ्रं नाम प्रतिसंवत्सरमनर्थः संसाराद्, नित्यं तद्भोक्ता भवति । ननु प्रतिदिनमित्युक्ते[1] किमर्थं नित्यमुक्तम् । नैतद् विशेषाद्[2], संवत्सरमित्येवोक्तं न सर्वदेति । अतो विशिनष्टि नित्यमिति । अत्रापि न सर्वदेत्यर्थः । अपितु प्रतिदिनमित्येवार्थः ॥ १७ ॥

तण्डोर्लक्षणमाह —

**तण्डुः स्यादन्त्यपर्वस्था सोर्ध्वमुख्यपरा पुनः ।**

या अपरा तण्डुः सैवम्भूता या ऊर्ध्वपर्वस्था ऊर्ध्वमुखी च । फलमस्यामूर्ध्वमुखत्वं कार्यचिन्तायामपि क्रीडायां च । तद्वान् पुरुष ऊर्ध्वमुखो भवति । तण्डुशब्देन[3] नन्दी कथ्यते । तस्य नन्दिनः मुखाभिघातवशात् तत्प्रयोगार्थं शिक्षितस्य तथादृष्टेरपि शिक्षितत्वादूर्ध्वमुखत्वं युक्तमेव । तद्वदस्यापि सर्वदा स्याद्युक्तं[4]तथाभावस्येति ॥

प्रियङ्गवीलक्षणमाह —

**प्रियङ्गवी तु मध्यस्था फलं सम्यग्विवर्धनम् ॥ १८ ॥**

तत्रापि मध्यस्था प्रियङ्गवी । फलं सम्यग्विवर्धनम् । सम्यग्विवर्धनं नाम सङ्कल्पितसमृद्धिः ॥ १८ ॥

ज्योत्स्नीलक्षणमाह —

**ज्योत्स्नी प्रियङ्गवीन्यूना फलं तस्याः परिग्रहः ।**

या प्रियङ्गवीन्यूना प्रियङ्ग्व्यधःप्रवृत्ता रेखा सा ज्योत्स्नी । तस्याः फलं परिग्रहः । परिग्रहो विवाहः, असम्भाव्यविवाहस्यापि तत्फलं भवतीत्यर्थः ॥

---

१. 'दापि । अ', २. 'पि स' घ. पाठः. ३. 'न्त' ख. पाठः. ४. 'तद् भव' क. ख. ङ. पाठः.

हताशालक्षणमाह —

**ज्योत्स्नीस्थूलतरा सोर्ध्वं पुत्रनाशं फलं वदेत् ॥ १९ ॥**

या पुनर्ज्योत्स्नी ऊर्ध्वं वर्तते ततः स्थूलतरा च सा हताशा । तस्याः फलं पुत्रनाशः । पूर्वसिद्धस्यापि पुत्रस्य रोगं विना झटित्येव विनाशो भवेत् । औत्पादिककारणं च रुधिरवमनं भवेत् ॥ १९ ॥

देवद्विड्लक्षणमाह —

**तन्मूलरोमसन्धिस्था देवद्विडिति कथ्यते ।**

या तस्यास्तर्जन्या मूले यो रोमसन्धिस्तत्स्था सा देवद्विट् । फलं नाम्नैव गम्यते । कथमिति । उच्यते । देवानसौ प्रतिदिनं तद्वान् पुरुषो द्वेष्टि । ततो देवद्विट्त्वं भविष्यतीति ॥

कपर्दिलक्षणमाह —

**कपर्दिस्तदधःस्था स्याद् भार्याभङ्गः फलं भवेत् [॥ २० ॥**

तस्याः पूर्वोक्तलक्षणफलाया अधःस्था अधःस्थिता कपर्दिः स्यात् । फलं भार्याभङ्गः ॥ २० ॥

अपराजितालक्षणं कथयति —

**पृष्ठभागस्थिता तस्याः पुत्रनाशं व्रजेद् ध्रुवम् ।**

या तस्या एव तर्जन्याः पृष्ठभागे ऊर्ध्वमुखी स्थिता रेखा, सा अपराजिता । फलं पुत्रनाशं व्रजेत् । अपराजितत्वं पराजितत्वादन्यदपराजितत्वं; विरुद्धत्वादिति नामार्थः ॥

दुग्धालक्षणमाह —

**दुग्धाप्रशस्ता मूलस्था क्षिप्रमेव मृतिं वदेत् ॥ २१ ॥**

या तर्जन्या मूलस्था अधोमुखी च. सा दुग्धा । फलं शीघ्रमेव मृतिं वदेदिति ॥ २१ ॥

मुग्धालक्षणं कथयति —

**तत्रैव परिवेषेण वर्तते या परा मता ।**

---

१. 'नम् ॥' ब. पाठः.

या तत्रैव तर्जनीमूल एव परिवेषेण परिवृत्त्या वर्तते सा मुग्धा। फलं मतेति। स्त्री चेदेव मता भवति। पुरुषपक्षे तस्य बुद्धिर्मता भवतीत्यर्थः, बुद्ध्यभेदात् पुरुषस्य॥

सोर्मेर्लक्षणं कथयति—

**सोर्मिस्तत्रैव विद्या स्यात्**

या तत्रैवैकदेशेन वर्तते परिवेषं विना, सा सोर्मिः। बृंहितरूपेति नामार्थः। तस्याः फलमतिस्पष्टम्॥

अमुकालक्षणमाह—

**प्रस्फुटा स्थूलयष्टिका। २२॥**

पुरुषविषयैवेयं रेखा। या स्थूलयष्टिका स्थूलमूर्त्तिः तत्रस्था रोमसन्धिपर्यन्तं गच्छति च सा अमुका। या यस्य स्त्री तन्नामास्या नाम। नान्यन्नामान्तरमस्ति। अनया सम्पन्नो धीरो भवति च॥ २२॥

कोर्परस्थितेर्लक्षणं[२] कथयति—

**कोर्परस्थितिरत्युच्चा मध्यमामूलगामिनी।**

या मध्यमामूलगामिनी दीर्घदीर्घा[३], सा रेखा कोर्परस्थितिः। तस्याः फलं नाम्नैव लभ्यते। [४]तद्दुःखस्य नित्यदा कोर्परस्थितिरित्यर्थः॥

कर्मन्दिधीलक्षणमाह—

**कर्मन्दिधीः परा प्रोक्ता याद्यपर्वगता पुनः॥ २३॥**

या पुनर्मध्यमाद्यपर्वगता वि[५]वृद्धिशीलेत्यर्थः, परा समुत्कृष्टा, सा कर्मन्दिधीः। स्त्रीविषयेयम्। फलं नाम्ना सिध्यति। कर्मन्दिनि परिव्राजके धीरभिलाषोऽस्या भवतीति॥ २३॥

श्लथालक्षणमाह—

**श्लथाद्यमध्यपर्वस्था पार्श्वमुख्यपराजयम्।**

याद्यपर्वमध्यस्था रेखा सा श्लथा अपराजयं फलं सूचयति॥

(गुर्वीलक्षणमाह—)

**गुर्वी प्रमथना ज्ञेया तत्रैवान्त्यस्थिता पुनः॥ २४॥**

---

१. 'द' क. पाठः. २. 'णमाह—' ङ. पाठः ३. 'र्घा दीर्घा' घ. पाठः. ४. '°मुख' ङ. पाठः. ५. 'धी घ. पाठः.

या तत्रैव पर्वण्यन्त्यस्थिता सा गुर्वी । तस्याः फलं प्रमथना भवेत् । स्त्रियाः स्वभर्ता जारो वा तत्प्रमथनं सुरतादिना द्वेषेण वा करोतीति ॥ २४ ॥

दमनालक्षणमाह —

**दमना मध्यपर्वस्था तत्राप्याद्यस्थिता शुचिः ।**

या मध्यपर्वस्था तत्राप्याद्यांशस्थिता, सा दमना नाम । तया पुरुषः[1] स्त्री वा शुद्धो भवति ॥

**तदन्त्यांशस्थिता नित्यं कथिता पाशबन्धिनी ॥ २५ ॥**

या पुनर्मध्यपर्वान्त्यांशस्थिता, सा पाशबन्धिनी । तया पुरुषो बद्धः कथितो भवेत् ॥ २५ ॥

लूतालक्षणमाह —

**लूतान्त्यपर्वसंस्थाना विशेषाधिगतिः फलम् ।**

या अन्त्यपर्वाद्यांशस्थिता सा लूता । विशेषाधिगतिरस्याः फलम् । विशेषज्ञतेति यावत् ॥

प्रियालिकालक्षणमाह —

**प्रियालिका मध्यपर्वस्थिता सर्वप्रिया भवेत् ॥ २६ ॥**

या अन्त्यपर्वमध्यस्थिता सा प्रियालिका । साधारणं फलम् ॥ २६ ॥

देवीलक्षणमाह —

**देवी तदन्त्यसंस्थाना फलं तस्याः क्वचित् स्थितिः ।**

या तत्रैव पर्वण्यन्त्यांशस्थिता सा देवी । रूपं च द्योतनात्मकम् । अस्याः फलं क्वचित् स्थितिः क्वचित् क्वचित् स्थितिः,[2] न नित्यमेकत्रैवावस्थानं, चलस्थितिरिति यावत् ॥

महापूर्वालक्षणमाह —

**मध्यमामध्यबन्धस्था महापूर्वा प्रशस्यते ॥ २७ ॥**

---

१. 'स्त्री वा पुरुषो वा' ख. पाठः. २. 'तिः न' ख. घ. पाठः.

या मध्यमामध्यबन्धस्था मध्यमाया यो मध्यबन्धः, तत्सन्निधिस्थिता उपरि वर्तमाना (सा) महापूर्वा। तया प्रशस्यते पुरुषः। कथमिति। महान् पूर्वश्च। तत्र महाशब्दोऽव्ययरूपः समस्यते। महत्त्वमाचारतः पूर्वत्वमाद्यत्वं विद्यातः। स्त्रीविषये स्वप्रवृत्त्या तदुभयं विज्ञायते। स्वप्रवृत्तिश्च स्वकामितृपरिचरणं साध्व्याः। वेश्यायास्तु रतिस्तदुपकरणसम्पादनं च। संज्ञाध्यायगतश्चशब्दो विशेषद्योतनार्थः ॥ २७ ॥

देविकालक्षणमाह—

**देविकानामिकामूले बन्धनी संसृतिच्छिदिः।**

या अनामिकामूले तदाद्यपर्वबन्धनी सन्निधौ स्थिता सा देविका[1]। तत् फलं तस्याः संसृतिच्छिदिः संसारच्छेदः, मुक्तिसिद्धिरिति यावत् ॥

(परिस्तीर्णालक्षणमाह—)

**परिस्तीर्णा तदूर्ध्वस्था फलमस्याः पुनः सृतिः ॥ २८ ॥**

या पुनस्तदूर्ध्वस्था सा परिस्तीर्णा। फलमस्याः सृतिः संसारबन्धः, भूयो भूयो बन्ध इति यावत् ॥ २८ ॥

परिधेर्लक्षणमाह—

**परिधिः कर्मसंसिद्धौ निमित्तं सा तदूर्ध्वभाक्।**

या तदूर्ध्वभाक् सा परिधिः कर्मसंसिद्धौ निमित्तं नित्यनैमित्तिककर्मादिकारिणी। तत् सूचयतीत्यर्थः। नाम्नैतदाह—परिधिः परिवेषः, स यथा मण्डलं परिवेष्ट्य स्थितस्तथा इयमपि मध्यमां परिवेष्ट्य स्थितेति। तत्र चशब्दः फलान्तरं समुच्चिनोति काचिन्मुक्तिः स्यादिति। यदिवा वर्तुला चेत्युत्तरत्रान्वयः। अन्या काचिद् वर्तुला इयमपीति समुच्चयार्थस्तदा ॥

तल्लक्षणमाह—

**अनामिकामूलभूमौ वर्तुला संस्थिता स्वयम्।**
**फलं तु सचिवायत्ता कार्यसिद्धिर्न संशयः ॥ २९ ॥**

अनामिकामूलभूमौ या संस्थिता सा वर्तुला। स्वयं या पूर्वोक्ता सैवेत्यर्थः। तस्याः फलममात्यायत्ता कार्यसिद्धिरिति। किन्च यद्येषा

---

१, २. 'न्धि', ३. 'का। फ' क. ख. पाठः.

कार्यसिद्धिः स्वसम्बन्धिनी भवति स्वस्यामात्यतान्यं प्रति वक्तव्या यस्यां रेखायां सत्यामिति द्रष्टव्यम् ॥

सिंहिकालक्षणमाह —

**सिंहिकानामिकाद्यस्था विशेषो मध्यसंस्थितौ ।**
**फलमस्याः प्रविजयः प्रवादः सर्वभूभृताम् ॥ ३० ॥**

या पुनरनामिकाद्यस्था अनामिकाया आद्यपर्वणि स्थिता मध्यस्थितौ च विशेषः, सा सिंहिका । तस्याः फलं सर्वभूभृतां प्रविजयः, ब्राह्मणानां प्रवादः प्रकृष्टो वादस्तत्त्वनिर्णयप्रयोजन इत्यर्थः । यद्विवा, सर्वे च भूभृतश्च सर्वभूभृतः तेषामुभयेषां क्रमेण फलकथनम् । भूभृतां प्रविजयः सर्वेषां प्रवाद इति । यद्विवा, भूभृच्छब्दो ब्राह्मणवाची । तदा प्रवादः फलम् । विशेषणं तु प्रविजयः । प्रकृष्टो विजयो यस्मिन् प्रवादे इति । अर्थत्रयमप्यत्र विवक्षितं द्रष्टव्यम् ॥ ३० ॥

मनोर्लक्षणमाह —

**मनुस्तदूर्ध्वगामी[1] यो निम्नभागः प्रशस्यते ॥ ३१ ॥**

तस्याः सिंहिकाया ऊर्ध्वगामी यो निम्नभागः स मनुः । तस्याः फलं प्रशस्यत इति । मन्त्राभ्यासवशात् प्रशस्यत इत्यर्थः ॥ ३१ ॥

यविष्ठा तदुपरि । तल्लक्षणमाह —

**यविष्ठा तूपरि प्रेष्ठा तत्फलं लभतेऽचिरात् ।**

या तस्याः उपरि वर्तते, सा यविष्ठा । तस्याः फलं पूर्वोक्तलक्षणा[2]या मनुरेखायाः[3] (फलम् । अनया) युक्ता प्रेष्ठा स्त्री अचिरात् फलं लभते । यद्-नया सम्पन्नः स मन्त्रसिद्ध इति योजना ॥

भूतिलक्षणमाह —

**भूतिस्तदूर्ध्वसम्भिन्ना नाम्नैव फलमीरितम् ॥ ३२ ॥**

या तस्याः प्रकृताया ऊर्ध्वदेशेन सम्भिन्ना सहिता, सा भूतिः । तस्याः फलं नाम्नैवेरितम् ॥ ३२ ॥

---

१ 'भागी यो' ङ. पाठः. २. 'ण', ३. 'या युक्तात् प्रे' घ. पाठः.

अधिकालक्षणमाह—

अनामिकान्त्यपर्वस्था विशेषज्ञस्य साधिका ।

यानामिकान्त्यपर्वस्था तत्राप्याद्यांशस्था सा अधिका विशेषज्ञस्य भवेत् । तेन तद्युक्तो विशेषज्ञो भवेदित्युक्तं भवति ॥

मण्डलीलक्षणमाह—

अनामिकान्त्यपर्वस्था मण्डलीसंज्ञयान्विता ।
तस्याः फलं तर्कशास्त्रनिष्ठा तर्काभियोधनम् ॥ ३३ ॥

या पुनरनामिकान्त्यपर्वमध्यस्था इति मध्यमपदलोपी समासः । सा मण्डलीसंज्ञयान्विता । संज्ञयान्वितेति पदद्वयेन तादृशाकारवत्त्वमिति द्योतयति । तस्याः फलं तर्कशास्त्रपरिचयः तर्काभियोधनं वा विषयभेदेनोभयं वा । अत्र कामोऽनुसन्धेयः ॥ ३३ ॥

दण्डिनीलक्षणमाह—

कनिष्ठिकामूलभूमौ या पर्यन्तमुपाश्रयेत् ।
तां दण्डिनीं विदुस्तस्याः फलं नयपरिग्रहः ॥ ३४ ॥

या कनिष्ठिकामूलभूमौ वर्तते पर्यन्तभागं यावत् गत्वा वर्तते च, सा दण्डिनी । तस्याः फलं नयपरिग्रहः । नीयन्तेऽनेनार्थाः कोशमिति नयः । षड्गादिप्रकारस्तच्छास्त्रसिद्धः । तत्परिग्रहः । यद्वा, नयेनार्थस्य परिग्रहः स्वीकारः । किञ्च नयपरिग्रहस्य विशेषोऽपि विद्यते इति चेद्, अयमिति ब्रूमः—य उपायान्तरेण विना श्रद्धावतस्तत्परिग्रहः । नच कर्म न त्यक्तुं युक्तम्, अत उपायान्तरेण विना इति न समञ्जसमिति वाच्यम् । तस्यानिवार्यत्वादिति ॥ ३४ ॥

रुतालक्षणमाह—

रुता कनिष्ठिकामूलादूर्ध्वं गच्छति या पुनः ।
फलं तस्या वामभागे विजयः शत्रुसङ्गरात् ॥ ३५ ॥

अस्यार्थः—या कनिष्ठिकामूलाद् वामभागे तस्या ऊर्ध्वं गच्छति, सा रुता । तस्याः फलं शत्रुसङ्गराद् विजयः । नच सङ्गरादित्येव वक्त-

१. 'क' ख. पाठः. २. 'अ' घ. पाठः.

व्यमिति वाच्यम् । क्रीडामङ्गरस्यापि विद्यमानत्वात् । तदाह — शत्रुसङ्गरादिति । नच विजयमात्रं, तत्प्रसिद्धिश्चेति नामार्थः ॥ ३५ ॥

वास्तोष्पतिलक्षणमाह —

**अपूर्वनिलयार्था सा वास्तोष्पतिरुदीर्यते ।**

**दक्षिणस्था ततः शीघ्रफलदा कर्म[*]गामिनी ॥ ३६ ॥**

अयमर्थः — या तस्या एव कनिष्ठिकाया मूलाद् दक्षिणभागे स्थिता कर्मगामिनी च तत्रो[1]र्ध्वं गच्छन्ती च, सा वास्तोष्पतिः । अपूर्वनिलयसम्पत्तिः प्रयोजनम् । अनया सम्पन्नोऽपूर्वनिलयनमसंशयं करोति । कर्मगामिनीत्यनेनापि फलान्तरमुक्तम् । किमिति चेत् , कर्मगमनमस्य स्वभाव इति । तथा च कर्मप्राप्तिस्वभावत्वादस्यापूर्वनिलयसम्पादनमञ्जसा सम्पद्यत इति तत्फलवचनोपायभूतोऽयं फलवचनप्रकार इति न विकल्पेन फलवचनं प्रवृत्तिस्वभावता वा, अफलत्वात् ॥ ३६ ॥

केशगण्डलक्षणमाह —

**अत्रैव मध्यमा प्रोक्ता केशगण्डेन तत्फलम् ॥ ३७ ॥**

अ[2]त्रैव कनिष्ठिकायामेव या मध्यमा रेखा मूलादूर्ध्वं गच्छन्ती सा[3] केशगण्डेन केशगण्डशब्देनाभिधीयते । तत्फलं केशगण्ड एव फलम् । केशशब्देन शिर उच्यते । तस्मिन् गण्डो नित्यसिद्धो गडुः क्रमवृद्धिमान् भवतीति । इदमत्र विवक्षितं — यस्तद्वान् पुरुषः, अस्य पितृविरोधो भवति, पितुश्च कार्यविरोध इति ॥ ३७ ॥

**पतिस्तत्रैव वामस्था फलं तत्रैव सद्गतिः ।**

तत्रैव कनिष्ठिकायामेव या तत्र ऊर्ध्वभागे गच्छति, सा पतिः । फलं सद्गतिः सतः पुरुषस्य गतिः प्राप्तिः । तत्रैवेत्यवधारणविशेषात् सद्गतिः सती गतिश्चेदन्यत्र भवति, नात्रेति ॥

क्लेशलक्षणमाह —

**कनिष्ठिकामध्यमयोर्मध्यस्था क्लेशा उच्यते ।**

**फलं पङ्गुर्विशुद्धो ना संज्ञाध्याये तथा फलम् ॥ ३८ ॥**

---

१. 'त्र च ऊर्ध्वं' ङ. पाठः. २. 'त' क. घ. ङ. पाठः. ३. 'सा केशगण्डश' ख. पाठः.

---

* 'सङ्गिनी'ति मूलपाठः.

या पुनः कनिष्ठिकामध्यपर्वबन्धस्था रेखा सा क्लेश उच्यते। तस्याः फलं पङ्गुर्भवतीति। अत एव फलं पङ्गुरिति संज्ञाध्याये कथितं, न संज्ञा। नच संज्ञाध्याये संज्ञां विना फलकथनमयुक्तमिति युक्तम्। केवैः स्वातन्त्र्यात्॥ ३८॥

अनन्तकलक्षणमाह—

**अनन्तकः पर्वमध्ये निम्नभागः प्रकीर्तितः।**
**फलं तस्याग्निसम्बन्धः क्वचित् तैलादिसन्निधौ॥३९॥**

यः कनिष्ठिकामध्यपर्वस्थो निम्नभागः सोऽनन्तकः। तस्य फलमग्निसम्बन्धः। तत्रापि विशेषमाह—क्वचित् तैलादिसन्निधाविति। क्वचित् तैलादिसन्निधौ योऽग्निस्तत्सम्बन्ध इत्यर्थः। सम्बन्धश्च न सम्बन्धमात्रं, किन्तु दाहपर्यवसान इति॥ ३९॥

श्रीवल्लीलक्षणमाह—

**कनिष्ठिकाग्रपर्वस्था श्रीवल्ली शस्यते मृदुः।**
**फलं तस्याः कृमिद्रोहः श्रीमत्त्वमपि तद् गुरु॥ ४०॥**

अस्यार्थः—या कनिष्ठिकाग्रपर्वस्था पार्श्वाभिमुखी रेखा, सा श्रीवल्ली शस्यते। तस्याः फलं कृमिद्रोहः। अन्ते पादसम्बन्धिनो व्रणात् कृमयः सञ्जायेरन्। किञ्च श्रीमत्त्वं च भवति। श्रीमत्त्वं च न कान्तिमत्त्वम्। प्रत्युत तद्विपरीतम्। तत्र विशेषोऽपि। किं तदिति। तद् गुरु। गौरवेण निर्वहति। कथञ्चिन्निर्वहत्येव। अत्रायं क्रमः—प्रथमं तावद् विभूतिः स्वच्छतया सम्पद्यते। ततः क्लेशा आविर्भवेयुः। ततश्च पादे कश्चिद् व्रणो जायेत, ततः कृमयः, ततोऽन्तर्विभूतिश्च क्रमात् कथञ्चिन्नित्यानुवृत्त्यां भवतीति त्रिसप्ततिवत्सरमायुर्गच्छतीति॥ ४०॥

**रोहितं नखपर्यन्ते रोहिताङ्गारयुग् भवेत्॥ ४१॥**

यन्नखपर्यन्ते रोहितं रक्तं, तद् रोहितमित्यभिधीयते। तद्वान् पुरुषो रोहिताङ्गारयुग् भवेत्। रोहितेन अङ्गारेण च तस्य सम्बन्धो भवेत्।

१. 'केवलस्वा' क. ख. पाठः. २. 'इ। या' ङ. पाठः, ३. 'काया अग्र' क. पाठः, ४. 'ता' घ. ङ. पाठः.

कदाचिद् रोहितवमनं भवति। कदाचिदङ्गारसम्बन्धश्च। कदा कदेति चेद् रोहितसंख्य इति अङ्गारसंख्य इति च वयसि वदामः। नखपर्यन्त-शब्देनेदमाह—नखस्य यः पर्यन्तो भागः अवधिभागः अवसानभूमिः। तत्राध इत्यपि सिध्यति। रेखारूपं चेदं रोहितमित्यपि द्रष्टव्यम्॥ ४१॥

कम्बोर्लक्षणमाह—

**कम्बुर्नखबहिःस्था स्यात् फलं श्वासविहिंसनम्।**

या नखबहिःस्था रेखा, सा कम्बुः। तस्याः फलं श्वासविहिंसनं श्वासनिरोध इत्यर्थः।

सिरालक्षणमाह—

**सिरा तु तदधःस्था स्याद् वर्तुलाकारसंस्थितिः।**
**फलं तस्याः सिरारोगः किञ्चिदभ्येत्यशंसनम्॥४२॥**

या तदधःस्था तस्याः प्रकृतोक्तलक्षणफलाया अधस्था अधोगामिनी वर्तुलाकारा च, सा सिरा। तस्याः फलं सिरारोगः। किञ्च अभ्येत्यशंसनं च॥ ४२॥

नीरालक्षणमाह—

**ऊर्ध्वपर्वबहिःस्थाना शाखाद्वयसमन्विता।**
**नीरा तु कथ्यते सद्भिरायुर्वर्धनकारिणी॥ ४३॥**

अस्यार्थः—या कनिष्ठिकोर्ध्वपर्वबहिःस्थानगता रेखा, सा नीरा तस्याः फलं स्पष्टविशदत्वादुपेक्ष्यम्॥ ४३॥

श्ववर्तुललक्षणमाह—

**तन्मध्यपर्वसङ्गानात् फलमिष्टमवाप्नुते(?)।**
**नात्र सन्धिः प्रकृष्टः स्यादिति चाप्यपरं मतम्॥४४॥**

या पुनर्मध्यपर्वसङ्गानाद् भवति पूर्वोक्तलक्षणफलाया एव रेखाया मध्यपर्वसम्प्रतिपत्त्या भवति, सा श्ववर्तुला। सम्प्रतिपत्तिश्च ऐक्यम्। तस्याः फलं स्फुटतरत्वात् सतां प्रकाशत एव। मध्यपर्वगतायास्तु पृथग्भावे फल-मप्युक्तं पृथग् भवति॥ ४४॥

लामालक्षणमाह —

**तदधोवर्तिनी लामा मालां लामेति कीर्तयेत् ॥ ४५ ॥**

या कनिष्ठिकाया अधःपर्वणि स्थिता, सा लामा । अत्रापि शाखा-द्वयसमान्वितत्वमध्याहर्तव्यम्, अनुषञ्जनीयं वा । तत्र फलं मालां लामेति कीर्तयेदिति । यथोपलब्धभाषी अयथोपलब्धभाषी च भवेत् । नामार्थोऽप्य-नेनैवोक्तः । किञ्च अत्रापि पूर्वसम्बन्ध आकाङ्क्ष्यते ॥ ४५ ॥

मातुलानीलक्षणमाह —

**तुलानी स्यादधस्तिष्ठेत् तस्या एव त्वधःस्थिता ।**

या तस्या एवाधःस्थिता सा मातुलानी । मेति पूर्वस्मादनुषज्यते, मध्यप्रदीपिकान्यायेन स्थितत्वात् । तस्याः फलमधस्तिष्ठेदिति । पुरुषः सर्व-त्राधस्तिष्ठेत् । न कदाचिदुच्चस्थलमधिरोहतीति ।

माधवीलक्षणमाह —

**कनिष्ठिकापरिसरे मधुलाभः फलं भवेत् ॥ ४६ ॥**

या कनिष्ठिकापरिसरे वर्तते, तत्रापि पार्श्वतोऽधःस्थिता, तस्या मधु-लाभः फलम् । मधुर्नाम न मधु । एतदुक्तं भवति—यथाशक्ति पुण्यकर्मा-नुष्ठानवशादस्मिन्नेव जन्मनि वसन्ते मृतिः स्यादिति ॥ ४६ ॥

रुक्मका[1]ण्ठिकालक्षणमाह —

**क्रमादैहिकभोगानां भुक्तिः स्यात् तदधःस्थया ।**

या तदधःस्था, सा रुक्मकण्ठिका । ऐहिकभोगानां क्रमाद् भुक्तिः स्यादिति फलम् ।

सम्प्रति महिष्ठालक्षणमाह —

**तदधःस्था न संस्थानान्मध्यमायुर्भवेन्नरः ॥ ४७ ॥**

या तदधःस्था सा महिष्ठा । पीठवन्महनीयं स्थानं स्थितिर्यस्याः सा तथा । फलमाह—न संस्थानाद् भवति । न संस्थानात्त्[3] भवति । संस्थानं स्वस्थानम् । किञ्च मध्यमायुश्च भवति । किञ्च मध्यमायुष्ट्वेऽपि न मध्यम-मध्यायुर्भवति । मध्यमोत्तमायुर्भवतीति रहस्यम् ॥ ४७ ॥

रोहिष्ठालक्षणमाह —

**रोहिष्ठा धननिष्ठा स्यात् तदधःस्थानसङ्गता ।**

---

१, २. 'णि' क. पाठः. ३. 'न ता' ख. पाठः.

या तदधःस्थानसङ्गता, तद्गतः पुरुषस्य धननिष्ठा स्यादिति ।

धेनुकाद्या विंशतिरेखास्तदधःस्थानगतायाः सीमारेखाया अधः कोर्पराख्ये भागवि. शेष इव विशेषाख्याः तद्वदत्रापि द्रष्टव्याः । तासां फलानि लक्षणानि च यथाक्रमं क॰ थ्यन्ते । फलावशेषे तु विशेषकथनं भवति ।

**धेनुकाद्याः क्रमेण स्युर्यावत् सन्धिं गताः पुनः ॥ ४८ ॥**

लक्षणमेतत् । यावत् सन्धिं या गताः करभे स्थानविशेषक्रमेण गताः, या एवम्भूतास्तास्तथानामयुक्ताः कथ्यन्ते । तत्र यस्याः स्थाने या नास्ति, तत्फलवैकल्यमनुसन्धेयम् । स्थानविशेषपरिज्ञाने कारणं किमिति चेत्, क्रम इति ब्रूमः । क्रमस्य सर्वासामभावे न ज्ञापकत्वमिति चेत्, न । ऊहापोहपटोः सर्वथा क्रमो विशेषावगमहेतुरिति ॥ ४८ ॥

**श्रीभङ्गो मतिमान्द्यं च प्रशस्तिस्तपसां गतिः ।**
**धैवतेऽप्यभिलाषश्च मन्दधीत्वं[1] महत्प्रभः ॥ ४९ ॥**
**अत्युष्णभोजी सिंहास्यः स्वरुचिर्दैं[2]वनिःस्पृहः ।**
**गण्डस्थलविरूपत्वं सोमभक्षः क्रतुक्ष[3]यी ॥ ५० ॥**
**मन्दजिह्वः क्रमोष्मा च मिथ्याभाषी मदोद्धतः ।**
**लवणेप्सु[4]रिति प्रोक्तं फलजातं यथाक्रमम् ॥ ५१ ॥**

कानिचित् फलानि पुरुषपरतयोक्तानि, कानिचिदन्यतया इत्यवगन्तव्यम् ॥ ४९—५१ ॥

अस्ति वामकरतले आत्मरेखाया मूले काचिद् रेखा कविसंज्ञा । तत्फलमाह—

**विशेषावगमाभावाद् वीरहत्या भवेद् ध्रुवम् ।**

अस्यार्थः —कविरेखायुक्तस्य ध्रुवं वीरहत्या भवेत् । कुतः, विशेषावगमाभावाद् विशेषज्ञानाभावात् । इदमत्र तात्पर्यम् — अनया सम्पन्नः कविर्भवति । प्रतिभानवान् भवतीति यावत् । केवलं तद्वानेव भवति, न प्रज्ञावान् । ततश्च विवेकाभावाद् वीरहत्या काचिद् भवेत् । क्षत्रविषयेयम् । यदि क्वचिदन्यविषयत्वं, फलान्तरं कल्पनीयम् । किं तदिति चेत्, न तदेवेति ब्रूमः, तत्र सहकारित्वमिति ।

१. 'त्वमुदग्र' क. घ. पाठः. २. 'दैं' क. पाठः. ३. 'क्र' घ. पाठः, ४. 'स्फुरितं प्रो' ङ. पाठः.

अङ्गुष्ठमूलगतानां बाहुरेखाणां लक्षणमाह—

**आत्मभागस्थिता यास्तु तासां लक्षणकत्थनम् ॥५२॥**

याः पुनरङ्गुष्ठमूलगतास्ताः पञ्चविंशतिरेखास्तर्जन्याभिमुख्येन स्थिताः, तासां लक्षणकत्थनं फलम् ॥ ५२ ॥

किं लक्षणकत्थनमिति चेत्। तदुच्यते—

**वायो(?) श्रद्धावतः पुंसः सौन्दर्यात्[1] स्वर्गधिक्कृतिः ।**

स्वर्गस्य धिक्कृतिर्धिक्कारो यस्य स तथा ।

**वेदनिन्दकयूनां च**

वेदः सर्वनिन्दको युवा[2] च तथा, तेषाम् ।

**स्वन्नपात्रमहोदरे ॥ ५३ ॥**

स्वन्नपात्रमहोदरेषु च अयं निन्दां करोति । शोभनमन्नपात्रं, मह उत्सवः, उदरं च कुक्षिः, एतेषां निन्दां करोति ॥ ५३ ॥

**देवस्य स्वर्गयागादेः**

साध्यसाधनभावस्येत्यर्थः ।

**देवस्यापि[3] विशेषतः ।**

विशेषतो देवस्यापि । य आत्मीयादन्यस्तस्येत्यर्थः ।

**क्वचित् पुम्भावयुक्तस्य**

वीरस्येति यावत्। क्वचिदिति युद्धभूमिमाह ।

**जन्मनो मरणस्य च ॥ ५४ ॥**

**विज्ञानानां प्रमाणानां शास्त्राणां च स्वयं प्रभोः ।**

**दारिद्र्यस्य फलानां च श्रियस्तोमस्य**

समूहस्येत्यर्थः ।

**वाग्विदाम् ॥ ५५ ॥**

वाचस्पतिप्रभृतीनामित्यर्थः ॥ ५५ ॥

एवं पञ्चविंशतिरेखाणां संज्ञार्थस्फुटत्वं सिद्धं कृत्वा फलान्युक्तानि लक्षणानि च । अत्रात्मरेखायाः सन्निधिमारभ्याङ्गुष्ठबन्धपर्यन्तं प्रत्येकं स्थितास्ताः पूर्वोक्तसंज्ञावत्य इति

१. 'सुन्दर्या स्व' क. ङ. पाठः. २. 'वा त' ङ. पाठः, ३. 'वेदस्या' ख. पाठः,

लक्षणं प्रत्येकं योजनीयम् । क्रमश्चात्र सहकार्यन्तरव्यवहितः प्रमाणम् । कस्याश्चिदभावेऽपि शिष्टानां फलनिर्णये इत्युक्ता दिक् सर्वत्रापि चेयमस्मिन् प्रकारेऽनुसन्धेया ॥

कृष्णगोधिकालक्षणमाह—

**या कनि(ष्ठिकां ? ष्ठां) समुद्दिश्य स्वात्मनो गच्छति**
**[ स्फुटम् ।**
**फलं तस्याः पुत्रतापः क्वचिद् गच्छति शं तनोः ॥ ५६ ॥**

या पुनः कनिष्ठिकां समुद्दिश्य स्वात्मनो गच्छति स्वात्मरेखायाः[1] सकाशाद् गच्छति, सा कृष्णगोधिका । कृष्णत्वे सति गमने पर्याप्ता अधिका च । तस्याः फलं पुत्रतापः पुत्रविषये तापः पुत्रनिमत्तं वा । क्वचित् तनोः शं च गच्छति । क्वचिदित्यवस्थाविशेषमाह ॥ ५६ ॥

महामनोर्लक्षणमाह—

**तत्रोपरि स्थिता साक्षान्महामनुरुदीर्यते ।**
**तस्याः फलं मन्त्रसिद्धिः स च मुक्तौ प्रसाधनम् ॥ ५७ ॥**

या पूर्वोक्तलक्षणफलाया रेखाया उपरि स्थिता, सा महामनुः । तस्याः फलं मन्त्रसिद्धिः मन्त्रलाभः । यदि वा, मन्त्रेण सिद्धिः सिद्धत्वप्राप्तिः । स च मन्त्रः मुक्तिविषये प्रसाधनमलङ्कारः । यद्वा मुक्तेः साधनं तत्त्वे न वैकल्यमिति प्रार्थः ॥ ५७ ॥

चरुण्णीलक्षणमाह—

**अङ्गुष्ठान्तर्गता गत्या मध्यसम्बन्धवर्जिता ।**
**बहुरेखासमावेशसङ्गता शूलरोगकृत् ॥ ५८ ॥**

या पुनर्गत्या गमनेन मध्यसम्बन्धवर्जिता, मध्यशब्देन मध्यमस्था रेखा लक्ष्यते, तया यः सम्बन्धः, तेन वर्जिता शून्या, बहुरेखासमावेशसहिता च, सा चरुण्णी । तस्याः फलं शूलरोगकृद् भवेत् पुरुषः इति । शूलेन रोगो बाधः । अनपराद्धस्य पुंसः तत्कर्ता भवति तद्वान् पुरुषः । यदि वा शूलाख्यो व्याधिः शूलरोगः, तत्कर्ता भवति तद्वान् पुरुष इति ॥ ५८ ॥

---

१. 'ने व्रति प', २. 'स्थानवि' क. ड. पाठः.

पुनरपि तत्सन्निधिवर्तिन्याः परुष्णीसंज्ञाया लक्षणमाह—

तत्सन्निधौ वर्तते या तदधस्ताद् विशेषतः ।
तस्याः फलं कठोरत्वं सर्वजन्तुषु भूयसा ॥ ५९ ॥

अस्यार्थः—या तत्सन्निधौ वर्तते विशेषतस्तदधःस्थिता च, सा परुष्णी। तस्याः फलं कठोरत्वम्। कथमिति, भूयसा बाहुल्येन। किंविषयमिति चेत्, तदाह—सर्वजन्तुष्विति। न जीवशून्येषु ॥ ५९ ॥

केषाञ्चित् पुनर्जीवशून्येष्वपि कठोरत्वं[1] कथमिति तस्या लक्षणमाह—

कटकस्थानसंस्थाना परा तद्वत् प्रहस्तिका[2] ।

तथा तद्वदित्यर्थः । या कटकस्थानसंस्थाना तस्या एतत् फलं कठोरत्वम्। अजीवेषु जीवेष्वपि निरन्तरं स्पष्टमेतदित्यर्थः ।

इमं देशमारभ्य या बाहुमूलपर्यन्ता[3] शत रेखास्तासां करतलमूलमारभ्य स्थितानां पृथक्स्थितानाम्, अपृथक्स्थितानां च, स्वस्तिकरूपेण स्थितानां च, चक्ररूपेण स्थितानां, मत्स्यरूपेण स्थितानां, वज्ररूपेण स्थितानां, बन्धरूपेण स्थितानां, सिराबन्धमनुप्रविश्य स्थितानां, रोमभिस्तिरोहितानामतिरोहितानां, कृष्णानां, रूपान्तरैरपि सम्मिलितानां, सर्वासां लक्षणानि, क्रममनुलङ्घ्य स्थितानां संज्ञाक्रमेणोक्तानां च तदुपरि स्थिता तत्संज्ञेत्येवमाकारेणैवोक्तानि लक्षणानि । फलं प्रत्येकमुच्यते ॥

केशाग(ण्डं ? ण्ड)ललाटास्थिमन्थनं

ललाटे यदस्थि, तस्य मन्थनं मथनं रोगादिना पीडनमिति यावत् ।

शुक्लकृन्तनम् ॥ ६० ॥

शुक्लस्य कृन्तनं, शुक्लस्य[4] छेद इत्यर्थः ॥ ६० ॥

कफव्याधिः पृथुत्वं च लिङ्गस्या योनिपीडनात् ।

आ योनिपीडनाद् योनिपीडनं यावत् तावल्लिङ्गस्य पृथुत्वम् ॥

परिक्लेदः

सर्वदा स्मरणादावपि रेतःस्खलनमित्यर्थः ॥

पूयगन्धो लिङ्गे कर्पूरसौरभम् ॥ ६१ ॥

---

१. 'खं त'. ङ. पाठः. २. 'हा' ख. पाठः. ३. 'न्तस्थ' ख. ङ. पाठः. ४. 'क्लच्छे' ख. पाठः.

तत्रैवेति शेषः ॥ ६१ ॥

**प्रधानत्वं च विद्यानाम्**

प्रवृत्ताविति शेषः ।

**आत्मसंस्कारशालिता ।**

**नित्यानित्यविवेकश्च धर्माधर्मौ**

फलद्वयमि(ती ?)दं, तयोः प्रवृत्तिरित्यर्थः ।

**मनीषिना ॥ ६२ ॥**

**करुणा सर्वलोकेषु कृपा स्वात्माश्रिते जने ।**

**वरिष्ठता सभायां स्यात्**

सभा विद्वत्सभा, न स्थितजनसमूहमात्रम् ।

**सर्वलोकस्य निन्द्यता ॥ ६३ ॥**

सर्वलोकस्येति कर्तरि षष्ठी । अयं सर्वलोकनिन्द्यो भवतीत्यर्थः ॥

**वाचां पतित्वमाश्चर्यदर्शित्वं योगनिष्ठता ।**
**सर्वेश्वरे च भक्तिश्च तीर्थस्नानं शिरोवधः ॥ ६४ ॥**
**पुण्यस्थले च संवासः श्रीविद्यामन्त्रभक्तता ।**
**तक्षकेषुस्नेहबन्धः**

तक्षका इवंवरच तक्षकेष्वः, तत्स्नेहबन्धः ।

**मधुरेषु रुचिस्तथा ॥ ६५ ॥**

द्रव्येष्विति शेषः ॥ ६५ ॥

**तक्रस्पृहा तथाम्रादिफलेष्वपि मतिश्चिरम् ।**
**नित्यरोगः शरीरेषु नीरसेष्वपि रागिता ॥ ६६ ॥**

**प्रसिद्धिः सुप्रभातं च**

सुप्रभातं नित्यसुदिनत्वमित्यर्थः ।

**कर्कशत्वमनिम्नता ।**

अङ्गानामनिम्नतेत्यर्थः ।

**नित्यस्त्रीसेवनान् क्लेशः सेवाभावात् तथा पुनः ॥६७॥**

**मधुसेवा**

मद्यसेवेत्यर्थः ।

**महाव्याधिः सारस्यं साधुतामतिः ।**

बुद्धिह्रास इत्यर्थः ।

**क्वचित् फलमहत्त्वं च**

आत्मनोऽपि विद्याफलादेर्महत्त्वमित्यर्थः ।

**स्त्रीनैराश्यं**

स्त्रीषु निराशतेत्यर्थः ।

**विवेकिता ॥ ६८ ॥**

**आभासत्वं च कायस्य**

वयोनुरूपं शरीरं न स्यादित्यर्थः ।

**परार्धे चाप्ययुक्तता ।**

यच्छरीरस्य परार्धं नाभेरधःप्रदेशः पादान्तवर्ती तस्यायुक्तता, पूर्वार्धेनायुक्तता अननुरूपता ।

**ह्रस्वाकारपरित्यागः**

पूर्वं ह्रस्वाकारो यः पुरुषस्तस्य तद्भावपरित्यागो भवेत् । अत्राकारो न धर्मः, किन्तु शरीरं धर्मि ।

**तथा संहृतिरैश्वरी ॥ ६९ ॥**

ईश्वरस्थानभ्रंश इत्यर्थः ॥ ६९ ॥

**आमगन्धिर्धूतकृतिः स्यात् स्पर्धिता च जने जने ।**

जने जने स्पर्धिता च (यो) यः पुरतो दृश्यमानो जनस्तान् सर्वानुद्दिश्य स्पर्धिता भवेत् ।

**विमानः सर्वलोकेषु**

सर्वलोकेषु विमानः विरुद्धो मानः ।

**पूज्यता वन्दिवर्गयोः ॥ ७० ॥**

वन्दिजने समूहे च पूज्यतेत्यर्थः ॥ ७० ॥

---

१. 'गः । हृ' क. पाठः. २. 'र्थः । किञ्च आ' क. ङ. पाठः.

नास्तिक्यं दारनिःस्नेहः

पुरुषपरमेतत् ।

क्रौर्यं

क्रूरत्वं, क्रूरहृदयत्वमिति यावत् ।

स्यात् सर्वगामिता ।

सर्वशब्देन अभिरुचितो विषयोऽभिधीयते ।

ग्रामत्यागो गृहत्याग आयुस्साक्ष्यं कृते फले ॥ ७१ ॥

कृते फल इत्यर्थः ॥ ७१ ॥

वारिस्पर्धा

जलपतनध्वनिश्रवणसमनन्तरं तदसहमानतेत्यर्थः ।

कविद्रोहः

कव्युपद्रवशीलः । पुरुषपरमेतत् ।

क्षयिष्णुफलसङ्गमः ।

क्षयिष्णुभिः फलैः सङ्गमः ।

आराददर्शनं विष्णोः

दूरादप्यदर्शनमित्यर्थः ।

शिवद्वेषस्तथा पुनः ॥ ७२ ॥

क्रयविक्रयशीलत्वं विक्रयित्वं क्रयार्जनम् ।

क्रयेणार्जनमित्यर्थः ।

धर्मस्थितिः परीपाकः

हृदयच्छैलवैपरीत्यमित्यर्थः ।

मांसासृक्श्रद्धयान्वितः ॥ ७३ ॥

स्त्रीविषये कुङ्कुमश्रद्धयान्वितः ॥ ७३ ॥

बाल्ये पतितमारोग्यं सुरुचित्वम्

विषयशोभनवशात् ।

अनीशता ।

---

१. 'न' क. पाठः. २. 'मू' ह. पाठः. ३., ४ 'न्वय' क. ङ. पाठः.

**मन्दता विषयद्वेषो वैराग्यं**

अनयोरुपायोपेयभाव इति न पौनरुक्त्यम् ।

**सर्वमान्यता ॥ ७४ ॥**

विदुषामविदुषां च चराचराणामप्ययं मान्यो भवति ॥ ७४ ॥

**कटाक्षधूत्कृतिः**

कटाक्षेण धिक्कारः, सकलजनकृत इत्यर्थः ।

**सम्यग्भाषायामविवेकिता ।**

सम्यग्भाषणे यः कारणभूतो विवेकः तेन शून्यत इत्यर्थः ।

**धृष्टत्वं कपिवद् वेदनैराश्यं**

अवैदिकत्वमित्यर्थः ।

**नखकृन्तनम् ॥ ७५ ॥**

**स्पष्टता सर्वदोषेषु विषयेषु च मानिता ।**

**अलाभः श्रद्धितेऽत्यर्थे**

अतिशयितेऽर्थे श्रद्धिते श्रद्धाविषये कृते तस्मिन् तस्यालाभ इत्यर्थः ।

**मधुरद्रव्यसङ्गतिः ॥ ७६ ॥**

मधुरद्रव्यलाभ इत्यर्थः ॥ ७६ ॥

**अरुच्ये विषये श्रद्धा**[1]

बहूनामरुचिविषयो यो विषयस्तस्मिन् श्रद्धा इति ।

**बहूनाकामसङ्गतिः ।**

बहवो गुणा ऊना यस्याः सा स्त्री तथा । तां प्रति कामसङ्गतिः कामसम्बन्धः ॥

**मन्दप्रदीपवेश्मस्थापरद्रव्याभिलाषिता ॥ ७७ ॥**

**वसुस्नेहः**

वसु धनं तस्मिन् स्नेहः । तद्विषयो राग इत्यर्थः ।

**प्रभुत्वं च**

सर्वविषयमित्यर्थः ।

**फलजातमिदं क्रमात् ।**

---

१. 'द्धा अरु' घ. पाठः.

इदं फलजातं क्रमादनुसन्धेयम् ॥

या बाहुमूले वन्धनी रेखा, सा कुहरगता । तस्याः लक्षणमाह

**या बाहुमूलमाश्रित्य तिष्ठते सा महाद्युतिः ।**
**चिकित्सालक्षणं तस्याः फलमप्यनुशास्ति तत् ॥ ७८ ॥**

या बाहुमूलमाश्रित्यात्मानं प्रकाश्य तिष्ठति, महाद्युतिश्च सा, चिकित्सालक्षणं तस्याः फलम् । तदेवानुशास्तीति । लक्ष्यत इति लक्षणं. चिकित्सैव लक्षणं, चिकित्साफलमित्यर्थः ॥ ७८ ॥

लक्ष्मलक्षणमाह ---

**या तत्रैव परा विप्लुर्लक्ष्मेति परिकीर्त्यते ।**

या तत्रैव कुहरे विप्लुः, सा लक्ष्मेति परिकीर्त्यते । तस्याः फलं पराभवः ।

**यदि वा फलमन्यत् स्यात् पारम्पर्यस्य धीस्तथा ॥ ७९ ॥**

यदि वा अन्यत् फलं. किं तदिति, पारम्पर्यस्य विज्ञानम् । तथा पूर्वोक्तः पराभवोऽपीति ॥ ७९ ॥

दीर्घिकालक्षणमाह ---

**दीर्घिका बाहुमूले या कुहरस्थितिरीक्ष्यते ।**
**तस्याः फलमसौभाग्यमश्रीकत्वमिति द्वयम् ॥ ८० ॥**

या बाहुमूले कुहरस्थितिः कुहरभङ्गिः ईक्ष्यते, सा दीर्घिका । तस्याः फलमसौभाग्यम् असुभगता अश्रीकत्वम् अभूतिमत्त्वम् अकान्तिमत्त्वं च ॥ ८० ॥

धर्मसंस्थितालक्षणमाह ---

**तदधस्तात् पवित्राङ्गी लक्ष्मस्थितिरुदाहृता ।**
**तस्याः फलं कुचेलत्वं तपोनिष्ठा स्त्रियः क्वचित् ॥ ८१ ॥**

अस्यार्थः--- या तस्या अधस्तात् पवित्राङ्गी पवित्रस्याङ्गमिवाङ्गं यस्याः सा तथाविधाकारसंस्थितिः, रेखेत्यर्थः । तस्याः फल कुत्सितवासस्त्वम् । स्त्रीणां चेत् तपोनिष्ठा व्रतचर्या ॥ ८१ ॥

---

१. 'नाम फ' इ. पाठः. २. 'ष्ठता व्र' ख. इ. पाठः.

इत आरभ्य कटिपर्यन्तं याः स्थिताः क्रमाद् रेखास्तासां तदुपरिस्थिता तत्संश्लेषेणैवमाकारेण लक्षणस्य सिद्धत्वात् फलान्युच्यन्ते । तत्र तावदशीतिसङ्ख्या रेखाः तावन्ति च फलानि । तान्यनुक्रामति—

**श्वभक्षणं**

श्वभिस्तस्य भक्षणं भवेदित्यर्थः ।

**पुरस्कारः**

सर्वैस्तस्य पुरस्करणं भवेत् ।

**काञ्चनध्रुवसङ्गतिः ॥ ८२ ॥**

काञ्चनसंस्कृतं धनं, तस्य ध्रुवा सङ्गतिः, पुनरत्यागो यथा भवेत् तथारूपा सङ्गतिरित्यर्थः ॥ ८२ ॥

**मालिन्यं मदनध्वंसः**

मदनेन ध्वंसः, स्वस्य मरणमित्यर्थः ।

**कर्णशूलः**

व्याधिविशेषः, न कर्णे शूलविध्वंसः ।

**स्वरक्षयः ।**

**जिह्वाभेदः कफग्रन्थ्या**

कफग्रन्थी राजयक्ष्मा ।

**मांसगन्धः स्वरस्रुतिः ॥ ८३ ॥**

स्वरस्रावः, अवचनक्षमतेति यावत् ॥ ८३ ॥

**कफगण्डो गण्डलज्जा रतिमान्द्यमनिःस्पृहः ।**

पुरुषपरमेतत् ।

**विश्वासः शत्रुपक्षेऽपि मान्यहानिर्मतिभ्रमः ॥ ८४ ॥**

निरन्तरमिति शेषः ॥ ८४ ॥

**अलङ्काररुचित्वं च यानादिषु रुचिस्तथा ।**
**क्वचिदुन्मादवत्त्वं च त्यागिता सर्वसम्पदाम् ॥ ८५ ॥**
**अवेगित्वं विरागश्च नाट्यलिप्सा**

---

१. 'ग' घ. पाठः.

नाट्यदर्शनलिप्सेत्यर्थः।

भयं मृतिः

झटितीत्यर्थः।

कुमाररोदश्रवणे निर्घृणत्वं सुखेषिता।
दुःखित्वमविषह्यत्वं मानभङ्गः समिद्रतिः॥ ८६॥

पलाशादिसमिद्रतिरित्यर्थः॥ ८६॥

ब्रह्मचर्यमसङ्गत्वम्

निरन्तरं सर्वेष्विति शेषः।

अशुचित्वमलङ्क्रिया।

मानो दण्डस्तितिक्षा च कर्मशाबल्यमन्तरा॥ ८७॥
प्रणवः सर्ववेदेषु (?) तीर्थस्नायित्वमीशिता।
मन्दभाषित्वमल्पज्ञभावः कम्राकृतिस्तथा॥ ८८॥

तथा कम्रा आकृतिरित्यर्थः॥ ८८॥

शीघ्रयायित्वमन्धत्वं पङ्गुत्वं नष्टकर्णता।
निर्दन्तत्वमथ स्नेहः प्रचण्डत्वं निजे जने॥ ८९॥
क्रूरवाक्त्वं प्रभुत्वं च मलिष्ठजनभाषणम्।
वेदनिन्दा सुयज्ञत्वमधर्मरतिरित्यपि॥ ९०॥
जनवादः

तद्विषयस्त(या? था) दुर्जनभाषणमिति।

परास्फोटः

मूलाधारत्रुटनमित्यर्थः।

क्वचिद्धस्तिविहिंसनम्।

अश्वद्रोहः कृमिद्रोहः पित्तरोगः शुभा गतिः॥ ९१॥
नासाच्छेदः कर्णवेधः

स्वारसिकादन्य इत्यर्थः।

---

१. 'भ' क. पाठः. २. 'न्द्र'. ३. 'दुःखत्व' घ. पाठः ४. 'र्थः। एव' क. पाठः.

चिबुकत्रुटनं तथा ।

ललाटास्फोटसंहारौ + + + + + + + + ॥ ९२ ॥

तत्र ललाटास्फोटः घट्टनादिना, संहार आयुधेन भेदः, छेद इत्यर्थः ॥ ९२ ॥

रक्तस्रुतिः सिरावेधो नाडीसङ्गो न(च्छि ? सच्छि)द्रिः ।
स्वर्णस्तैन्यं सुरास्तैन्यं घृतस्तैन्यं शुभाहतिः ॥ ९३ ॥

शुभारम्भे तस्याहतिरित्यर्थः ॥ ९३ ॥

द्विजानां च बहिष्कारः

द्विजैर्बहिष्कारो भवेत् । कर्तरि षष्ठी ।

मेहनं भोजनस्थि(तिः ? तौ) ॥ ९४ ॥

भोजनाथ या स्थितिः सनियमा, तस्यां क्रियमाणायां मूत्रीकरणं भवति ॥ ९४ ॥

एवं कटिपर्यन्तगतानां रेखाणां बाहुमूलमारभ्य स्थितानां वृषणयोनिचक्रगतानां च वलित्रयाणां च लक्षणानि फलानि चोक्त्वा कटिदेशे[२] काचित् परिवृत्तिस्थिता रेखा तां लक्षयति फलं च कथयति—

जान्वोरघोषा रुचिरा स्पृहणीया प्रवर्तते ।
कटिस्थाने फलं तस्याः सौभाग्यमिह कथ्यते ॥ ९५ ॥

या कटिस्थाने कट्याख्ये स्थाने, काञ्चीपद इति यावत् । तत्र रुचिरा सुभगाकारा परिवृत्त्य स्थिता रेखा, सा जान्वोः अघोषा नामतः । तस्याः फलमिह सौभाग्यं कथ्यते । इहेति सर्वप्रियत्वादिति विषयनिर्देशः ॥ ९५ ॥

तत आरभ्य गुल्फपर्यन्तं द्विशतं रेखास्तासां तदधस्तात्संज्ञेत्येवमाकारेणैव लक्षण-सिद्धेः फलानि क्रमेण पठति —

सुखं विद्या मतिक्लेशः प्रणयः कारुवर्गयोः ।

कारुजने समूहे च परिचयः स्यादित्यर्थः ।

वामिता लोकवैचित्र्ये

लोकवैलक्षण्ये विरुद्धतेति यावत् ।

---

१. 'ट', २. 'नि चो' घ. पाठः.

प्रत्यक्षक्षपणक्षमा ॥ ९६ ॥

यत् प्रत्यक्षं वस्तु तस्य विनाशने क्षमा धैर्यमित्यर्थः ॥ ९६ ॥

**क्षमागुणो धृतिः**

अयं विशेषः । क्षमा नाम अपराधे विद्यमानेऽपि तेषु जनेष्वनिर्वेदः । धैर्यं च स्वतो धीरत्वम् । गम्भीरत्वमिति यावत् ।

+ + + + कान्तिर्दाक्षिण्यम् ।

**शिल्पित्वं कुशलत्वं च**

अयं विशेषः । शिल्पित्वं कारुवैचित्र्यं, कुशलत्वं सर्ववैचित्र्यमिति ।

मन्दहासः प्रिये जने ॥ ९७ ॥

**रतिमान्द्यं दुष्टजने देवद्वेषः शिलाप्लवः ।**

शिलाप्लवो नाम यत्र जलवति स्थले कूपतटाकादौ शिलाः मज्जन्ति तत्राप्लवपरः पुरुषो भवति ।

हेतिस्पृहा कर्मवशान्निद्रोहः [illegible] ॥ ९८ ॥

**गोस्पृहा**

गौः कर्मानुगुणशब्दादिः ।

+ + + + + + - - वृद्धसेवनम् ।

**यज्ञादिकर्मनिरतं**

भावप्रधानो निर्देशः । यज्ञादिकर्मनिरतत्वमित्यर्थः ।

श्रीधीर्भीः [illegible] ॥ ९० ॥

एतानि क्रमेण फलान्येकस्यैव लक्षणस्येत्यर्थः ॥ २९ ॥

**स्वच्छन्दता परं प्रेम निःस्नेहत्वं तु विक्लवः ।**

विक्लवो वैक्लव्यम् ।

**अनालस्यममन्दत्वं**

अमन्दप्रवृत्तत्वमित्यर्थः ।

---

१. 'शाठ्यं निद्रो' क., 'शाठ्य स्त्रीद्रोहः' ख. ग.

**क्लेशानां चापि पात्रता ॥ १०० ॥**

पात्रता नामाधारतामात्रम् । क्लेशा व्याधयः ॥ १०० ॥

**किरीटयोगिता स्वास्थ्यं**

स्वस्थत्वम्, अव्याकुलतेति यावत् ।

**त्रयीभक्तिः स्वरच्युतिः ।**

स्वरच्युतिः पूर्वं स्वरवतस्तद्भ्रंशः ।

**मन्त्रादिनिरतत्वं च दीर्घायुष्ट्वमनःस्पृहा ॥ १०१ ॥**

अनः शकटः, तद्विषया स्पृहा ॥ १०१ ॥

**रथनेमिस्वनौत्सुक्यं कर्कशार्थविवेचनम् ।**

**सूतत्वं बाणसंसर्गः**

बाणवेध इत्यर्थः ।

**निद्रापरवशत्ववत् ॥ १०२ ॥**

अत्र निद्रापरवशत्वमपि फलम् । तद्वदन्यदपि फलमित्येकफलत्वमित्यर्थः ॥ १०२ ॥

**सरोजगन्धिता वक्त्रे मल्लिकागन्धिता तथा ।**

वक्त्र इत्यत्राप्यनुषज्यते ।

**कल्हारगन्धितोपस्थे धूसरत्वं निजाकृतेः ॥ १०३ ॥**

निजशब्देन स्वाभाविकत्वमुच्यते ॥ १०३ ॥

**अल्पायुष्ट्वमसन्तोषः शिरोरोमविकृन्तनम् ।**

समूलविकृन्तनमित्यर्थः ।

**कालस्तु वयसोऽन्यत्र सर्वत्रापि[1] च तन्मितिः[2] ॥ १०४ ॥**

तन्मितिः तदवस्थायां यन्मितिः प्रमाणं प्रेक्ष्यलक्षणादि तत् कालनियामकमित्यर्थः ॥ १०४ ॥

**गलगण्डः कफापीडा**

कफनिमित्ता आपीडा कफापीडा । आपीडा वयोविशेषाननुरूपा ।

**कफपीडा मनोरथः ।**

प्राप्तुमशक्यो मनःसङ्कल्पः मनोरथः ।

---

१. 'स्त्रापि त', २. 'ति' ख. पाठः.

स्वल्पज्ञता शास्त्रगतिः परिणामः कथादिभिः ।
स्वच्छन्दवृत्तिता धर्मः कोशभङ्गः
निधित्यागो वा ।
भुवो हृतिः ॥ १०५ ॥
अन्येनापहारः जलादिना वा ॥ १०५ ॥
राजपीडा वधोद्योगः प्राणिनां च विहिंसनम् ।
आम्रे रुचिः पक्वरुचिर्मांसलिप्सा भयद्रुतिः ॥ १०६ ॥
भयेन द्रवणं धावनमित्यर्थः ॥ १०६ ॥
वैराग्यं ब्रह्महिंसा च लोलुपत्वमतन्द्रिता ।
खर्वाटकत्वमीशत्वं
स्त्रीष्विति शेषः ।
वाल्लभ्यं
स्त्रीणामिति शेषः ।
जाह्नवीरुचिः ॥ १०७ ॥
सर्वनिन्दा बहुभाषासम्मर्दः फणितिस्पृहा ।
स्वगव्याधिर्गणिकासङ्गः पार्थिवत्वममोघधीः ॥ १०८ ॥
निद्रावत्त्वम्
अकाल इति शेषः ।
अलुब्धत्वमल्पसन्तोषवर्जनम् ।
दुर्गर्वः कपिलाङ्गत्वं मालापरिमलस्पृहा ॥ १०९ ॥
अश्वस्पृहा गजेहा च मिथ्याभाषणमार्द्रता ।
वयोज्ञानं कालहानिः शीधुगन्धरतिस्तपः ॥ ११० ॥
मन्दप्रज्ञा यतिस्पर्धा पाषण्डिगुणपूर्णता ।
पाषण्डिनां ये गुणाः, तैः पूर्णतेत्यर्थः ।
यतिस्वापह्नुतिर्दण्डच्छेदः कृष्णाजिनच्छिदिः ॥ १११ ॥
मदो हर्षश्च

---

१. 'सर्वेज्ञ', २., ३. 'वै' ब. पाठः.

किञ्च,

सन्तापः प्रमदासङ्गवर्जनम् ।
हर्षातिरेक आलस्यं सीमाभङ्गः पृथक्क्रिया ॥ ११२ ॥
पुत्रभङ्गः स्वयं निन्दा माननाशः पराजयः ।
स्वर्गश्रीनिन्दनं शीघ्रगामिता बालिकारुचिः ॥ ११३ ॥
वृद्धारुचिः स्वराष्ट्रस्थक्रूमिदंशः

क्रूमिरजगरः ।

पदच्छिदिः ।
हस्तच्छिदि(स्वर्णमोष?)श्चोरभङ्गः

चोरैरात्मनो भङ्ग इत्यर्थः ।

शुचीहकिस्पर्श रतिः
[॥ ११४ ॥

अप्सु रेतोनिषेक इत्यर्थः ॥ ११४ ॥

भूगतिर्निजखट्वाया गतिरजगवीगतिः ।

अजगवी अजेत्यर्थः ।

महिषीगतिः

महिष्याः कृष्णगोर्गतिरित्यर्थः ।

अभ्यूह्यागतिः

अभ्यूह्या नामाज्ञातस्त्री, तस्या गतिरिति ।

मेघद्रुहा तथा ॥ ११५ ॥

मेघद्रुहा मेघद्रोहः, मेघनिमित्तस्वद्रोह इत्यर्थः ॥ ११५ ॥

पलण्डुगन्धं आस्यस्य दुर्गन्धिरुचिता तथा ।
श्रद्धालुता परद्रव्ये वीर्यभङ्गः क्रूमिस्पृशा ॥ ११६ ॥

स्पृक् स्पर्शः तेन, क्रूमिदंशेनेति यावत् । वीर्यं नाम लिङ्गं, तस्य क्रूमिदंशेन नाश इत्यर्थः ॥ ११६ ॥

नीरोगिता लोचनेषु पदाघातः

अन्यस्य पदा आघातो भवेदित्यर्थः । अपराधे जाते कश्चिदेनं पदा ताडयति । इदमत्र तात्पर्यम् ।

---

१. 'प', २. 'स्त्री', ३. 'ग', ४. 'वीगतिः अजगवीति अ', ५. 'न्धः स्वास्य' ब. पाठः.

+ + + + ।

**मन्युरावपनं शीर्ष्णां**

आत्मकर्तृकमिति शेषः ।

**नीरोमत्वमतन्द्रिता ॥ ११७ ॥**

**मनःप्रचारः सर्वत्र कालुष्यं धर्मचारिता ।**

**पशुहत्या रथद्रोहः**

रथनिमित्तपीडेत्यर्थः ।

**मन्युहानिः स्वयं मृतिः ॥ ११८ ॥**

स्वयमिति मन्युहानिरेवेत्यर्थः ॥ ११८ ॥

**भत्यावेशः क्रियायोगे स्वयमात्माविलङ्घनम् ।**

**चिन्ताकुलत्वं सन्तोषो धृत्यालस्यविहिंसनम् ॥ ११९ ॥**

उभयसम्मिश्रणमित्यर्थः ॥ ११९ ॥

**स्वरुचिः**

आत्मरुचिरित्यर्थः ।

**शातरोगित्वं**

शाता रोगाः बाधका रोगा इत्यर्थः ।

**मन्दप्राप्तिर्विहिंसनम् ।**

पक्षिणां विहिंसनमित्यर्थः ।

**तद्ग्रहः**

पक्षिग्रह इत्यर्थः ।

**क्षामिता मृत्युः**

मृत्युः घातकसम्पर्क इत्यर्थः ।

**पृथुत्वं गोदरिद्रता ॥ १२० ॥**

**मलिनत्वम्**

अ(प ? वै)दिकत्वमित्यर्थः ।

**अनास्था च लोहितत्वं करादिषु ।**

करतलादिष्वित्यर्थः ।

---

१. 'मृत्युहा' ङ. पाठः. २. 'पाधृ' घ. पाठः. ३. 'तिः मर्हि', ४. 'त्युः स' घा. पाठः. ५. 'म् वदि' घ., 'म् अवटीकमि' ङ. पाठः.

**प्रसन्नता मन्दमतिः शिरोरोगः क्रमच्युतिः ॥ १२१ ॥**

**कालागरुस्पर्शरागः क्षीबता कणवृत्तिता ।**

**एकाग्रत्वं सिराबाधः**

क्वचिदङ्गे सिराच्छेदो भवेदित्यर्थः ।

**पैतृकेष्वप्यनिष्ठता ॥ १२२ ॥**

**यवीयसो मृतिः पश्चात् कनिष्ठस्य मृतिस्तथा ।**

पश्चाद्भाविन्या रेखायाः कनिष्ठमृतिः फलमित्यर्थः ।

**कनिष्ठभार्याविध्वंसः + + + + + + + + + ॥ १२३ ॥**

तस्य या भार्या, तस्या मृतिरित्यर्थः ॥ १२३ ॥

**यवीयस्तन्मृतिः पश्चात् तत्सुतस्तन्मृतिस्तथा ।**

तत्सुतः तस्य कनिष्ठस्य सुतः ।

**दन्तरोगः परस्पर्शः**

परस्य दन्ताधिष्ठानस्य स्पर्शः स्पर्शाख्यो व्याधिः ।

**महोदरमहत्त्वतः ॥ १२४ ॥**

महोदरमहत्त्वमित्यर्थः । प्रथमं महोदरं भवति प्रथमे वयसि । ततः पश्चान्मध्यमे वयसि तत्पूर्वभागे तन्महत्त्वं भवतीति ॥ १२४ ॥

**+ + + + + + + + + चक्षूरोगः पृथुश्रवाः ।**

श्रवः श्रोत्रम्[1] । श्रोत्रमेकं वा तस्य पृथु भवतीत्यर्थः ।

**मस्तकस्थानसंस्थानं भज्यते तद् व्यसोरपि ॥ १२५ ॥**

**शीलस्य दुस्सहत्वं च कर्षणं चापि वाग्मिता ।**

**निस्सहः**

असहन इत्यर्थः । तथा भवति तद्वानित्यर्थः ।

**क्रूरदृष्टित्वं फलजातमिदं क्रमात् ॥ १२६ ॥**

एतानि फलानि विशेषानुसन्धानेन सह क्रमोक्तसंज्ञानां रेखाणामनुसन्धेयानि । तत्र पुनर्याः संज्ञाः स्थानविशेषैः सममाकारविशेषैश्च समं कथितास्तत्र स्थानविशेषाणामाकारविशेषाणां च वैकत्रस्थानां भेदनियामक-

१. 'मेकं वा त', २. 'दुस्सहत्वमसहत्वमित्यर्थः । त', ३. 'आ' ख. पाठः. ४. 'ढकस्था' क. ख. पाठः.

त्वात् तासां नान्तर्भावो रेखाणामुक्तद्विशत इति शङ्का मा भूत् । कुतः, तन्न्यूनद्विशतत्वमेवावधारणीयं, न परिपूर्णद्विशतत्वम् । नच नैतद् युक्तमिति वाच्यम् । उत्सर्गापवादत्वात् स्थानविशेषकथनस्याकारविशेषकथनस्य च । फलान्युक्तानि तत्र सर्वत्राप्यनुसन्धेयानि । यत्र पुनः संज्ञाध्याय एव फलविशेषोऽपि कथितस्तत्र फलमपि नात्रस्थमन्वेषणीयम् । किन्तु अत्रस्थेनापि तुष्यतु इत्यभिप्रायोऽवगन्तव्यः ॥ १२६ ॥

अधुना वामपादपार्ष्णिगतास्तिस्रो रेखास्तासां लक्षणफलान्याह —

**तिस्रस्तु पश्चात् संयन्ति पार्ष्णिं यस्य फलानि तु ।**
**आयुः पुष्टं रतिश्चापि तादृशी धर्मसंहिता ॥ १२७ ॥**

अस्यार्थः — यस्य वामपादपार्ष्णिभागस्थास्तिस्रो रेखाः संयन्ति गच्छन्ति, तस्य तानि त्रीणि फलानि । पुष्टमायुः । पुष्टा रतिः सुरतम् । तादृशी परिपुष्टा धर्मसंहिता धर्मवार्ता । संज्ञाश्च क्रमेण पुनःशब्दोपरि वर्तमाना एतासामित्यवगन्तव्यम् ॥ १२७ ॥

**द्वे पुनस्तदधःस्थाने स्पष्टरूपे विशेषतः ।**
**फलं तयोस्तु कथितं प्रत्येकं मरणं जनिः ॥ १२८ ॥**

ये पुनस्तदधःस्थिते द्वे रेखे, ते उत्तरसंज्ञाद्वयोपहिते । तयोः फलं प्रत्येकम्, उच्यत इति शेषः । मृतिः, जनिः । जन्मा(न)न्तरमेव मरणमेकस्याः, अन्यस्या मरणानन्तरमेव जनिः इति ॥ १२८ ॥

याः पुनः कमठस्थितौ पञ्च रेखा अङ्गुलिपर्यन्तं वर्तमानाः, अधोऽधोन्यायेन ता उत्तरसंज्ञोपेताः । तासां फलान्युच्यन्ते —

**बृंहितत्वमसन्तोषः कामिता स्वल्पगृध्नुता ।**
**मनश्चलत्वमेतानि पञ्चकस्य स्थितानि तु ॥ १२९ ॥**

रेखापञ्चकस्य स्थितान्येवैतानि फलानीति ॥ १२९ ॥

**अङ्गुष्ठाङ्गुलिमुद्रा या त्रयी तस्याः फलं क्रमात् ।**
**रोगेष्वबहुमानित्वं निश्चलत्वमथो चलम् ॥ १३० ॥**

---

१. 'कत्वतयूब' घ. पाठः. २. 'यु' क. ङ. पाठः. ३. 'या, ४. 'स्थिता रे', ५. 'था' घ. पाठः.

अथो अथ । अङ्गुष्ठाङ्गुलिमुद्रा । अङ्गुष्ठस्य चिह्नभूता या रेखाणां त्रयी, तस्याः फलानि क्रमादुच्यन्ते । रोगेष्वबहुमानित्वं रोगेषु जातेषु जायमानेषु वा जनिष्यमाणेषु वा अबहुमानित्वम् । शिष्टं स्पष्टम् । संज्ञात्रयमस्याख्याः क्रमेणेति मन्तव्यम् ॥ १३० ॥

तलेषु वर्तुलाकारा भवन्त्यस्याः क्रमेण तु ।
फलानि दश तस्याः(?)स्युरिति वाम उदीरणम् ॥१३१॥

तस्याः अस्याख्याः सम्बन्धीनि यानि पादतलानि, तेषु दश रेखाः । तलबहुत्वोक्तिः स्थानबहुत्वात् ॥ १३१ ॥

तासां क्रमेण फलान्युच्यन्ते —

दयार्द्रत्वममन्दत्वं कुशलत्वं फलेप्सुता ।
मालिन्यमुष्णरोगश्च शीतद्वेषः प्रजाकृपा ॥ १३२ ॥
महत्त्वं गुणिता चेति फलानां दशकं मतम् ।

स्पष्टार्थमेतत् । दशरेखाणां संज्ञाश्च योजनीयाः । त्रयीसंज्ञानामुपरि वर्तमानाः क्रमेणाङ्गुलिसन्निधिमारभ्य पार्ष्णिपर्यन्तं गच्छन्त्यश्च रेखाः । इति एवं, वामपाद उदीरणं, वामपादभागे रेखालक्षणफलानामिति शेषः ॥

सम्प्रति दक्षिणपादतलमारभ्य ललाटपर्यन्तं स्थितानां रेखादीनां तद आरभ्य तद्भागहस्तकनिष्ठिकाग्रपर्यन्तं स्थितानां च अतिविस्पष्टानां संज्ञा उक्ताः संज्ञाम्नायशेषेण, (तेषां ? तासां) क्रमेण फलान्युच्यन्ते —

प्रहुत्वं मतिमान्द्यं च कोशवृद्धिः
निधिवृद्धिर्वा ।
गृहे क्षयः ॥ १३३ ॥

गृहनिमित्तमात्मनः क्षय इत्यर्थः ॥ १३३ ॥

वाणिज्यमपराभोगः

पराया अन्यस्त्रियाः भोगः पराभोगस्तदभावः अपराभोगः ।

---

१. 'मात्रम' क. पाठः २. 'येषि या', ३. 'भू' घ. पाठः.

क्लेशच्छेदः

क्लेशानां छेदः सर्वक्लेशच्छेद इत्यर्थः ।

जलस्थितिः ।

सौकुमार्यमनुच्छेदः

क्वचिदपि कस्यचिदपि केनचिदप्यनुच्छेद इत्यर्थः ।

प्रावण्यं सकले जने ॥ १३४ ॥

गुरुदेवतयोर्भक्तिः

एकमेवेदं फलं, न द्वयम् ।

आराधनमतन्द्रिता ।

जडता सर्वरोगेषु मानित्वं वागनिष्ठुरा ॥ १३५ ॥

बन्धुस्नेहस्तदस्नेहस्तद्द्रोहस्तद्विहिंसनम् ।

सर्वत्र तच्छब्दो बन्धुपरामर्शी ।

शत्रूणामन्नभिद्रोहस्तत्कारुण्यं तथा वधः ॥ १३६ ॥

तद्वध इत्यर्थः । तच्छब्दोऽत्र सर्वत्र शत्रुपरामर्शी ॥ १३६ ॥

शत्रुबन्धुषु सस्नेहः

पुरुषो भवेदिति शेषः ।

तद्धिंसा तद्वधस्तथा ।

तन्माननं[1] मनोज्ञत्वं मानिवर्गेष्वनिष्ठुरम् ॥ १३७ ॥

अनिष्ठुरत्वमित्यर्थः ॥ १३७ ॥

स्पर्धा बन्धुषु वृद्धेषु वृद्धासङ्गः क्षयिष्णुता ।

जरठत्वं बाल्य एव पिशाचत्वं निजाकृतेः ॥ १३८ ॥

पिशाचसमानत्वमित्यर्थः ॥ १३८ ॥

पैङ्गल्यं केशबन्धस्य रोम्णामाचारवर्जनम् ।

रोम्णामित्यत्र धियामिति केचित् पठन्ति । तत्र धियां पैङ्गल्यं रजःप्रधानत्वमिति व्याख्येयम् ।

---

1. 'सं' घ. पाठः.

जर्जरत्वं त्वचश्चापि मांसलत्वं कटिद्वये ॥ १३९ ॥
जघने वीरकाठिन्यं

वीराणां यत् काठिन्यं गुणभूतं, तदत्र भवेदित्यर्थः। अत्र तु दोष इत्यवसेयम्।

लिङ्गमूर्ध्न्युष्णशालिता।

उष्णमुष्णगुणः तच्छालिता तद्युक्तत्वम्।

दुर्भगत्वमतो हेतोः काठिन्यं लक्षणे तथा ॥ १४० ॥

लक्षणं लिङ्गं, तत्र काठिन्यमित्यर्थः ॥ १४० ॥

लिङ्गमाला

लिङ्गगडुरित्यर्थः।

++++गुदमाला तथा परम्।

परमित्यव्ययम्। परेत्यर्थः। तत्रापि मालाशब्दो गडुवाचकः।

तीर्थोपमत्वं दौश्शील्यं माधुर्यमविवेकिता ॥ १४१ ॥
दृढत्वं परमौदार्यं कुलशेखरता तथा।
वीणारुचिर्लास्यरुचिर्वादश्रद्धा मतिभ्रमः ॥ १४२ ॥
नित्यप्रमोदः सौहार्दमदृष्टेष्वपि जन्तुषु।
नानायुद्धेषु सम्मोहः क्रियास्वपि विकत्थनम् ॥ १४३ ॥

नित्यं, (न) यदाकदाचिदित्यर्थः। क्रियासु क्रियमाणासु करतलोत्तालकरणेन परान् परिहसतीत्यर्थः ॥ १४३ ॥

महागजेषु संस्पर्धा

महागजेष्वपि संस्पर्धा करोतीत्यर्थः।

वीराणां चाभिकत्थनम् ॥ १४४ ॥
स्वस्वभूमिपरिक्लेदः सूपस्थस्य निषेवणम्।

मुखचुम्बनादि तच्चूषणादि च।

---

१. 'तं' ब. पाठः. २. 'स्थ' ख. पाठः.

**कम्बकण्ठीपरिष्वङ्गो वृद्धाया औपरिष्टकम् ॥ १४५ ॥**
**बालासम्भेद आशास्यसेवा वृद्धोपसेवनम् ।**
**अले सम्मूत्रणं साक्षाद् विष्ठायाश्च प्रगूहनम् ॥ १४६ ॥**
भोजनसमयादाविति शेषः ॥ १४६ ॥
**रेतसः कर्मविस्रंसः**
कर्ममध्ये रेतसो विस्रंसः सुन्दरीस्मरणादिना ।
**खरस्पर्शः स्त्रियाः क्रमात् ।**
स्त्रीविषये क्रमात् स खरस्पर्शो भवति । खरस्पर्शत्वं नाम तीक्ष्णेक्षिता ।
**लवणभोजित्वमानृण्यं शीतभोजित्वमन्तरा ॥ १४७ ॥**
अन्तरा विविक्ते स्थितिरित्यर्थः ॥ १४७ ॥
**मालाकरणमुच्चैष्ट्वं विद्याभिः क्लेशवर्धनम् ।**
क्लेशो वातः ॥
**धर्मसंस्था**
धर्मे विवर्धमाने संस्था मरणमित्यर्थः ॥
**क्वचित् साक्षाद्वैयङ्गवमधुस्पृहा ॥ १४८ ॥**
क्वचिद्वैयङ्गवस्पृहा क्वचित् साक्षान्मधुस्पृहा इति योज्यम् ॥ १४८ ॥
**कीर्तिः श्रीधनमोहश्च स्वल्पलाभः परेप्सुता ।**
परदर्शनेप्सुत्वमित्यर्थः ॥
**इन्दिरा स्वस्तिकोत्थानं**
स्वस्तिकोत्थानं कण्ठे पाणिद्वयमुद्बध्योत्थानम् ॥
**मरणं शीतसंहृतिः ॥ १४९ ॥**
**मेलावेष्टनमाभोगः**
सर्वविषयेषु मनस्कार इत्यर्थः ॥
**कर्पूरसुरभिद्युतिः ।**
कर्पूरसुरभिशोभा कर्पूरसुरभिद्युतिः ॥
**मलिष्ठत्वं मृदुस्पर्शः सिंहध्वस्ति + + + + ॥ १५० ॥**
मृगनिमित्तं मरणमित्यर्थः ॥ १५० ॥

---
१. 'वृ' क. पाठः. २. 'मा' घ. ङ. पाठः. ३. 'मदस्प' क. ख. पाठः

++++ तथा साक्षा(च्छ्व)ध्वस्तिमरणक्षमाः ।

शुना ध्वस्तिः । ध्वस्तिर्मरणं क्षमा च तथोक्ता ।

रतिर्दुःखमसन्तोषस्तत्र कामित्वविक्लवः ॥ १५१ ॥

कामित्वनिमित्तं यो विक्लवो भवति स इत्यर्थः ॥ १५१ ॥

सौहार्दं वृषयुक्तेषु

वृषो मदनोन्मादः ।

कार्कश्यमितरे जने ।

स्वल्पबुद्धिः पृथुद्रोहः कृष्णतालुः ++++ ॥ १५२ ॥

तालुस्थाने कृष्णः पिप्लुरित्यर्थः ॥ १५२ ॥

++++ शुभाकारः

आकारः शुभः स्यात् ।

काञ्चनत्याग एव च ।

काञ्चनस्य त्याग एव भवति । न क्वचिदार्जनमित्यर्थः ॥

पश्चात्कृतिः स्वधर्मस्य भयं सर्वत्र शङ्कितम् ॥ १५३ ॥

मत्तहस्तिभ्रुवोः स्पर्शः

यो मत्तो हस्ती तस्य भ्रुवोः स्पर्शः भीर्तिं विना ॥

कारुगन्धः++++ ।

कारोर्यो गन्धो व्यापारजनितः पूत्या समः । पूत्याभास इत्यर्थः । तद्गन्ध इत्यर्थः ॥

++++++++ स्वल्पलोमा बृहत्कटिः ॥ १५४ ॥

मांसरुचिः स्वन्नरुचिः सितपक्षः ++++ ।

सितः पक्षो यस्य स तथा शुक्लपक्षजन्मवानित्यर्थः ॥

शुभग्रहयुतस्थाने

पुरुषपरमेतत् ।

मित्राणां सङ्गमस्तथा ॥ १५५ ॥

मित्राणां तथा सङ्गमः । अत्र तथा तथेतीतिकर्तव्यताकाङ्क्षा लक्ष्यते । कालविशेषाकाङ्क्षा निरस्यते ॥ १५५ ॥

---

१. 'क', २. 'था तथा स' घ. पाठः.

दन्तभङ्गः कचच्छेदो लिङ्गच्छेदः कृमिद्रुहा ।

द्रुहा द्रोहः । कृमयः प्रसिद्धाः ॥

वसनं कृष्णवस्त्राणां प्रियं स्यान्मारपीडनम् ॥ १५६ ॥

कृष्णवस्त्राणां वसनं प्रियं स्यान्मारपीडनं च प्रियं स्यादित्यर्थः ॥ १५६ ॥

उत्तरीयान्तसंस्पर्शी

उत्तरीयान्तस्य यः संस्पर्शः तेन युक्तः । पुरुषपरमेतत् ।

प्रियवादी जने जने ।

अन्तरीयान्तसंस्पर्शी

अन्तरीयं वसनवस्त्रम् ।

निजायुःक्षपणक्षमः ॥ १५७ ॥

पुरुषस्तथा भवतीत्यर्थः ॥ १५७ ॥

मालाविक्रयकर्ता च सैरन्ध्री स्यात् तथाङ्गना ।

एकस्या एव रेखाया विषयभेदेन फलद्वयमेतत् ॥

माधुर्यं निःस्पृहे ++ विशालत्वं धियस्तथा ॥ १५८ ॥

कम्रता विशदत्वं च शरीरे नखसंस्थितौ ।

क्रमेणाधिकरणपूरणम् । शरीरे पूर्वं नखेषूत्तरमिति ॥

मान्यपूजा कथायोगः

कथायां जनेषु सत्यां तच्छ्रवणलिप्सया तत्र गच्छत्यसावित्यर्थः ।

केशोण्डुकपरिभ्रमः ॥ १५९ ॥

तर्जन्यादिना नयनपीडायां क्रियमाणायां नयनपक्ष्मसु यः केशपिण्डावभासः प्रसिद्धः स केशोण्डुकः । तत्परिभ्रमशीलो भवेत् तद्वान् पुरुष इत्यर्थः ॥ १५९ ॥

नीलाश्मनि स्थितिस्तत्र साक्षा(दुप?द् )भोगः

साक्षादनावरणेन अन्नाद्युपभोग इत्यर्थः ॥

तथामतिः ।

परमार्थबुद्धिरित्यर्थः ॥

---

१. 'क्षा । त' ख. । पाठः.

क्लिष्टभोजी तथान्नाद्यभोक्ता

अन्नं च तदाद्यं चेत्यन्नाद्यं तद्भोक्ता, तद्रुचिमानित्यर्थः ।

कृषिरुदारता ॥ १६० ॥

माहात्म्यं प्रणयः स्त्रीषु विषयः स्फुरितो भवेत् ।

विषयशब्देन उच्यते इष्टो विषयः प्रकाशितो भवेदित्यर्थः । सर्वैरिति शेषः ।

घूर्णनं नेत्रयोश्चापि सर्वदा सन्धिसङ्गतिः ॥ १६१ ॥

सन्धिसङ्गतिः, सन्धिव्यापारवत्त्वेत्यर्थः ॥ १६१ ॥

धावने मूत्रसंक्लेदः पटानां चापि कृन्तनम् ।
पुरीषलेहनं स्त्रीणां परिपाकः पतद्ग्रहः ॥ १६२ ॥

पततां परिग्रह इत्यर्थः ॥ १६२ ॥

मानुष्यं जन्म लभते पुनःस्मृतिरवाप्यते ।
कृष्णलोमा ताम्रनखः कृष्णगण्डः कचग्रही ॥ १६३ ॥

एतानि पुरुषपराणि फलवचनानि ॥ १६३ ॥

कृत्यत्यागः पृथुद्रोहः

ये पृथुशरीराः पुरुषास्तेषां द्रोहः ।

सर्वव्यापारसंयतिः ।

युद्धस्पृहा रजोवत्त्वं कालशङ्का कथाङ्गिता ॥ १६४ ॥
निन्दालुता मधुप्रेप्सा कपिलः सङ्गवान् नरः ।

यस्तत्सङ्गवान् नरः स कपिलः स्यादित्यर्थः ॥

वेत्रहस्तः शिशुद्रोही कृमिभस्मानुलेपनः ॥ १६५ ॥
सर्वदा घट्टितशिरा मूले स्याद्धस्तसम्पदः ।

हस्तसम्पदो यः मूले स्यात् । हस्तसम्पन्नाम हस्तः ॥

कर्णरोगः कफापीडा कृती जयपरायणः ॥ १६६ ॥

अत्र पुँल्लिङ्गान्ताः प्रथ(म? मा)वचनप्रकाराः पुरुषपरा अन्ये तु गुणपराः क्रियापराश्चेति योज्यम् ॥ १६६ ॥

१. 'हः' घ. पाठः. २. 'ण्ड' क. ख. ङ. पाठः.

**उत्तब्धरोमा**

उत्तब्धानि उज्जृम्भितानि रोमाणि यस्य स तथा । पुरुषपरम् ।

**साक्षाद्धीः कल्याणं**

नित्यदा कल्याणसिद्धिरित्यर्थः ।

**विषयस्पृहा ।**

विषयः स्रक्चन्दनादि ॥

**स्थलेष्वभिष्टवं प्राप्य मोदते च निरन्तरम् ॥ १६७ ॥**

**अस्पष्टवाक् पृथुद्रोहः**

पृथुशरीरैः पुरुषैरस्य द्रोहः कृतो भवेदिति शेषः ।

**परिमाणरतिस्तथा ।**

**हेलाभिलाषः शत्रूणां विजये**

अत्राप्यभिलाषशब्दो योज्यः ।

**देशधिक्कृतिः ॥ १६८ ॥**

देशविशेषधिक्कार इत्यर्थः ॥ १६८ ॥

**मान्यमायुष्मता दृष्टौ**

दर्शने सतीत्यर्थः ।

**क्वचिदेव विशालता ।**

**महिम्नो दर्शने[1] प्रेप्सा**

तद्वान् पुरुषो लक्ष्यते । तद्दर्शनप्रेप्सेत्यर्थः ।

**महत्त्वे दर्शनस्थितिः ॥ १६९ ॥**

यन्महत्त्वं नाम गुणस्तस्मिन् दर्शनस्थितिः । चक्षुषोः स्थितिरित्यर्थः । यत्र यानि फलानि क्रमेणानुक्रान्तानि दक्षिणपादतलमारभ्य तत्कनिष्ठिकाग्रपर्यन्तं स्थितानि तानि तथा योज्यानि । नन्वत्र फलकथने न्यूनत्वमस्ति । यावत्यो यावत्सङ्ख्याः संज्ञाः संज्ञाध्याये रेखाः कथितास्तावन्ति फलानि वक्तव्यानि । नच तावन्त्युक्तानि फलानि । अतः पूर्वापरविरोधः प्रतिज्ञाविरोधश्च । नैतद् युक्तम् । अविचार्य भणितत्वात् । कथं विचारः । एव-

---

१. 'न' इ. पाठः.

मिति भूमः। यत्र संज्ञयैव फललाभस्तासां रेखाणां फलानि न योज्यान्युक्तानि। ततोऽपि यदि न परिपूर्तिस्तर्हि यत्र संज्ञया फलानि प्रतीयन्ते तानि क्रमेणोक्तफलयोजने कृते यत्र फलासिद्धिः तत्र योजनीयानि। तत्र विशेषोऽपि। अनुक्तफलासु रेखासु फलानां योजनस्यावश्यकर्तव्यत्वं विशेषः। तस्मात् तत्र योजनीयानि। इति शिवम्॥ १६९॥

इति स्कान्दशारीरके प्रतिनियतावगतरेखा-
लक्षणं नाम चतुर्थोऽध्यायः॥

---

## अथ पञ्चमोऽध्यायः।

एवं तावत् पूर्वोक्तानां संज्ञानामुपजीवनेन साधारणान्यसाधारणानि च स्त्रीपुरुषाणां लक्षणानि प्रतिपादितानि प्रव्याख्यातानि च। इदानीं तदनुपजीवनेन संज्ञान्तरैः समं लक्षणानि[1] कथ्यन्ते। तत्र तावल्ललाटस्थानगता[2] ऊर्ध्वमुख्यः काश्चन रेखाः सन्ति। तासां क्रमेण लक्षणानि प्रदर्श्यन्ते संज्ञाभिः समं —

**सव्येतराक्ष्युपान्ते या ललाटस्थलगामिनी।**
**ऊर्ध्वमुख्यङ्गलावी स्यान्मस्तकस्यापि भेदनम्॥ १॥**

सूचयतीति शेषः। अयमर्थः — या सव्येतराक्ष्युपान्ते दक्षिणस्य चक्षुषः कटाक्षपर्यन्ते ललाटस्थलगामिनी ललाटस्थलमभिमुखीकृत्य गन्तुं प्रवृत्ता ललाटस्थलमियं गमिष्यतीति बुद्धिमुत्पादयन्ती रेखा, सा ऊर्ध्वमुखी नाम। फलं त्वङ्गलावीत्यनेनोच्यते। अङ्गलावी वीरः। अनया सम्पन्नः पुरुषः वीरः स्यादिति। फलान्तरं मस्तकस्यापि भेदनमिति। मस्तकशब्देन शिरःपुरोभाग उच्यते। तेन शिखाया अधो ललाटादुपरि यो भागस्तत्र नित्यव्यथा जायेतेत्युक्तं भवति॥ १॥

तदुपान्तगतां रेखां लक्षयति —

**या तत्रैव स्फुटाकारा शाखायुगलसङ्गता।**
**मिश्राख्या सापि सततं दुःखमालस्यमाचरेत्॥ २॥**

---

१. 'नि प्र' ख. पाठः. २. 'टग' क. पाठः.

अस्यार्थः—या तत्रैव तत्सन्निधावुपरि भ्रूसम्बन्धा स्फुटाकारा मूलस्फुटप्रदेशा शाखायुगलसङ्गता अङ्गुलद्वयं मत्वा पुनः शाखाद्वयोपलक्षिता भागद्वये, सा मिश्राख्या । सापि सततं दुःखमाचरेत् । आसूत्रयतीत्यर्थः । आलस्यमपि । सातत्यं तत्राप्यनुषज्यते । आलस्यं नामाङ्गक्लेशः न शरीरभेदः । नच दुःखमात्रं, व्यतिरेकेणापि दर्शनादिति ॥ २ ॥

**भ्रूमध्यात् फालसन्धौ या प्रतिष्ठां लभते गता ।**
**भ्रूमध्या सापि गदिता नीरोगत्वं प्रचारयेत् ॥ ३ ॥**

या पुनर्भ्रूमध्यादुद्गता फालसन्धौ प्रतिष्ठां लभते गमनपरिसमाप्तिं गच्छति, सा भ्रूमध्येति गदिता । नीरोगत्वं निर्गतरोगभावं, प्रचारयेत् प्रवर्तयतीत्यर्थः । स्वाश्रयं पुरुषं तथाविधं सूचयतीति यावत् । अत्र भ्रूमध्यशब्देन दक्षिणाया भ्रुवो मध्यप्रदेश उच्यते, न भ्रुवोर्मध्यं न वामभ्रूमध्यं च । सव्येतराक्षिशब्देन दक्षिणस्य चक्षुषस्तत्सम्बन्धाया भ्रुवश्च बुद्धिसान्निध्यादित्यलम् ॥ ३ ॥

तदुपान्तगतां रेखां लक्षयति—

**तत्रैव या स्फुटाकारा रेखा गच्छति युग्मयुक् ।**
**युग्माख्या सापि सततं नीरोगत्वं प्रचारयेत् ॥ ४ ॥**

या तत्रैव भ्रूमध्य एव, स्फुटाकारा स्फुटप्रकटमूल[1]प्रदेशा गच्छति । अत्र तस्मादेव भ्रूमध्यादित्यर्थो योज्यः । युग्मयुक्, शाखायुग्मयुगित्यर्थः, शाखाद्वयोपबृंहिता, भागद्वयोपलक्षितेति यावत्, सा युग्माख्या । युग्माख्येति नाम संशब्दिता । सततं नीरोगत्वं प्रचारयेत् । सुगमम् । अत्रैतद् द्रष्टव्यम् । दक्षिणभ्रूमध्यादुद्गच्छन्ती काचन रेखा क्वचित् पुरुषविशेषे [2]लक्ष्यते । स क इति चेद् योगिपक्षगत इति ब्रूमः । तेषामेव नीरोगत्वस्य सातत्येन दर्शना(त् । उ)पलक्ष(क)बीजं किमिति चेच्छृणु । यस्य सा विद्यते रेखा, स पुरुषो योगाभ्यासनिजस्वभावो मध्ये मध्ये तर्जन्या यया कयापि भङ्ग्या दक्षिणभ्रूमध्यं स्पृशति । ततः स्पर्शनेन लिङ्गेन दैवसिद्धेन तां रेखां लक्षयेत् विजानीयात् । नचान्यत्र क्वचित् पुरुषविशेषविषये इय-

1. 'ध्यदे'. ख. ङ. पाठः. 2. 'लदे' घ. पाठः. 3. 'व' क. घ. पाठः.

माशङ्कनीयापि। न च लक्षणं तत्र व्यभिचरति। अत एवोक्तं प्रचारयेदिति। किञ्च, नीरोगत्वस्य सातत्येन प्रचरणमन्यत्र न सम्भवति। अतोऽप्येवमवसेयम्। न च श्रुत्यादिवदेतद्वाक्यस्याप्रामाण्यमाशङ्कनीयं शास्त्रत्वादिति ॥ ४ ॥

**दक्षिणभ्रूमूलभूमौ नासासन्धौ प्रवर्तते।**
**प्रवर्तनाख्या भ्रूवल्लीमधिगम्यानुगा मता ॥ ५ ॥**

दक्षिणाया भ्रुवो मूलभूमौ नासायाः सन्धौ या प्रवर्तते, सा प्रवर्तनासंज्ञा रेखा। प्रवृत्तिं तस्या विशिनष्टि—भ्रूवल्लीमधिगम्य प्राप्य तामनुगच्छन्ती मता। फलं तस्या नामतः सूचितमिति न पृथगुक्तम्। तेनैतदुक्तं भवति—अनया सम्पन्नः पुरुषः स्वयं स्वामितया नियन्ता भवति। न कदाचिन्नियम्यतामृच्छतीति ॥ ५ ॥

स्वामिलक्षणमाह—

**तदुपान्ते प्रवर्तेत यदि काचित् स्फुटाकृतिः।**
**तया सम्प्राप्यते विश्वस्वामिता निर्मलाकृतिः ॥ ६ ॥**

अयमर्थः— तदुपान्ते तस्याः प्रवर्तनारेखाया उपान्ते सन्निधौ यदि काचिद् रेखा प्रवर्तेत तर्हि तया स्फुटाकार(त?)या उपप्रवर्तनाख्यया च, अर्थात् पुरुषेण विश्वस्वामिता, यद् यत् सम्भाव्यं तत्सर्वस्वामितेति यावत्, सम्प्राप्यते। निर्मलाकारविशेषा किन्तु सा भविष्यति। एतदुक्तं भवति—अनया सम्पन्नः पुरुषः विश्वस्वामितां लभते। विश्वं नाम च यद्यत् स्वस्वाम्य-(भूतयोग्यं? योग्यभूतं) वस्तु तत्सर्वस्वामितामवाप्नोति। न च सकलस्वामितां लभत इति युक्तं वक्तुम्, असम्भवात्। अतश्च सार्वभौमादेर्विश्वभूस्वामितिदेर्योग्यत्वात् तत्स्वामितामप्यसौ सूचयतीति न काचिदनुपपत्तिरिति। अत्र नामानुक्तावपि उपान्तशब्दबलात् कार्यबलाच्च उपप्रवर्तनेति नामोहनीयम्। कार्यं च, विश्वस्वामितायां सिद्धायां नियमनलक्षणमप्रत्यूहमुपलभ्येतेति ॥ ६ ॥

अधुना तत्सन्निधिवर्तिनीं रेखां लक्षयति—

**तत्सन्निधौ प्रवर्तेत (या? यदि वा)विस्फुटाकृतिः।**
**अस्फुटा सा प्रविज्ञेया माधुर्यं वचसीरयेत् ॥ ७ ॥**

१. 'वर्तिष्यति' क. पाठः.

यदि तत्सन्निधौ उपप्रवर्तनासन्निधौ यापि कापि रेखा प्रवर्तेत, तर्हि सा अस्फुटाकृतिरस्पष्टाकारा भवन्ती अस्फुटेति नाम लभते । फलं च वचसि माधुर्यं, वाङ्माधुर्यमिति यावत् । (ईरयेत्) करोति, आसूत्रयतीत्यर्थः ॥ ७ ॥

तत्र कश्चिन्निम्नो भागो विद्यते, तल्लक्षणमाह नाम च कथयति—

**निम्नस्तु भागो धीराख्यो यदि तत्र प्रकल्पयेत् ।**
**धैर्यमेव प्रवक्तारं कुर्यादपि नरं विभुम् ॥ ८ ॥**

एषा योजना—यदि सव्येतरभ्रूभागोपरि[1] निम्नो भागो लभ्येत, तर्हि तस्य धीर इति नाम, धैर्याख्यं गुणं तत्र सूचयति । किञ्च तं स्वाश्रयभूतं नरं प्रवक्तारं सूचयति । प्रवक्तृशब्देन व्याख्यातोच्यते शास्त्रादीनाम् । किञ्च, सर्वकार्यसमर्थं च तं सूचयति । अहो महत्येषेति भावः ॥ ८ ॥

तत्रोपरि रोमसन्धावपि कश्चन निम्नो भागो विद्यते कस्यचित् । तल्लक्षणमाह—

**निम्नश्च भागो यस्यास्ति कर्मठो नाम शस्यते ।**
**तेन धर्मेषु निरतः प्रकृष्टश्च गुणैर्मतः ॥ ९ ॥**

अयमर्थः—रोमसन्धौ फालशिरोरोम्णां सन्धौ यदि कश्चिन्निम्नो भागो भवेत्, तर्हि स प्रशस्यते पुरुषः । अपिच यस्य स कर्मठो नाम निम्नभागोऽस्ति फालदेशे, स धर्मेषु निरतः स्यात् । गुणैश्च प्रकृष्टो मतः उत्कृष्टः प्रसिद्धः स्यात् । के ते गुणाः के च ते धर्माः इति चेदुच्यते । तपः क्षान्तिस्तितिक्षा शमो दम उपरतिः सर्वकृपा श्रद्धा चेति (गुणाः) । धर्मास्तु देवताराधनादयः काम्या दृष्टफलाः, अदृष्टफलाश्च नित्याग्निहोत्रादयः ॥ ९ ॥

अत्रैव फले लक्षणान्तरं कथयति लक्ष्यान्तरप्रकाशनाय[2]—

**दीर्घाकारो निम्नभागः कर्मठाख्यां लभेत यः ।**
**सोऽपि पूर्वोक्तमादेश्यात् फलान्तरमुदीरयेत् ॥ १० ॥**

अयमाशयः— कर्मठाख्यस्य पूर्वोक्तस्याधस्ताद् दीर्घाकारो निम्नभागः, सोऽपि पूर्वोक्तं फलमीरयेत्, सूचयेदिति यावत् । यः कर्मठाख्यां लभते, असावपि कर्मठनामेत्यर्थः । आदेश्यात् फलान्तरं च । आदेश्यं

---

१. 'णतन्त्रं सू', २ 'न्तः प्र' घ. पाठः

हि फलं मोक्षलक्षणं, तस्मात् फलात् फलान्तरं भोगलक्षणं, तच्च सूचयतीति। अत्रायमाशयो द्रष्टव्यः—योऽयं कर्मठो नाम निम्नभागः, अस्मिन् वर्णविशेषोऽपि नियत एव फलसूचने[1] सहकारी भवति। कथं नियम इति चेद्[2], दूर्वानिभ इति चेत् को दोषः। अस्त्विति ब्रूमः। तथापि नियमान्तरमपेक्षितम्। तत्र च प्रयोजको हेतुः पीतमिश्रतैव दूर्वानिभतार्याः। तस्मादनवद्यम् ॥ १० ॥

किञ्चास्मिन्नेव फलद्वये रेखान्तरमपि प्रमाणम्। तल्लक्षणमाह नाम च तस्य कथयति—

**तत्रैव मिश्रा षड्भिर्या रेखा रेखाभिरञ्चिता।**
**तया संसूच्यते पूर्वमुक्तं फलकदम्बकम् ॥ ११ ॥**

या तत्रैव निम्नभागे समनन्तरोक्ते षड्भी रेखाभिर्मिश्रा रेखा, सा अञ्चिता[4] नाम। तयापि पूर्वोक्तं फलकदम्बकं संसूच्यते। किं तत् फलकदम्बकमिति चेद्, उच्यते। यद्यप्युक्तं, तथापि विभज्य प्रदर्शयामः। भोगो मोक्षः सर्वधर्मेषु निरतत्वं चेति ॥ ११ ॥

**अनाविला बिन्दुमती रेखा कृष्णफलप्रदा।**
**भ्रुवा मिता च विदुषां विज्ञेया कान्तिदायिनी ॥ १२ ॥**

एषा योजना—ललाटदेश एव या अनाविला रेखान्तैररस्पृष्टा रेखा, सा बिन्दुमतीसंज्ञोक्ता। सा कृष्णफलप्रदा च। कृष्णशब्देन कृष्णभक्तिर्लक्ष्यते। सा कथं ज्ञेयेति चेदत्रोत्तरं—विदुषां भ्रुवा मिता विज्ञेयेति सम्बन्धः, भ्रूपरिमाणेन मिता परिमिता सा विद्वद्भिर्विज्ञेया। यावती भ्रूस्तावती बिन्दुमती रेखा तदनुगामिनी च। अतस्तस्यां सूक्ष्मेक्षिकायां सत्यामनाविला रेखान्तैररस्पृष्टा सा परिस्फुरतीति। फलान्तरमप्याह—कान्तिदायिनी। कान्तिर्नाम प्रतिक्षणं प्रतिदिवसं च प्रतिनवत्वबुद्धिजननी क्वचिदाकारव्यक्तिमनोहरतापरपर्याया। अनया सम्पन्नः पुरुषस्तामपि लभत इत्युक्तं भवति ॥ १२ ॥

**अनाविला नाम रेखा क्वचिद् गच्छति वर्तनीम्।**
**तस्यापि ध्रुवसंसिद्धिः फलमिष्टमवाप्नुयात् ॥ १३ ॥**

१. 'चकेन स' घ. पाठः, २. 'त् को' ख., 'त् दूर्वानिभव इ' घ. पाठः, ३. 'यमिति' ख. ङ. पाठः, ४. 'यास्तावद', ५, ६. 'का', ७. 'मः। सभो' घ. पाठः.

या (पुनरनाविला नाम ?) रेखा वर्तनीं भ्रुवोर्मध्यादुद्गतां वर्तनीं मुक्तिमार्गं गच्छति स्पृशति, सा अनाविला नाम रेखा । तया सम्पन्नस्य ध्रुवसंसिद्धिः ध्रुवस्य फलस्य संसिद्धिः, नित्यस्य मोक्षाख्यस्य फलस्य सम्यक् सिद्धिरित्यर्थः । एवमनाविलारेखायाः फलनियम उक्तः । अनियममङ्गीकृत्याह— यदि सा कचिद् भ्रूमध्यादुद्गतां रेखामेकदेश एव स्पृशति, तर्हीष्टं फलमात्र(मा ? नवा)प्नुयात् प्राप्नोति पुरुष इत्यर्थः ॥ १३ ॥

एवं तावद् वामेतरभ्रूसन्निधिवर्तिनीनां रेखाणां निम्नभागानां च लक्षणानि प्रदर्शितानि । अधुना वामभ्रूसन्निधिवर्तिनीनां रेखाणां निम्नभागानां च लक्षणानि प्रदर्श्यन्ते क्रमेण । तत्र तावद् वामभ्रूसन्निधिवर्तिनीं रेखां नयनकटाक्षोपान्तगतां च लक्षयति—

वामभ्रूसन्निधिगतां मदुपान्तगतामपि।
आहुर्ज्योतिष्मतीं तस्याः फलं नामानुगं भवेत् ॥ १४ ॥

वामभ्रूसन्निविगता या, तत्रापि वामनयनकटाक्षसन्निधिगता च, तां[2] ज्योतिष्मतीमाहुः । तस्याः फलं नामानुगं भवेत् । नामशब्देन नाम्नोऽर्थ उच्यते । तस्मिन्नवगते सति तदनु पश्चादवगम्यत इति तन्नामानुगमुच्यते । एतदुक्तं भवति—ज्योतिष्मत्त्वं हि ज्योतिष्मतीशब्दे श्रुते सति अवगम्यत इति ॥ १४ ॥

तत्रैव वामभ्रूसन्निधौ कश्चन निम्नो भागोऽस्ति, तं लक्षयति—

वामभ्रूसन्निधौ कश्चिन्निम्नो भागः प्रवर्तते ।
मतिमान् नाम तस्यास्य[3] फलं बुद्धिविहिंसनम् ॥ १५ ॥

यो वामभ्रूसन्निधौ, अपाङ्गस्योपरिप्रदेश इति यावत्, कश्चिन्निम्नो भागः प्रवर्तते, वर्तत इत्यर्थः । नित्यं तिष्ठतीति यावत् । कश्चिच्छब्देन अनियताकारता लक्ष्यते । तस्य मतिमानिति नाम। फलं तु बुद्धिविहिंसनं बुद्धिभ्रंशः ।अस्येति, पुरुषस्येत्यर्थः । यदि कस्याश्चिद् योषितस्तत्सम्भवः प्रत्युत, तर्हि बुद्धिविवर्धनमित्यस्येत्यस्य फलम् ॥ १५ ॥

तस्योपरि प्रदेशिन्या स्फुटाकृत्याङ्गपूर्णया ।
फलमिष्टमवाप्नोति पुष्टिं च लभते नरः ॥ १६ ॥

---

१. 'पगतां' ख. पाठः. २. 'तीं प्राहुः' क. ख. ङ. पाठः. ३. 'स्यस्य' ख. पाठः.

तस्य निम्नभागस्योपरि, सन्निधावित्यर्थः। स्फुटाकृत्याङ्गपूर्णया। स्फुटया आकृत्या अङ्गे पूर्णा या, सा तथाविधा। सर्वत्र स्फुटाकृतिपूर्णाङ्गेति यावत्। आकृतिशब्दोऽवयवसंस्थानवचनः, अङ्गशब्दश्च[1] स्वरूपवचन इत्यपुनरुक्तिः। प्रदेशिनीति तस्या नाम। तत्फलं त्विष्टलाभः। इष्टशब्देन चोपेक्षाबुद्धिविषयोऽपि लक्ष्यते। इष्टमात्रं फलं प्राप्नोति। पुष्टिमपि नरो लभते। पुष्टिशब्दः सार्वत्रिकीं पुष्टिमाचष्टे। एतदुक्तं भवति—यद्यदिष्टशब्देनाभिधेयम्(अनिष्टशब्देनाभिधेयं च?) वस्तु, तत् सर्वं[2] लभते। प्रदेशिन्या रेखया। यदि शाखाद्वयं तस्या जायेत, यदि न शाखैकापि, तर्ह्युक्तैव पुष्टिः फलमिति ॥ १६ ॥

**शाखात्रययुता तस्याः सन्निधौ काचिदिष्यते ।**
**त्रयीति नाम गदितं बहु(योगः? लाभः) फलं भवेत् ॥ १७ ॥**

अस्यार्थः—तस्याः प्रदेशिन्याः सन्निधौ शाखात्रययुता काचिदिष्यते रेखा, तर्हि तस्या नाम त्रयीति। फलं बहुलाभः बहूनां बन्धूनां, यदि वा, येषां लाभ इष्टतमस्तेषां बहूनां, लाभ इत्युक्तं भवति ॥ १७ ॥

**तत्रैव सन्निधौ कापि रेखा शाखाद्वयान्विता ।**
**स्त्रीणां तु युग्मसूतिं सा कथयेत् सूतिभेदिनी ॥ १८ ॥**

तत्रैव ललाट एव वामभ्रुव उपरि, सन्निधौ उक्तलक्षणाया रेखायाः, काप्यनिर्देश्यवर्णविशेषा, शाखाद्वयान्विता, सूतिभेदिनी नाम। तया स्त्रीणां युग्मसूतिः फलं सूच्यते। युग्मशब्देन मिथुनमुच्यते। नामतश्च फलान्तरं, सूतिः सूयत इति सवनकर्म, तद्भेदश्च फलं भविष्यतीति। अत्रापि शाखाद्वयाभावे नोक्तफलनियम इत्यवगन्तव्यम् ॥ १८ ॥

**भ्रूमध्यादुद्गता या सा रेखा चातुर्यसङ्गता ।**
**फलं तस्याः कफद्रोहो मरणं च ततः फलम् ॥ १९ ॥**

या प्रकृतवामभ्रूमध्यादुद्गता, सा चातुर्यसङ्गता नाम रेखा। तया लोकः कफद्रोहमाप्नोति, ततो हेतोर्मरणं च फलम्, आप्नोतीत्यनुषज्यते। अयं भावः— उक्तरेखायाः कफरोगः फलमिति नास्ति विवादः, किन्तु

१. 'श्च रू', २. 'र्वं वस्तु ल' क. पाठः.

यदि कफरोगो द्वादशवत्सरादारभ्य तन्तुवदनुस्यूतो वर्तते तर्हि ततो हेतो-र्मरणं च फलं भविष्यतीति ॥ १९ ॥

**मानदा मीनसंस्थाना निम्नता तद्भ्रुवः स्फुरेत् ।**
**उपरि प्रचयावाप्तिः फलमिष्टं बुधात्मना ॥ २० ॥**

अयमर्थः—या खलु निम्नता भ्रुवः, प्रकृतवामभ्रुव उपरि मीनसंस्थाना मीनस्य संस्थानमिव संस्थानमवयवविनिवेशो यस्याः सा तथाविधा मानदा नाम । तस्याः फलं प्रचयावाप्तिः प्रचयस्य प्रसिद्धेरवाप्तिः, बुधात्मता च बुध आत्मा मनो यस्य । बुधशब्देन बोधनस्वभावता कथ्यते । तेन सर्व-वेदितृ नित्यं मनः परिस्फुरेदिति ॥ २० ॥

**नासान्तपर्यन्तगता[1] स्फुरद्धूसरसङ्गतिः ।**
**अभीष्टफलदानेच्छा व्याहन्येत ततः परम् ॥ २१ ॥**

अयमर्थः—या खलु नासान्ताख्ये पर्यन्ते ललाटप्रदेशे वर्तमाना[3], स्फुरद्धूसरसङ्गतिः स्फुरन्ती धूसरा सती गतिर्यस्याः । गतिशब्देनोर्ध्व[2]वर्तन-मभिधीयते । सतीति तस्याविच्छेदोऽभिधीयते, धूसरशब्देन दर्शनपारुष्यम् । स्फुरच्छब्देन नित्याभिव्यक्तिः । तस्या नामेच्छेति । फलमाह—अभीष्ट-फलदानेति । अभीष्टे फले विषयभूते दानक्रिया यस्याः सा तथा । तेन यद्यदभीष्टं तत्तदस्यापि फलम् । फलान्तरमाह—ततो व्याहन्येत परमिति । यदात्मन इतरद् वस्तुजातं तत् सर्वं व्याहन्येत विनष्टं भवति । विनाशो नाम रेखाया इच्छाश्रयभूतात् पुरुषादन्येषां न्यूनतैव ॥ २१ ॥

कृपा नाम रेखा,

**मध्याद् भ्रूमध्यतो युक्ता ललाटस्य समुद्गता ।**
**अधोमुखी कृपा प्रोक्ता कृपैव फलमिष्यते ॥ २२ ॥**

ललाटस्य मध्यादधोमुखी उद्गता भ्रूमध्योद्गतया ऊर्ध्वमुख्या युक्ता चेत्, तर्हि सा कृपाख्या प्रोक्ता । फलं च कृपैव । तद्वतां पुंसां महती सर्वलोकेषु कृपा जायेतेति भावः ॥ २२ ॥

**चतुश्शाखायुता प्रोक्ता विद्यानर्थक्यसङ्गता ।**
**फलान्तरं च तत्र स्यात् पादवृद्धिः क्रमाद् भवेत् ॥ २३ ॥**

---

१. 'णफ' ख. पाठः. २. 'र्ध्वं' ङ. पाठः. ३. 'र्तमान' ख. पाठः.

(यदि ?)ललाट एवं वामभ्रुव उपरि चतुश्शाखायुता[1] यदि रेखा भवेत्, तर्हि सा प्रोक्ता नाम । तस्याः फलं विद्यानर्थक्यसङ्गतेति । सा स्वत एव विद्यानर्थक्यसङ्गता स्थिता । विद्यानर्थक्यं नाम विद्याकार्यफलानाप्तिः । फलं च चतुर्वर्गव्युत्पत्तिः परमपुरुषार्थलाभश्च । तदुभयमनया सम्पन्नस्य पुरुषस्य जाड्यादिवशादप्रतिभानवशाच्च नोत्पद्यत इति । किञ्च, तत्र तद्विषये फलान्तरं स्यात् । एतद् विवृणोति — पादवृद्धिः । पादो नाम जङ्घाप्रदेशादधस्तात्प्रदेश(वि)शेषः । तस्य क्रमाद् वृद्धिः दिवसक्रमेण वृद्धिः । वृद्धिर्नाम यथाकालं यथावयश्च या पादविवृद्धिः स्थिता सर्वाङ्गवृद्धिसाधारण्येन, तामुल्लङ्घ्य व्यवस्थिता यथाकथञ्चित् प्रवृत्ता विवृद्धिरित्यवगन्तव्यम् ॥ २३ ॥

निम्नश्च भागो दीर्घाकारो वामभ्रुव उपर्यपि विद्यते केषाञ्चित् । तल्लक्षणं तत्फलं चाह नाम्ना सार्धं —

**जर्जराङ्गः स्फुटाकारो दीर्घः पीतस्तथा मतः ।**
**निम्नस्तु भागस्तेनापि फलमायुष्यमृच्छति ॥ २४ ॥**

अयमर्थः — या वामभ्रुव उपरि निम्नो भागो, दीर्घो, जर्जराङ्गः दर्शने सति परुषः, स स्फुटो नाम । स पीतवर्णश्च । तेन सम्पन्नः पुरुष आयुष्यमृच्छति । अयं भावो विभागेन द्रष्टव्यः — द्वौ निम्नभागौ विद्येते । यदि दीर्घता, तत्रैको जर्जराङ्गः स्फुटनामा, अपरस्तु पीतो मतनामा । तयोः फलभेदोऽपि विद्यते । तत्राद्यस्य आयुष्यं फलम्, आयुःसाधकं कर्मेत्यर्थः । परस्य फलकथनम् ऋच्छतीति, गच्छतीत्यर्थः । गमनमात्रमेवात्र पदार्थं विवक्षितं मन्यामहे । गमनं चाकारणाद् यदृच्छया देशविशेषानुद्देशेन यद् भवति तद् विवक्षितमिति ॥ २४ ॥

एवं तावद् भ्रूसन्निधिवर्तिनीनां ललाटगतानां रेखाणां निम्नभागानां च लक्षणानि प्रदर्शितानि । अधुना तत्रैवोन्नतभागानां लक्षणानि संज्ञाभिः समं प्रदर्श्यन्ते फलानि च—

**सव्येतरभ्रुवस्तूर्ध्वं प्रोन्नतिः प्रेक्ष्यते यदि ।**
**कटाक्षपर्यन्तगता धन्यया मृतिमाप्नुयात् ॥ २५ ॥**

तुशब्दः प्रकरणविशेषद्योतनार्थः । यदि दक्षिणभ्रुव उपरिदेशे कटाक्षपर्यन्तगता, प्रोन्नतिः प्रकृष्टा उन्नतिः आत्मना प्रेक्ष्यते, तर्हि सा धन्या

1. 'ता रेखा यदि भ' ङ. पाठः.

नाम कथ्यते । तया मृतिमाप्नुयात् पुरुषः ' विशेषवचनाभावेन स्त्रीपुरुष-साधारण्यं विवक्षितं गम्यते ॥ २५ ॥

**फालसन्धौ तु विज्ञेया कान्तिर्नामोन्नतिर्भ्रुवा ।**
**तया विश्वं वशे कुर्यात् स्त्री वा सा पुरुषो यथा ॥ २६ ॥**

अयमर्थः—दक्षिणभ्रूसन्निधौ फालसन्धौ, दक्षिणभ्रुव उपरि फाल-सन्धाविति यावत् । या उन्नतिर्गर्भादारभ्य शरीरविनाशपर्यन्तं स्थितत्वाद् भ्रुवा च, सा कान्तिर्नाम । तस्याः फलं विश्वं वशे कुर्यात् स्त्री, यथा पुरुषः । वाशब्दः स्त्रीसामान्यवाचिनः स्त्रीशब्दस्य सहायत्वेन स्थितः स्त्रीसामान्यस्यापि सर्ववशीकरणसामर्थ्यं निवारयति । तेन स्त्रीपुरुषयोरु-भयोरपि एषोन्नतिः सर्ववशीकरणं फलं सूचयेदित्युक्तं भवति ॥ २६ ॥

**तत्र मध्यगता या तु प्रोन्नतिर्ध्रुववर्तनी ।**
**तया विश्वस्य विद्वेषः सर्वस्यापि फलस्य वा ॥ २७ ॥**

भ्रूफालसन्ध्योर्मध्ये तु या प्रोन्नतिः प्रकृष्टा उन्नतिः, व्रीहिपरिमाणो-न्नतिरिति यावत् । ध्रुववर्तनी ध्रुवा वर्तनी पदवी यस्याः सा तथोक्ता । तया विश्वस्य लोकस्य विद्वेषः स्यात् । यदिवा सर्वस्यापि फलस्य विद्वेषः स्यात् । एतदुक्तं भवति — फालभ्रूसन्ध्योर्मध्ये यदि काचित् स्थिरपदवी प्रोन्नतिः स्यात्, तर्हि तया तद्वति पुरुषे सर्वस्यापि लोकस्य विद्वेषः स्यात् । अथवा, अस्य पुरुषस्य सर्वस्मिन्नपि फले विद्वेषः स्यात् । द्वेषशब्देनोपेक्षापि सङ्गृहीता । तस्या अपि द्वेषसमानत्वादत्र । तथाहि — सर्वलोकस्य कश्चित् पुरुषविशेषं प्रति द्वेषे जाते न किञ्चिदपि फलं तस्य सिध्यति । प्रत्युत विपरीतं तु फलमनिष्टं सिध्यति च । उपेक्षायां तु सत्यां न फलं किञ्चित् सिध्यतीत्येतावन्मात्रं न विपरीतफलसिद्धिरित्यस्ति विशेष इति चेदुपेक्षाया विपरीतफलहेतुत्वाभावेऽपीष्टफलनिरोधकत्वस्य द्वेषबुद्ध्या समा-नत्वादिति सर्वमनाकुलम् ॥ २७ ॥

**नासान्ते भ्रूनिकटे या प्रोन्नतिर्ध्रुववर्तनी ।**
**तया नीरोगताप्राप्तिर्विश्वं चापि वशे भवेत् ॥ २८ ॥**

यदि नासान्ते भ्रूसन्निधौ, नासाभ्रूसन्निधाविति यावत् । ध्रुववर्तनी प्रोन्नतिर्भवेत्, तर्हि तया नीरोगताप्राप्तिः, विश्वं चापि वशे भवेत् । अपि-

शब्दः सहार्थे । नीरोगताप्राप्त्या सह विश्वं वशे भवेत् । वश्यं वशे भवेदिति वा पाठः ॥ २८ ॥

**तत्रोपरि दृढा चेत् स्यादुन्नतिर्जर्जराकृतिः ।**
**तया त्वग्दुष्टतास्य स्यात् कुष्ठो वा भस्मकोऽथवा ॥२९॥**

यदि तत्रोपरि नासाभ्रूसन्निधेरुपरि दृढा उन्नतिः स्यात्, दृढत्वं नामाचञ्चलत्वं, नित्यत्वमिति यावत् । जर्जराकृतिः कल्माषवर्णेत्यर्थः । तया अस्य तद्वतः पुरुषस्य त्वग्दुष्टता स्यात् । त्वचि दुष्टता स्यादित्यर्थः । दुष्टता नाम येन केनचिद् दोषेण बाधकत्वमनारूढेन । अथवा कुष्ठः स्यात् । तेन त्वग्दोषविशेषरूपेण बाधकत्वमुपारूढेन बाधः स्यादित्युक्तं भवति । अथवा भस्मको व्याधिः स्यात् । भस्मको नामौदर्यो व्याधिः । तेन दुष्टता स्यात् । दुष्टता च बाध्यतात्र विवक्षिता ॥ २९ ॥

**नासोर्ध्वभागे यदि वा प्रोन्नतिर्दृढवर्तनी ।**
**ललाटादधरे भागे नामोक्तेषु यथातथम् ॥ ३० ॥**

नासोर्ध्वभागे नासाया ऊर्ध्वदेशे ललाटादधोदेशे दृढवर्तनी दृढभूमिः काचित् प्रोन्नतिः स्यात्, तर्हि पूर्वोक्तमेव फलं स्यादित्यध्याहारः । फलोक्तेरनुषङ्गो वा । उक्तेषु प्रोन्नत्याख्येषु लक्षणेषु नाम यथातथमूह्यमर्थानुसारेण स्थानानुसारेण च ॥ ३० ॥

एवं दक्षिणभ्रूसन्निधिवर्तिनीनां प्रोन्नतीनां नासोपरि वर्तिन्याश्च संज्ञाफलाभ्यां सह लक्षणानि प्रदर्शितानि । वामभ्रूसन्निधिवर्तिनीना सम्प्रत्याह —

**वामभ्रूसन्निधौ या तु तदपाङ्गान्तिकस्थिता ।**
**प्रोन्नतिर्दृढभूमिर्नाम्नायं सा शुभदा भवेत् ॥ ३१ ॥**

अयमर्थः — वामभ्रूसन्निधिवर्तिनी तदपाङ्गान्तिकस्थिता च या प्रोन्नतिर्नाम्ना दृढभूमिरिति प्रसिद्धा शास्त्रेषु, सा शुभदा भवेत् । यद्यच्छुभशब्दाभिधेयं, तत् सर्वमियं ददातीत्यर्थः ॥ ३१ ॥

तत्रैवोपरिस्थितां लक्षयति —

**या तत्रैवोपरिस्थानलाभमृच्छति पुत्रिकाम् ।**
**लम्भयत्यचिरादेव नाम्ना सा दात्रिका मता ॥ ३२ ॥**

या दक्षिणभ्रुव उपरि तदपाङ्गस्याप्यूर्ध्वदेशे स्थानलाभं स्थितिमृच्छति गच्छति, सा दात्रिका नाम । तया अचिरादेव पुत्रिकां लभते । तत्राचिरादित्यनेन विवाहानन्तरं संवत्सरत्रयपरिपूर्तेरर्वाक् पुत्रिकापत्यं जायेतेति भावः ॥ ३२ ॥

**भ्रूमध्यादुपरि प्रेष्ठा सन्निधौ जर्जराकृतिः ।**
**तया विश्वं वशे कुर्याद् रोगाविष्टो मृतिं लभेत् ॥ ३३ ॥**

अयमर्थः — यदि वामभ्रूमध्यादुपरि सन्निधौ काचिदुन्नतिः स्यात्, तर्हि सा प्रेष्ठा नाम । तया विश्वं वशे कुरुते । रोगाविष्टः प्रधानभूतैर्बहुलै रोगैः कुष्ठभगन्दरादिभिर्बलादन्तःप्रविष्टैराविष्टः ग्रस्तः, मृतिं लभेत् । अचिरादेव मृतिं लभेदिति पूर्वस्मादनुषङ्गः ॥ ३३ ॥

तदुपरि काचिदुन्नतिः पणप्रमाणा विद्यते केषाञ्चित्; तल्लक्षणमाह —

**फालसन्धौ तु भ्रूमध्यादुपरि प्रेष्ठतोऽप्युत ।**
**फलमायुरवाप्नोति प्रोन्नत्या गणिकाख्यया ॥ ३४ ॥**

तदुपरि पूर्वोक्ताया उपरिष्टात् फालसन्धौ तु यदि काचिदुन्नतिः प्रेष्ठगुणवत्त्वाच्च तस्या उपरिस्थितत्वं सम्भाव्यते । प्रेष्ठगुणो नाम स्थूलदीर्घत्वमत एकदेशस्योपरिस्थित्वाभावेऽप्येकदेशान्तरस्य उपरिस्थत्वं सम्भाव्यत एव । तया दीर्घमायुरवाप्नोति । गणिकेति तस्या नाम ॥ ३४ ॥

**आयामविस्तारयुता प्रोन्नतिर्दृढसङ्गतिः ।**
**मध्यभूमिमधिव्याप्य फलं सायुः प्रयच्छति ॥ ३५ ॥**

अयमर्थः—मध्यभूमिमधिव्याप्य मध्यस्थलं वामभ्रुव उपरि स्थित्वा[1] (पि ?धि)व्याप्य गत्वा आयामविस्ताराभ्यां युता या प्रोन्नतिः, सा दृढसङ्गतिर्नाम । तयाप्यायुरवाप्नोति दीर्घम् । अत्र विशेषः — स्पष्टदृष्टत्वे ललाटस्य सिद्धे[2]ऽप्युक्तलक्षणामुन्नतिं विना न स्पष्टदृष्टता विशेषतो भवेत् । स्पष्टदृष्टताया अभावे च दीर्घमायुर्वक्तव्यं प्रेक्षणवशात् प्रेक्षकेण । अतः स्पष्टदृष्टतालाभायोक्तलक्षणा प्रोन्नतिरपेक्षितव्या । अतस्तस्या आयुर्विशेषसूचकत्वमिति ॥ ३५ ॥

---

१. 'स्थत्वेऽधिव्या' ङ. पाठः. २. 'द्धे लक्षणोन्न' ङ. पाठः.

**पीतं रागः श्यामता कृष्णता च**
**प्रोद्यद्भानुः शुक्ल एको गुणश्च ।**
**श्रेयान् फाले यस्य तस्यास्य नित्यं**
**देवो भार्या सद्गुरुश्चापि वश्यः ॥ ३६ ॥**

अनेन पूर्वप्रकृतलक्षणजातं परिसमाप्य वर्णलक्षणं फलं चोच्यते। अयमर्थः—यस्य फाले पीतं, रागः, श्यामता श्यामः, कृष्णता कृष्णः, प्रोद्यद्भानुः प्रकर्षेण उद्यन्तः भानवः शोभा यस्य स तथा । सर्वसाधारणोऽयं विशेषणवाचकः शब्दः । शुक्लो गुणश्च, एकः अन्यैरसंस्पृष्टः । अन्ये च मिलिताः । तस्य देवो राजा भार्या च (सद्गुरुश्च) वश्यः वशे स्थितः। एतदुक्तं भवति — एते मिलिता वा गुणाः, एको वा शुक्लो गुणः सर्वेषामपेक्षितव्यस्तदोक्तं फलं च भवेत् । मिलितगुणयोगस्य योग इति नाम । एकशुक्लगुणयोगस्य एक इति नाम इत्येकशब्देन द्योतितम् ॥ ३६ ॥

**बिन्दुजालं क्वचिद् दृष्टं लक्ष्मीं सूचयति ध्रुवम् ।**
**तच्च जालमिति ख्यातं शास्त्रेषु गुणसूचकम् ॥ ३७ ॥**

यच्च पुनः क्वचित् केषाञ्चिल्ललाटस्थले बिन्दुजालं पीतवर्णं दृष्टं दृश्यते, तल्लक्ष्मीं सूचयति, भाविनीं विभूतिमस्य सूचयतीत्यर्थः । गुणस्यापि सूचकं तत् । गुणो नाम गर्भाधानशक्तिबीजं सन्ततिहेतुर्गुण उच्यते । तस्यापि सूचकम् । तस्य नाम (बिन्द्वि? जालमि)ति ॥ ३७ ॥

**हनौ मूलप्रदेशे या नासिकायाः स्थिता कृतिः ।**
**तया विश्वं वशे कुर्याद् विश्वाख्यां चापि तां विदुः**
**[॥ ३८ ॥**

या पुनर्हनौ हनुप्रदेशे; चक्षुषोऽधस्ताद्भागो हनुर्नाम, तत्र, नासिकाया मूलभूमिसन्निहिते[1] च कृतिः कर्षणं च, सा विश्वं वशे कुर्यात् । तस्य विश्ववशीकारशक्तिं सूचयेदित्यर्थः । विश्वेति च नाम तस्याः ॥ ३८ ॥

**भ्रूगता चापि निम्नाङ्गी रेखाणां तु त्रयी तु या ।**
**तया मातृमृतिर्ज्ञेया भ्रूरित्येव च नाम तत् ॥ ३९ ॥**

या पुनर्भ्रूस्थिता भ्रुवमनुगता निम्नाङ्गी च रेखाणां त्रयी, त्रयाणां समाहारस्त्रयी, तया मातृमृतिर्ज्ञेया सा मातृमृतिं सूचयेत् । तस्या भ्रूरित्येव

१. 'क्तिस्थं सू' क. पाठः.

नाम । तदित्यस्याव्ययस्य तस्या इत्यर्थः । चशब्दोऽवधारणार्थः । अयोग-व्यावृत्त्यर्थं चावधारणम् । तुशब्दद्वयं विशेषातिशयद्योतनार्थम् ॥ ३९ ॥

**तारामण्डलमध्यस्था परिवेषायते तु या ।**
**अध्रुवा सा कृतिः प्रोक्ता वत्सरान्मरणं स्फुरेत् ॥ ४० ॥**

स्फोरयेदित्यर्थः । आ वत्सराद् वत्सरपरिपूर्तेः प्राङ् मरणं स्फोरयेत् । या ताराख्यस्य मण्डलस्य परिवेषायते, अध्रुवा च अनित्या च कृतिः रेखा; सा अध्रुवा नाम । तस्याः फलं वत्सरपरिपूर्तेः प्राङ् मरणम् ॥ ४० ॥

**चक्षुर्गोलकयाबद्धा चन्द(नच्छिन्न? नाकार)सङ्करः ।**
**यस्तेन चानुबद्धेव सूचयेत् सा मृतिं तथा ॥ ४१ ॥**

या पुनश्चक्षुर्गोलकयानुबद्धा आबद्धा नाम रेखा, सा तथा मृतिं सूचयेत् । यथा पूर्वोक्ता तथेत्यर्थः । किञ्च, यश्चन्दनाकारसङ्करः । चन्दनाकारः चन्दनलवस्याकार इवाकारो यस्य स तथाविधः । वर्णसङ्करः शुक्लश्यामादि-वर्णसङ्करः सङ्करशब्दाभिधेयः । चन्दनलवश्चानुलिप्तस्तस्त उच्यते उपमान-त्वेन, नान्यः । तेन च यानुबद्धा सापि मृतिं सूचयेत् । अत्र वत्सरत्रयाद-र्वाङ् मरणनिश्चयः । वत्सरपरिपूर्तेः प्रागुक्तिः सन्दिग्धैव ॥ ४१ ॥

**याधरभ्रूगता सम्यक् स्फुरन्ती गदिना त्रयी ।**
**द्वयी वा फलमस्यास्तु लक्ष्मीवृद्धिस्तदन्यथा ॥ ४२ ॥**

या पुनरधरभ्रूगता रेखाणां त्रयी द्वयी वा, तयोर्गदितेति नाम । तयोः फलं—त्रय्या लक्ष्मीवृद्धिः, द्वय्यास्तत्फलमन्यथा अवृद्धिः प्रत्युत नाशश्च । तत्र केषाञ्चिद् द्वय्येव विद्यते, केषाञ्चित् त्रय्यपीति विभागाभिप्रायेणैव-मुक्तम् ॥ ४२ ॥

**हनावूर्ध्वमुखी या तु रेखा पीताकृतिः स्फुटा ।**
**तया विश्वविनाशी स्याद् विनष्टिरिति सा मता ॥ ४३ ॥**

या हनौ ऊर्ध्वमुखी पीताकृती रेखा, सा विनष्टिर्नाम । तया विश्वविनाशी स्यात् पुरुषः । विश्वविनाशेन सह वर्तमानः स्यात् । विश्वं

---

१. 'सम्बद्धा प' क. ख. घ पाठः.

नाम आत्मार्जितद्रव्यजातमुच्यते । स्यादेतत् । किमत्रार्जितस्यार्जितस्य विनाश उच्यते, अथवा आर्जनव्यापारानन्तरं तत्रापि क्रमेणाक्रमेण वा । न तावदाद्यः । आर्जितस्यार्जितस्य विनाश इत्युक्ते विरोधात् । एकस्यार्जितस्य विनाशहेतुर्यत्कर्म तस्मिन् सत्युत्तरार्जनप्रवृत्तेरसम्भवात् । प्रतिबन्धकसद्भावे कार्यस्यानुत्पत्तेः । नापि द्वितीयः । आर्जनसमसमय[1] एव यो विनाशाभावहेतुस्तस्योत्तरकालेऽपि सम्भवेन क्रमेणाक्रमेण वा विनाशस्यानुपपत्तेः इति । नैतत् सारम् । उभयथापि विनाशसम्भवात् । कर्मवैचित्र्यात् । किञ्च यावत् प्रकारजातं सम्भाव्यते आर्जने विनाशे च तावत् प्रकारजातं तद्धेतुकर्मण्यपि विद्यते वैचित्र्यात् । तच्च सुरनरतिर्यगादिसुखदुःखवैचित्र्यदर्शनात् सुखसंवेद्यमिति नास्ति दोषः ॥ ४३ ॥

**हनौ स्यात् पिटको यर्हि नित्यसिद्धतया तया ।**
**दीर्घरोगस्तु कमलानित्यपात्रतया तथा ॥ ४४ ॥**
**वैरिभङ्गो नित्यभोगी न स्यादपि चिराद्यम् ।**
**योषितां रसवैरूप्या दिति बह्वी प्रमा हनौ ॥ ४५ ॥**

हनुप्रदेशे नित्यसिद्धतया नित्यतया यर्हि यदि कश्चित् पिटको भवति गड्डुः भवेत्, तदा दीर्घरोगी स्यात् । यदि यथाकथञ्चित् कश्चिद् रोगो भवेत् तदा स दीर्घकालं नोच्छिद्येत । किञ्च (कियत्) तद्दीर्घत्वमिति चेद्, यावत् फलान्तरसिद्धिस्तावदिति ब्रूमः । अनेन फलान्तरसिद्धिपर्यन्तत्वं दीर्घत्वमित्यर्थ उक्तो भवति । किञ्च कमलानित्यपात्रता तथा स्यात् । कमलाया नित्यपात्रं, पात्रनित्यत्वं नाम फलान्तरसिद्धिपर्यन्तत्वमत्रापि द्रष्टव्यम् । फलान्तरं च योषिद्भोगकृत्त्वम् । तत्रापि नित्यत्वं द्रष्टव्यम् । कमलानित्यपात्रतयेति तृतीया सहार्थे । नित्यसिद्धतयेति प्रकृत्या तृतीया । अयं वैरिभङ्गश्च चिरान्न स्यात् । अस्य तु न भावरूपफलत्वम् । तेन कमलापात्रत्वस्यानन्तरं योषिद्भोगकृत्त्वं फलत्वेनोक्तम् । वैरिभङ्गश्च वैरिणां भङ्गः, न वैरिभिरस्य भङ्गः । एतदुक्तं भवति—हनुगतः पिटको यावज्जन्मसिद्धः

१. 'नसमय' घ. पाठः.

कस्याचिद् भवेच्चेत्, तर्हि स नित्यरोगी स्यात्। रोगो नित्यश्चेत् श्रीमान् भवेत्। तत्र विशेषः— स्वयं प्रवृत्तिं विना दैववशादेव श्रीमत्ता, वैरिद्रोहश्च सर्वदा वर्तेत। श्रीमत्ताया अपि यद्यनित्यता. नित्यं श्रीभोगकृत् स्यात्। तथा च क्रमेणैतत् सर्वं फलजातं स्यात्। तस्या(स्ति?स्य) सर्वस्य फलजातस्य पिटकदर्शने हृदयपरिस्फूर्तेर्बह्वी बहुतरा फलप्रमा स्यादिति ॥ ४४, ४५॥

**कृष्णिमा यदि तत्र स्याद् विच्छेदः सन्ततेर्भवेत्।**
**श्रियो वा विच्युतिः साक्षात् स्वसुतान्तिकविक्षयः ॥ ४६॥**

अयमर्थः— तत्र हनौ यदि कृष्णिमा स्यात्; कृष्णवर्णः स्यादित्यर्थः. तर्हि सन्ततेर्विच्छेदो भवेत्। किञ्च, श्रियो विच्युतिश्च। श्रियः लक्ष्म्याः सकाशादस्य विच्युतिः विभ्रंशः। तत्कटाक्षपाताभावेन विभूतिविभङ्गः स्यादित्यर्थः। किञ्च, स्वसुतान्तिके विक्षयश्च। आत्मनः सुताया अन्तिक इति व्याख्येयं; न सुतस्येति ॥ ४६ ॥

**तदधस्तात् पुनर्यस्य प्रोन्नतिर्बहुवर्तनी।**
**महिला नाम तद्धेतोर्मृतिमाप्नोति विस्तृताम् ॥ ४७॥**

यस्य पुनस्तदधस्तात् तस्य हनुप्रदेशस्य अधस्तादधःप्रदेश इत्यर्थः, बहुवर्तनी बहुमार्गा प्रोन्नतिर्दृश्यते, तस्य विस्तृता पुत्रपौत्रभार्यादिमरणसहिता, मृतिः स्यात्। एतदुक्तं भवति — हनुप्रदेशादधस्ताद् या महिला नाम प्रोन्नतिर्दृश्यते कुहचित् पुण्यवति बहुपापे पुरुषे स्त्रीशरीरे वा तस्य प्रथमं पुण्यफलात् पुत्रपौत्रभार्यादिलक्षणादनुभूतादनुभूयमानाद्वाव्यवधानेन तत्सर्वविनाशः प्रोन्मिषतीति ॥ ४७॥

**गडुः कपोलसंलग्ना धवलाकृतिरञ्जिता।**
**मृतिमेव स्वपुत्राणां स्वधनस्यापि सूत्रयेत् ॥ ४८ ॥**

अस्यार्थः—या कपोलतलयोर्गडुः पिटकापरपर्याया येषां केषाञ्चिदवमतमतीनां स्त्रीपुरुषाणां दृश्यते सा मृतिं स्वपुत्राणां सूचयेत्, स्वधनस्यापि। अत्र मृतिशब्दो यद्यपि न धननाशे साक्षाद् वर्तते, तथापि प्राणिनाशे यो नाशो विशेषणतयानुवर्ततेऽस्य सर्वत्रानुगमोऽस्त्येवेति न किञ्चित्। अत्र धवलाकारत्वेन विशेषणेनान्यस्मात् कृष्णधाम्नः पिटकाविशेषो

जायेतेति। ततश्च श्वसूकरादीनां ये तालुमूले पिटकाः कृष्णधामानः सम्भाव्यन्ते, दृश्यन्ते च सृक्कभागे ततोऽपि व्यावृत्तिसिद्धिः। अञ्जितेति कपोलतलेन स्पष्टमस्पष्टं वा यथा संसक्ता भवति तथा दृश्यमानेत्यर्थः॥ ४८ ।

अत्रैव कश्चिद् गडुः, कल्माषवर्णः केषाञ्चिदस्ति । तल्लक्षणं फलं च नाम्ना सह कथयति —

गडुः कल्माषवर्णश्चेन्नीरोमा स्यात् प्रशस्यते ।
स्त्रीणां विरागहेतुश्च सुवृत्त्युत्पादकश्च सः ॥ ४९ ॥

अत्र वृत्त्युत्पादक इति पाठे सुवृत्त्युत्पादकः स इति पठितव्यम् । यदि कपोलतल एव कल्माषवर्णः गडुः स्यात् स नीरोमा। पूर्वोक्तायास्तु गडोरतो विशेषः। नाम च कल्माषवर्ण इति । फलं प्रशस्यत इति। फलान्तरं — स्त्रीणां विरागहेतुरिति। हेतुशब्देन कर्मतोक्ता। कर्मणो हि हेतुत्वं प्रसिद्धम् । अत एव हि कारकत्वम्। सुवृत्त्युत्पादक इति। सुवृत्तिशब्देन सुवृत्तिहेतुः पुत्र उच्यते । सुवृत्तिरिति शोभना वृत्तिः समाचार इति यावत्। तेन हि धर्माख्येन पुत्र उत्पद्यते। अतः सुवृत्तिशब्देन पुत्र उच्यते । त(सु[1]वृ)त्पादक इति फलद्वयम् । आद्यं तु फलं व्यापि, फलद्वयं तु क्वचित् स्थिरमस्थिरं च दृश्यते ॥४९॥

अत्रैव रेखाः काश्चन दृश्यन्ते, तासां लक्षणं नाम्ना फलं च कथयति। तत्र काचिन्नासाकपोलयोरुभयत्र व्याप्य तिष्ठन्ती दृश्यते, तल्लक्षणनामफलानि कथयति —

नासाकपोलयोर्या तु संस्कृतिर्दृश्यते नृणाम् ।
रेखा तया जगत् सर्वं शत्रुभागे प्रतिष्ठति ॥ ५० ॥

अस्यार्थः — या नासाकपोलयोरुभयत्र, ते सम्बध्येत्यर्थः, कपोलनासे व्याप्य या रेखा[2] दृश्यते केषाञ्चित्, तेषां संस्कृतिसंज्ञया तया सर्वमेव जगच्छत्रुभागे भवेत्। एतदुक्तं भवति— क्वचित् कपोलनासे व्याप्य तिष्ठन्ती संस्कृतिर्नाम रेखा सम्भवति। तया तेषां सर्वमपि जगच्छत्रुत्वे सूच्येत। तत्र कपोलतलयोर्नासापुटबहिर्भागे च रक्तबिन्द्वाकाराणि चिह्नानि निर्हेतुकानि सहेतुकानि वा स्युः । तत्रैषा रेखा उक्तफलायोक्तलक्षणा समुल्लसतीति ॥ ५० ॥

अत्रैव नयनोन्मुखी काचन रेखा समुल्लसति, तां लक्षयति संज्ञानामफलकथनपूर्वकं—

---

१. 'वृं अ' ड. पाठः. २. 'ये' क. ड. पाठः.

**या चक्षुरुन्मुखी विद्यां कपोलस्था प्रयच्छति ।**
**ललिता विदिता साक्षाच्छ्रियमायुश्च वर्धयेत् ॥ ५१ ॥**

या पुनः कपोलस्था रेखा, सा विद्यां प्रयच्छति । कीदृशीति । चक्षुरुन्मुखी चक्षुः प्रति शिर उद्धृत्य गच्छन्तीव भासमाना । नाम्ना च ललितेति विदिता विज्ञाता । किञ्च, श्रियमायुश्च वर्धयेत् इयमायुःश्रियो-र्वृद्धिमपि सूचयति, न केवलं विद्यां प्रयच्छति । एतदुक्तं भवति— एषा रेखा पूर्वमविद्यमानां विद्यां प्रयच्छति भाविनीं सूचयति, आयुः श्रियं च पूर्वसिद्धे अपि वर्धयति, तयोर्भाविवर्धनं सूचयतीति फलनामलक्षणकथनं सिद्धम् ॥ ५१ ॥

काचित् पुनर्नासापुटादारभ्य नयनान्तं गच्छति । तां संज्ञाफलकथनपूर्वकं लक्षयति –

**या पुनर्नासिकारन्ध्रद्वारादारभ्य नेत्रयोः ।**
**अन्तं गच्छति कल्याणीं तां विदुस्तत्फलामपि ॥ ५२ ॥**

या पुनर्नासिकारन्ध्रद्वारादारभ्य नेत्रयोरन्यतरस्यान्तं गच्छति, नासिकारन्ध्रद्वारशब्देन नासिकारन्ध्रसन्निधिरुच्यते, तस्मादेकस्मादारभ्यैकं नयनान्तमुभयस्मादुभयं वा गच्छति, तां कल्याणीं विदुः । तत्फलां च तत् कल्याणं फलं यस्याः सा तथोक्ता, तादृशीं च विदुः । अयं भावः— यदि नासिकापुटयोरेकस्मादारभ्यैकं नयनान्तं काचिद् रेखा गच्छति, उभयस्मादुभयं वा रेखाद्वयं, तर्हि तयो रेखयोस्तस्याश्च रेखायाः कल्याणीति नाम । तद्वतः पुरुषस्य श्रिया वा कल्याणमेव च फलमिति ॥ ५२ ॥

या पुनस्तस्मादेव नासाद्वाराद्वारादारभ्य कर्णमूलद्वयं गच्छति, तत्फलं लक्षणं च कथयति संज्ञां च –

**या नासामूलमारभ्य कर्णमूलं तु गच्छति ।**
**कर्णिकेति प्रसिद्धा सा श्रियमायुश्च सूचयेत् ॥ ५३ ॥**

या पुनर्नासामूलं कर्णं च व्याप्याविच्छेदेन तिष्ठति सा कर्णिकेति शास्त्रप्रसिद्धा । सा पूर्वं श्रियं सूचयेत् पश्चादायुश्च । इदं तात्पर्यं— कर्णिकाख्या रेखा आयुःपूर्वभागभाविनीं श्रियं सूचयेत्, उत्तरकालभावि

---

१. 'द्ध'. २. 'ति । आयुः' ख. पाठः. ३. 'कास' ङ. पाठः. ४. 'द्वारादा' क. घ. पाठः.

चायुः । तदा न श्रीर्लेशतोऽप्यनुवर्तते । अनेन आयुः श्रीश्चेति — फलद्वयमेककालमिति कृत्वा केषाञ्चित् व्यभिचारकथनमनवकाशम् ॥ ५३ ॥

या पुनश्चिबुकस्थलाद् रभ्यानेत्रं वर्तते रेखा, तां पूर्वप्रकारेण लक्षयति —

**या पुनश्चिबुकं नेत्रसन्धिं चापि व्यवस्थिता ।**
**व्याप्यैव सा व्याप्यवृत्तिः प्रसिद्धिः फलमीर्यते ॥ ५४ ॥**

अस्यार्थः — या चिबुकनेत्रयोरन्तरा सन्धिद्वयं च व्याप्य तिष्ठति व्याप्यैव च तिष्ठति, सा व्याप्यवृत्तिर्नाम । सा स्वधर्मिभूतस्य पुरुषस्य प्रसिद्धिं सूचयेत् । फलान्तरमाह — ईर्यत इति । ईर्यते प्रेर्यत इत्यर्थः । इदमत्र तात्पर्यम् — अनया सम्पन्नस्य पुरुषस्य प्रसिद्धिरतीव स्यात् । न केवलं सैव, किन्तु तदैव कस्यचित् प्रेष्यता च स्यात् । न च प्रेष्यता गुरुप्रेष्यता-येनादोषः स्यात्, अपितु राजादिप्रेष्यतैव । यदि वा निकृष्टप्रेष्यता । तेन प्रशस्तिमूलबहुगुणवत्त्वं, प्रेष्यतामूलबहुदोषवत्त्वं चोभयमेकदैव स्यादिति ॥ ५४ ॥

**शिप्रगताः परुषाश्चेद् रेखाः सर्वास्तथा मृतिः स्यात् तु ।**
**लवणादिलेह्यनिष्ठाः क्रूराः स्वल्पाकृतिप्रधानास्ते ॥ ५५ ॥**

याः पुनः शिप्रगताः, शिप्रं नाम नासाधोभागः[1] तत्रस्थाः, परुषाः स्पर्शे सति, रेखाः स्युः सर्वाः । यद्येवं तथा सति अचिरान्मृतिः स्यात् पुरुषस्य । तुरवधारणे । एवं स्त्रीणाम् । पुरुषाणां चेत् फलविशेषमाह — लवणादिलेह्यनिष्ठा इत्यादिना । लवणग्रहणेनाम्लतत्परता लक्ष्यते । तदनेन यद्यम्लं लेह्यवस्तु मस्त्वादि तन्निष्ठा इत्युक्तं भवति । किञ्च क्रूराश्च ते भवन्ति । किञ्च स्वल्पाकृतिप्रधानाश्च भवन्ति । स्वल्पैव सुतरामल्पैव आकृतिस्तेषां, सैव प्रधानं तेषां नान्या विद्याद्या भाववृत्तयः । तेन स्वल्पाकृतिप्रधाना इत्युक्तम् । स्वल्पा आकृतिः प्रधानं येषामिति विग्रहः । इदमत्राकूतं — स्त्रीणां पुरुषाणां च शिप्रस्था रेखाः क्वचित् क्वचिद् दृश्यन्ते । ताश्च परुषाः[2] श्लक्ष्णाश्च परुषश्लक्ष्णाश्च । तत्र परुषाश्चेत्, तत्रापि स्त्रीणां चेदाद्यं फलम् । पुरुषाणां चेदवशिष्टं फलजातमिति । तासां च रेखाणां परुषा इति नामेति द्रष्टव्यं परुषशब्दस्य विशेषणसमर्पकत्वेऽपि[3] ॥ ५५ ॥

---

१. 'गस्थाः, त' ख. पाठः. २. 'षश्लक्ष्णाश्च । तत्र', ३. 'षस' ख. पाठः.

इदानीं श्लक्ष्णानां रेखाणां तद्गतानामपि लक्षणमाह —

**श्लक्ष्णाश्चेद् रमणीयाख्याः कामिन्यः स्युः स्त्रियस्तथा ।**
**पुरुषाश्चेद् युतास्ताभिः कामिनः स्युर्न संशयः ॥ ५६ ॥**

श्लक्ष्णाश्चेत् ता रेखाः, तत्रापि स्त्रीणां चेत्, ताः कामिन्यः स्युः[1], रमणीयाख्याभिस्ताभी रेखाभिः । कामिन्य इत्यनेन कामभोगरत्या विशिष्टतादिरुच्यते कामिन इत्यनेनापि । उभयग्रहणेन जायापतित्वयोगे स्त्रीपुरुषयोरुभयोरपि एतल्लक्षणवत्त्वे परस्परास्थाबन्धः सूचितः । पुरुषाश्चेत् ताभिर्युताः कामिनः स्युः । अस्य लक्षणस्योभयत्रैकत्वाय पुरुषगतत्वेऽपि रमणीयाख्यत्वं द्रष्टव्यं रेखाणाम् । न संशय इत्यनेन तद् द्रढयति ॥ ५६ ॥

**तत्र नासामुखा यास्तु द्वित्रा रेखाः समुद्गताः ।**
**तास्तु धन्या इति प्रोक्ताः फलमासां धनोद्भवः ॥ ५७ ॥**

याः पुनर्नासामुखाः, नासायां मुखानि यासां तास्तथोक्ताः । द्वित्राश्च द्वित्रिसङ्ख्या रेखाः समुद्गतास्ता धन्या इति प्रोक्ताः । धन्या इति संज्ञां प्रत्येकं विधीयमानां सर्वजनहृदयेषु स्मारयन्त्यो धनलाभसमुद्भवहेतुभूतास्तन्मात्रहेतुभूताश्चेत्यर्थः ॥ ५७ ॥

किञ्च, अत्र वर्णविशेषसंस्पृष्टाः समुन्नतभागाश्च विद्यन्ते । तत्फलादि कथयति —

**मध्ये शिप्रस्य चेत् साक्षादुन्नतिर्धवलाकृतिः ।**
**विशिष्टमर्थजातं सा प्रयच्छति शुभे जने ॥ ५८ ॥**

यदि शिप्रदेशे मध्यस्थाने धवलाकृतिः काचित् समुन्नतिर्भवेत्[2], तत्र धवलाकृतिरिति नाम च विशेषणं[3] च । फलमर्थसमुद्भवः ॥ ५८ ॥

तत्रैव भागयोर्यदि समुन्नतौ भागौ सम्भवतस्तयोर्लक्षणादि दर्शयति —

**पार्श्वयोर्यदि तौ भागौ तादृशौ मधुरस्फुटौ ।**
**स्यातां चेद् दीर्घनिद्रा स्यान्मूत्रितं च भवेन्निशि ॥ ५९ ॥**

तत्रैव शिप्रदेशे या समुन्नतिर्मध्यगतोक्ता, तत्पार्श्वयोर्यदि चेत् तौ भागौ तादृशौ समुन्नतौ सम्भवतस्तर्हि तौ नामतो मधुरस्फुटौ । मधुरो दक्षिणभागः । स्फुटो वामभागः । तयोर्दक्षिणस्य दीर्घनिद्रा फलम् । दीर्घा

1. 'विष्ट' ख. पाठः. 2. 'तिः संभवे' क. ख. घ. पाठः. 3. 'षं च' ख. ङ. पाठः.

निद्रा दीर्घनिद्रा, न मृतिः । निद्राया दीर्घत्वं नाम ताडनेऽपि अप्रबोध-कारित्वम् । वामस्य निशि मूत्रितं फलम् । निशि स्वापे मूत्रितम् । अज्ञात्वा निजकर्तव्यं यदृच्छयैव मूत्रणादि भवतीति ॥ ५९ ॥

**उत्तरोष्ठगता या तु समुन्नतिरुदाहृता ।**
**तस्याः संज्ञा मलिष्ठेति फलं वदनगन्धिता ॥ ६० ॥**

अस्यार्थः — उत्तरोष्ठगता काचित् समुन्नतिः स्याच्चेत्, या उदाहृता ऊर्ध्वमाहृतेव भाति, वदनकुहरादुदानीतेव भातीत्यर्थः, तस्याः संज्ञा मलिष्ठेति सुगमम् । फलमाह — वदनगन्धितेति । वदनस्य गन्धिता गन्धयुक्तता, दुर्गन्धितेति यावत् ॥ ६० ॥

**अधरोष्ठगता या तु समुन्नतिरुदीक्ष्यते ।**
**प्रेष्ठेति नाम तस्यास्तु फलं कृमिविहिंसनम् ॥ ६१ ॥**

या पुनरधरोष्ठगता समुन्नतिः उदीक्ष्यते[1] । अनेनैतदुक्तम् — ओष्ठ-स्पृष्टा तत्तादात्म्यं प्रायेण भजमानापि समुन्नतिर्निरीक्षितव्येति । तस्याः प्रेष्ठेति नाम । फलं कृमिविहिंसनं — कृमिभिः प्राणिभिर्विहिंसनं विगूढतया हिंसनम् । एतदुक्तं भवति — यस्य प्रेष्ठा नाम समुन्नतिस्तं तां वा तत्र तत्र गूढतया स्थित्वा कृमयो विहिंसति । कृमिशब्देन च सर्पव्यतिरिक्त-स्तादृशः सर्वः प्राणिसमूहोऽभिधेयः ॥ ६१ ॥

यदि कपोलचिबुकसन्निधौ समुन्नतिस्तां लक्षयति —

**चिबुकस्य कपोलस्य सन्धिं काचिद् ध्रुवाकृतिः ।**
**समुन्नतिरलंकुर्यात् फलमायुःक्षयस्तदा ॥ ६२ ॥**

यदि कपोलचिबुकसन्निधौ काचित् समुन्नतिः सन्धिबन्धनाकारेव समुद्गता स्यात्, तर्हि सा ध्रुवाकृतिर्नाम । तस्याः फलं तदा आयुःक्षयः । एतदुक्तं भवति — ध्रुवाकृतिः समुन्नतिर्यस्य खलु भवति, अनित्यत्वादियं यदा च भवति तदा असन्दिग्धैवास्य मृतिर्वाच्येति भागद्वयेऽपि समानेय-मिति द्रष्टव्यम् ॥ ६२ ॥

**भाविनी यस्य संसिद्धिः स्फुरन्ती तस्य कर्णयोः ।**
**मूलतः प्रादुरुद्भूता रेखा चाव्यवधानतः ॥ ६३ ॥**

---

१. 'तिः समुद्वीक्ष्यते सम्यगुद्वीक्ष्यते । अ' क. ख. ङ. पाठः.

एषोऽर्थः —यस्य भाविनी संसिद्धिः सम्यग्भूतस्य फलस्य सिद्धिः मुक्तिरिति यावत्, तस्य कर्णयोर्मूलतः समुद्गता स्फुरन्ती सम्भवेत् । अत्रापि समुन्नतिरिति द्रष्टव्यम् । किञ्च लक्षणान्तरमप्यस्तीत्याह —रेखा चाव्यवधानत इति । अस्याः समुन्नतेरव्यवधानतो रेखा च तस्य सम्भविष्यति, यस्य भाविनी संसिद्धिरित्यर्थः । एतदुक्तं भवति —फलानि हि दृष्टस्वर्गापवर्गलक्षणानि विविधानि । तेषु दृष्टस्य न सम्यक्त्वं तावद् दर्शनेनैवानित्यताया दृढत्वात् । दर्शनं हि करणजन्यं नित्यत्वं व्याप्नोति स्वस्य विषयस्य च । अतो दर्शनाद् दृष्टफलस्य सम्यक्त्वं नास्तीत्यवगम्यते । स्वर्गस्यापि न सम्यक्त्वं, जन्यत्वेनानित्यत्वात् उपचयापचयादिधर्मवत्त्वेन च । यद्यपि स्वर्गस्य निरतिशयप्रीतित्वेन उपचयादिधर्मवत्त्वं नास्ति, तथापि तदेवासिद्धम् । कर्मसाध्यत्वे, कर्मण उपचयापचयादिधर्मवत्त्वात्[1] तत्साध्यस्यापि तथाप्रसङ्गात् । ननु मूर्तद्रव्यस्यैवोपचयापचयादिधर्मवत्त्वं दृष्टं लोके । सत्यम् । तथाप्युपचयापचयादिशब्देन तारतम्यभेदा एवोच्यन्त इति न किञ्चिदेतत् । तस्मात् सम्यग्भूतफलत्वं मुक्तेः परिशिष्यते । ननु तस्या अपि साध्यत्वादनित्यत्वेन न सम्यक्त्वम् । न । साध्यत्वस्यैवासिद्धेः । न च कर्मणा ज्ञानेन वोभाभ्यां वा साध्यो मोक्ष इति वाच्यम् । कर्मणोऽनित्यत्वादिलक्षणस्यान्यत्र विनियुक्तत्वात् । किञ्च, नित्यमुक्तस्यात्मनः अमुक्तोऽहमिति भ्रमनिवृत्तिरेव चात्र मोक्षः । अतो मोक्षः साध्य इव, न साध्यः । अतो न कर्मणा साध्यत्वम् । नापि ज्ञानेन, ज्ञानस्य साधकत्वाभावात्, बोधकत्वस्यैव भावात् । बोधकत्वेन च न किञ्चित् साध्यं स्यात् । किन्तु किञ्चिन्निवृत्तमेव स्यात् । अतो न ज्ञानेन साध्यो मोक्षः । नाप्युभाभ्याम्, उक्तहेतुसमाहारादेव तदनु (स्था? त्था)नात् । तस्मान्नापवर्गः साध्य इत्यनित्यत्वाभावेन सम्यक्त्वासिद्धिरिति ॥ ६३ ॥

इति स्कान्दशारीरके पञ्चमोऽध्यायः ॥

---

१. 'दिश्च', २. 'न्त' घ. पाठः.

## अथ षष्ठोऽध्यायः ।

एवं तावन्मुखगतानां रेखाणां निम्नोन्नतभागानां च लक्षणानि सह संज्ञाफलाभ्यां कथितानि । अधुना तदन्तर्गतानां रेखानिम्नभागादीनां लक्षणादि दर्शयत्युत्तरेण सन्दर्भेण —

**या जिह्वामूलमारभ्य तदन्तं परिवर्तते ।**
**नाडीसंज्ञा तया विद्वान् शास्त्राणां शस्यते तथा ॥ १ ॥**

या जिह्वामूलमारभ्य जिह्वाया नालादेवारभ्य उत्थाय तस्या अन्तं यावत् परिवर्तते पारिन्यूना गच्छति, तया तद्वान् पुरुषो विद्वान् जायते । नच विद्वच्छब्दो रूढः किन्तु यौगिक इत्याह — शास्त्राणामिति । बहुवचनेन नासावेकशास्त्रवेदी, अपि तु बहूनि शास्त्राणि विजानातीति दर्शयति । किञ्च शस्यते चासौ पुरुषः । यद्येषा योषितां स्यात्, तदा तासामुक्तलक्षणभर्तृसम्बन्ध इत्यवगन्तव्यम् । नाडीति चास्या नामेति पृथग् योजना ॥ १ ॥

**पार्श्वयोर्यदि तस्याश्चेद् रेखाद्वयमुदीक्ष्यते ।**
**अभिन्नेति तु तत् प्रोक्तं[1] वर्णसङ्कर इष्यते ॥ २ ॥**

अस्यार्थः — तस्याः पार्श्वयोर्यदि चेद्, रेखाद्वयमुदीक्ष्यते, तत् तर्हि अभिन्नेति प्रोक्तम् । वर्णसङ्करश्च फलम् ॥ २ ॥

**शाखासहस्रं यदि चेत् तस्याः स्याद् बहुविस्तरम् ।**
**बहुभाषी ततः स स्यात् पुरुषः स्त्री बहुप्रजा ॥ ३ ॥**

यदि तस्या एव रेखायाः शाखासहस्रं स्यात्, तर्हि बहुविस्तरं नाम । अत्र विस्तरशब्दो यद्यपि शब्दप्रपञ्चवचनः, तथापि अर्थविस्तारमेव वक्ति । तेन यौगिकमेतन्नाम घटते । सहस्रशब्दश्च बहुत्वमात्रवचनः सहस्राधिकमपि सङ्ख्याविशेषं वक्ति । तत्फलं पुरुषस्य बहुभाषिता । स्त्रीणां तु बहुप्रजत्वम् । यद्यप्यत्र पृथक् फलमुक्तं, तथाप्युभयत्रोभयमवगन्तव्यमिति रहस्यम् । किन्च तर्हि फलभेदकथनस्य प्रयोजनम् । उच्यते । रहस्यान्तरमप्यत्रास्ति । प्रजाशब्देन प्रजनयत्यनेनेति व्युत्पत्त्या यद्योन्यन्तर्द्वादशाङ्गुलं गत्वा चतुरङ्गुलं वा गत्वा अङ्गुल्या स्पर्शनीयं रेतोविसर्गद्वारतया

---

१. 'क्त' ख. पाठः.

स्थितं बीजमूतं रक्तवर्णं च, तदुच्यते । तत्र कथं बहुत्वमिति चेदुच्यते । बहुत्वं नाम पृथुत्वम् । तथाच पृथुत्वेनोत्पादनव्यापारेऽपि सुरताख्ये तद्वर्तिनीनां स्त्रीणां भोगपारवश्यात् क्षिप्रं क्षिप्रमेव रति (वच्छ ? विच्छि) त्तिः क्षिप्रं क्षिप्रमेव रत्यारम्भश्च । तत्रापि पृथुलिङ्गपुरुषसम्बन्धे विशेषतस्तथा स्यात् । लिङ्गविघट्टनेन हि तस्य योन्यन्तर्गतवस्तुनश्चलने सति समधिगता परमनिर्वृतिरिति स्त्रीणां मनसि कोऽपि विकारः प्रोज्जृम्भमाणः पुरुषान् सुखयति । स एव हि लोके स्त्रीणां सौभाग्यमित्युच्यते बहिः कमनीयताकारेण परिणममानः । किञ्च, तत्पृथुत्वाभावे पुरुषाणां लिङ्गविघट्टनासत्त्वेन विकारो नोज्जृम्भते । अतः स्वनिर्वृतिमात्रमेव फलिष्यति । न स्त्रीनिर्वृतिसाहित्याभावेन परमा निर्वृतिः । उभयनिर्वृतिसाहित्ये ह्युभयोर्मनसि परमा निर्वृतिः प्रोज्जृम्भते । अतस्तत्पृथुत्वाभावे दौर्भाग्यमभ्यस्यते स्त्रीणां पुरुषैः । अतस्तत्पृथुत्वमावश्यकं बीजगतं, नरस्त्री जगत(?) पृथुत्वेन पुरुषाणां स्त्रीणां च भोगसुखसम्भवात् । ततः सौभाग्यं तासां चेत् तर्हि पुरुषाणां तत् कुत इति विवक्षितव्यमिति चेदत्र ब्रूमः । तत्रापि लिङ्गगतं गुणसाकल्यमिति । किं तदिति चेद् ब्रूमः । बीजपात्रं तावन्मूलाधारादधःस्थितं लिङ्गाधारतया स्थितं च उपयुक्तसर्वरससारसम्भारभारपात्रं सम्भाव्यम् । पुनरुष्णः क्लिष्टो झर्झरः स्विन्नो विक्लेदविशीर्णः प्रस्वेदनः प्रतिक्षणप्रोज्जृम्भणविक्लिन्नः प्रतिक्षणविच्छेदनविच्छिन्नश्च पुरुषकेतु र्म (?) सम्भाव्यते । पार्थवं चापेक्ष्यते । तत्र विशेषोऽस्ति । चतुर्धा योषितश्चतुर्धा पुरुषाश्च । कल्याण्यः कमनीयाः प्रस्वेदना वार्तिक्यश्च । पुरुषाश्च गन्धका लोलटाः परुषा धवलाङ्गाश्च । तत्र कल्याणीनां मांसलोऽल्परोमा, पृथुर्बहुविस्तारभाक्, दीर्घविस्तृतयोनिर्ध्वजस्रंसनस्वभावस्तद्वामकरतलपरिमितसुषिरो लक्षणभागः । तासां तेनानेन लक्षणभागेन योन्याख्येन यथावत् संयोगयोग्यो गन्धकाख्यानां पुरुषाणां पुरुषध्वजः । याः पुनः कमनीयाख्याः स्त्रियो जानुलम्बिकेशपाशाः, लध्वङ्गुलीदीर्घस्वल्पपृथ्वङ्गुलिमनोहरा रक्तोन्नतनखशोभाः पृथुगुल्फाः नीरोमजङ्घाः, तद्वामेतरस्वल्पदण्डाः, अदृश्यमानास्थिबन्धास्तादृशतत्सन्धिबन्धाः,

---

१. 'ना' ख. ङ. पाठः. २. 'दूवृत्तीनां' ख., 'ह्यक्तीनां' ङ. पाठः. ३. 'पि कोऽपि वि' ख. ङ., 'पि कोपितो वि' घ. पाठः. ४. 'हि स्त्रीणां लोकैः सौ', ५. 'तद्बहुपृ' ख. पाठः. ६. 'की' ङ. पाठः.

नित्यमुकुलायमानकुन्तलावलीमण्डितानना: दीर्घबाहुपाशाः, तदङ्गुलीषु स्पर्श-सुखमुद्भावयन्तु भूयो भूयस्तनिम्नानुभूयमानया स्निग्धतया समं परिरम्भ-बाहुपाशसमुल्लसत्पुलकमुकुलतया पुरुषमनोविकारमनभ्यस्तानुभवत्वेऽप्युत्पा-दयन्त्यः, कुमारभावेऽपि प्रोद्भासमानस्तनमुकुलाः विशेषतो मुखबाहुमूल-स्तनकरतलजघनपृष्ठांसोरुजङ्घापादतलेषु अङ्गुलीषु च पाणिपादयोः स्निग्धा-ङ्ग्यः, सुस्निग्धकृष्णमनोहरतरदृष्टिपाताः, नित्यस्मेराधरदेशाश्च। तासां स्ववद-नकुहरविवरसमानः स्निग्धमांसलमसृणः, खचितस्निग्धरोमप्रचुरः, प्रस्निग्ध-स्पर्शः, प्रस्वेदनश्च, विस्तारभूभागः, समुन्नतो, नाभिदेशमारभ्य प्रज्वलित-निजोपान्तः, कनकवर्णो जघनदेशः । तासां लोलटैः पुरुषैरालिङ्गनादौ रत्युपचारे योग्यता । तल्लिङ्गेन च सुरतसमये समस्तगुणभाजनतया परम-परमा निर्वृतिश्च भवेत् । तासां तेषां च संयोगे यथाबुद्धिव्यवस्थं यथेच्छं च रतिविच्छेदः । प्रस्वेदनाः पुनरनवरतप्रस्वेदयुक्ताः सर्वाङ्गेषु, विशेषतश्च योनिदेशे, बाह्याभ्यन्तरयोर्भागयोर्बाहुमूलयोरूरुमूलयोर्नासाधोदेशे, किं-बहुना ललाटादन्यत्र सर्वत्र पुरुषसम्बन्धमात्रावस्थायां विशेषतश्च रत्यव-स्थायां प्रस्वेदनाः प्रस्विन्नशरीराः । तासां परुषैः पुरुषैः सम्बन्धयोग्यता। तथा सति च तासामुक्तदोषनिराकरणमपि यथाकथञ्चित् स्यात् । सर्वथा तैरेव तासां सम्बन्धः । अन्यथा तासां कदाचिदपि न परिपूर्तिः स्यादिति तैः सम्बन्धोऽवश्यकर्तव्यः । वार्तिकीनां पुनः सर्वप्रवृत्तिशीलानां, निरन्तरं पापप्रवृत्तियुक्तानां च प्रतिपुरुषचलबुद्धीनां, कुत्रापि रतिमलभमानानामप-रिपूरणवशात् सर्वदा दग्धदन्दह्यमानहृदयानां, योनिदेशे प्रस्विन्नगात्र-यष्टीनां, सर्वदा संक्षुब्धमनोवृत्तीनां, समरसिकजनप्रद्वेषिणीनां नाभिदेशा-दारभ्याजघनं निम्नशरीरस्थितीनां, सुमनोहरसुन्दरवर्णविशेषाभिव्यञ्जकशरी-रविनिवेशयुक्तानां, धवलाङ्गैरेव पुरुषैः सम्बन्धयोग्यता । तदेव तासां सम्भो-गपरिपूरणात् । यद्येवं, तर्हि ते पुरुषाः कीदृशाः । ब्रूमः । ये सुरभिद्रव्यवस्तु-लम्पटमनसः, स्वच्छकान्तयो, मांसलगात्राः, पृथुदीर्घगात्राश्च, स्फुरितमुखदो-र्मूलाः, अल्परोमयुक्ताः, दर्शनश्रवणस्पर्शनादिसमुदीयमानसन्ततसमार्द्रीकृते-

---

१. 'ग्धि' ख. 'ग्धिज' घ. पाठः. २. 'म्भवा बा', ३. 'पपाद' क. पाठः. ४. 'बा' ख. पाठः. ५. 'र' ख. पाठः, ६. 'लनाद् नि' ङ. पाठः. ७. 'था', ८. 'भ्य जघनान्तानि' क. पाठः. ९. 'तनिजालि' ख. पाठः.

लिङ्गावृतयः प्रायशः स्पर्शनादौ सर्वस्त्रीणां समार्द्रीकृतनिजलिङ्गसन्निधिपद-देशाश्च, ते गन्धकाः । ये पुनः

सुविशदनखदन्तपाणिपादाः
प्रथिततराः परिवृत्तनेत्रचाराः ।
चिरपरिचयलब्धचारुरागाः
कथितकथामधुराश्च ढोलटास्ते ॥

ये पुनः स्वर्गेऽपि निःस्पृहाः, खरस्पर्शवस्तुन्यपि[1] निःस्पृहाः, रमणीयासु स्त्रीष्वप्यविरताः, स्वदारनिःस्पृहाश्च, सर्वास्वपि कामिनीषु सक्तास्तदनभिमताः, खरस्त्रीरागविषयास्तास्वसक्ताः, पृथुजङ्घाः, शुष्कगात्राः पृथुलनयनाः, पृथुरोमभाजः, स्वल्पललाटाः, जर्जरायमाणकर्णमूलास्ते परुषाः । ये पुनः शुभदर्शनाः, अन्तर्नीरसाः मलिनगात्रनिःस्पृहाः, स्वच्छगात्रमधुरकटुरूढरागाः[2], मधुरवचनाः, निर्द्वेषाः, स्नानविमुखास्ते धवलाङ्गाः पुरुषाः । एतासां योषितामेतैः पुरुषैः सम्बन्धो गुणगणपूर्णता नाम । एताभिश्च स्त्रीभिर्यथायोगं सम्बन्धः । पुरुषाणामपि गुणसाकल्यं, यल्लिङ्गगतं गुणसाकल्यमित्युक्तम् । तथाच प्रजनयत्यनेनेति व्युत्पत्त्या पुरुषलिङ्गमपि प्रजाशब्दोक्तम् । तत्र बहुशब्देन गुणसाकल्यमेवोक्तम् । स्त्रीपक्षे गुणसाकल्यं पृथुत्वं च । पुरुषपक्षे पृथुत्वं नात्यन्तमपेक्षितम् । किञ्च, कासाञ्चित् स्त्रीणामन्तर्दन्दह्यमानमारारग्नीनां[4], बहुलकृमिकण्डूयमानयोनिभागानां, तदन्तरुद्दीपितकामकण्डूतीनां, पृथुलिङ्गैः पुरुषैः सह सम्बन्धेऽपि परिवर्तमाने, तल्लिङ्गविघट्टने सति कण्डूतिविगमनात् सुखलाभो भवति इति पृथुत्वमपेक्षितमेव वा कुहचिदिति बहुप्रजत्वमुक्तं युक्तम् । बहुभाषित्वं चोभयत्रेति व्याख्यातम् ॥ ३ ॥

**स्फुटास्तु रेखा जिह्वायां भागश्चापि समुन्नतः ।**
**रागितां सूचयन्त्येव प्रकाशाख्याः सितश्च सः ॥ ४ ॥**

याः पुनर्जिह्वायां प्रकाशाख्या रेखाः, किं तल्लक्षणमिति चेदाह— याः स्फुटाकारास्ताः प्रकाशाख्याः । यः समुन्नतो भागः स सिताख्यः ।

१. 'पि स्पृ' ख. पाठः. २. 'वि' ङ. पाठः. ३. 'मकुटरू' घ. पाठः. ४. 'दंह्य' क. घ पाठः.

ता रेखाः स सिताख्यो भागश्च पुरुषाणां स्त्रीणां च यथाक्रमं रागितां सूचयन्ति। यदि स्त्रीणां रेखाः प्रकाशाख्याश्च न केवलं, समुन्नतो भागः सिताख्यः, तर्हि रागितां सूचयन्त्येव। यदि च पुरुषाणां समुन्नतो भागः सिताख्यश्च न केवलं, प्रकाशाख्या रेखा एव, तर्हि सूचयन्त्येव रागितामिति लक्षणद्वयसम्बन्धे फलावधारणाय एवकार इति ॥ ४ ॥

**तत्रैव चोर्ध्वरेखायाः सम्भवो यदि नान्यतः।**
**वचनेनैव जीवन्ति ब्राह्मणाश्चेत् पृथक् पृथक् ॥ ५ ॥**

जिह्वायामेव चेदूर्ध्वरेखायाः सम्भवः सत्ता, नान्यतः पाणिपादतलयोर्ललाटे च, तर्हि वचनेनैव ते जीवन्ति नान्यैर्वृत्तिसाधनैः किञ्चन कृत्यमस्ति, यदि ते ब्राह्मणाः। यदि ते पृथग् ब्राह्मण्यात्, तर्हि फलमपि पृथगन्यदेव ॥ ५ ॥

किं तदिति चेद् उच्यते —

**पालनं क्रयवृत्तिर्वा द्विजसेवनमित्यदः।**
**यदात्मनः स्वतः सिद्धं तदेव फलमिष्यते ॥ ६ ॥**

सुगमम्। वाशब्दश्चार्थः ॥ ६ ॥

सर्वत्रापि चेदूर्ध्वरेखा तर्हि किं फलमिति चेदत्र ब्रूम इत्याह —

**यद्यन्मनःसन्निहितमिष्टं वा बुद्धिगोचरः।**
**तत् सर्वं सततं सिध्येदिति शङ्करशासनम् ॥ ७ ॥**

यद्यूर्ध्वरेखा सर्वत्र, स्यादित्यध्याहारः, तर्हि तद्वतः पुरुषस्य स्त्रिया वा यद्यन्मनःसन्निहितं बुद्ध्युपारूढं, यद्येतन्मम सम्पद्यते तर्हि सुखी भविष्यामीति, तत् सततं सिध्येत्। यच्चेष्टं न बुद्ध्युपारूढं, तदपि सततं सिध्येत्। यच्च धीगोचरः धियः गोचरः विषयः तदपि सततं सिध्येत्। एतदुक्तं भवति — त्रिविधोऽस्ति विषयः प्रख्यातः। कश्चिन्नित्यध्यातत्वाद् बुद्धिसन्निहितो भवति, सर्वदा स कालापेक्षां विना सिध्येत्। कश्चिदिष्टः सोऽपि तथैव सिध्येत् कदाचिदप्यज्ञातः। कश्चित् धीगोचरः ज्ञातमात्रः सोऽपि तथैव सिध्येत्। यदि सिद्धे सति पुरुषाणां स्त्रीणां वा इष्टप्राप्तिमनिष्टपरिहारं वा कुर्यात्, साधनं चेत्, साध्यं चेत्, सुखं दुःखनिवृत्तिर्वा स्यादिति। नात्र वर्णनियमोऽपीत्यवगन्तव्यम् ॥ ७ ॥

---

१. 'त। एत' ख. पाठः. २. 'प्राख्यः क' ख. ङ. पाठः. ३. 'ति का', ४.

यदि सा पादतलगा साम्राज्यं सूचयेद् ध्रुवम् ।
रेखात्रयोपबद्धा चेन्निरूढा मूलतोऽप्यसौ ॥ ८ ॥

सा ऊर्ध्वरेखा पादतलगा भवेत्, तत्रापि रेखात्रयोपबद्धा रेखात्रयेण उपबद्धा मूलेऽनुबद्धा, मूलतः मूले निरूढा निरूढगुणमूला असौ चेत् स्यात्, तर्हि साम्राज्यं सूचयेत् । किञ्च न केवलं सूचनमात्रं, किन्तु दृढं सूचयति । एतदुक्तं भवति — मूलतो रेखात्रयेण पादतलमूलादेवारभ्य रेखात्रयेण प्रेक्षकस्य दक्षिणभागगतेन रेखाद्वयेन वामभागगतया चैकया रेखया इति त्रयेणानुबद्धा स्वयं च मूलतो निरूढा पादतलगता ऊर्ध्वपुरस्सरा रेखा साम्राज्यं दृढं सूचयति यदि तद्योग्यः क्षत्रियश्चेत् । ब्राह्मणादीनां तु तत्तज्जन्मयोग्यं विशिष्टं फलमनितं च सूचयतीति । यदि पुनर्मध्यमां यावद् गच्छति, या पादतलमध्यगता निम्ना काचित् सन्निवेशवृत्तिः ततः पश्चादारब्धा, आरम्भेऽपि मूलभूतं गुणत्रयमवलम्ब्य प्रारब्धा, तर्हि साम्राज्यायोग्यानामपि साम्राज्यं दृढं सूचयतीत्यवगन्तव्यम् ॥ ८ ॥

या वा पाणिगता सा स्यादात्मरेखासमुद्भवा ।
सा लोकं परपूर्वं च सूचयेन्मध्यमां गता ॥ ९ ॥

अयमर्थः — पाणिगता पाणितलगता आत्मरेखासमुद्भवा मध्यमां गता च सा ऊर्ध्वरेखा । सापि परपूर्वं लोकं परलोकं लोकादिलक्षणां सिद्धिमिति यावत्, सूचयति । किञ्च न केवलं परलोकसिद्धिं सूचयति, अपि तु इहलोकसिद्धिं च । इदमत्राकूतम् — आत्मरेखामूलादेवारभ्य काचित् पाणितलगता रेखा मध्यमां यावद् गच्छेत्, तर्हि सा लोकद्वयमस्य भावीति सूचयति । ननु लोकद्वयमस्य सर्वथा भावीति किमित्येषा सूचयति । उच्यते । लोकशब्देन लोकभोग्यं विशिष्टतरं फलजातमभिधीयते । तथाच न कोऽपि विरोधः प्रादुर्भवेत् । तत्र कथमुभयलोकसिद्धिरिति चेद्, ब्रूमः । यथाकालमायुर्लक्षणानुसारेण इहलोकफलानुभवः । तदनन्तरं प्राप्ते काले पारलौकिकविशिष्टनिरतिशयसुखसंसिद्धिः । तत्र न कालनियमः, कर्मफलत्वे ज्ञानफलत्वे च यथाकर्म फलसम्भवात् ज्ञानफलस्य नित्यत्वाच्च । ननु

१. 'श्च', २. 'ण प्रे' क पाठः.

मोक्षमप्येषा सूचयति चेत् किमिति मोक्षसूचनाय रेखान्तरमुदीरितम् । अत्र ब्रूमः । इयं कर्मज्ञानफलयोः सूचनेन साधारणत्वेन समुद्गता । रेखान्तरं तु मोक्षफलस्य सूचनेऽसाधारणं लिङ्गमिति नोभयोर्वैयर्थ्यमिति कः शङ्काकलङ्कावकाशः ॥ ९ ॥

**या नासान्तमवष्टभ्य ललाटान्तमृजुत्वतः ।**
**गच्छत्येषा परं लोकमूर्ध्वरेखा तु शंसति ॥ १० ॥**

या पुनर्नासान्तमवलम्ब्य ललाटान्तमृजुत्वतः ऋजुत्वेन उपलक्षिता गच्छति, ललाटस्यैवान्तमेषा ऊर्ध्वरेखा, सा तु परं लोकं मोक्षलक्षणं शंसति, सूचयतीत्यर्थः । इदमपरं मोक्षलक्षणमित्यभ्युच्चयत्वेन न वैयर्थ्याशङ्का कार्या इत्यवगन्तव्यम् ॥ १० ॥

एवं तावत् प्रसङ्गात् स्थलान्तरगतानामूर्ध्वरेखाणां लक्षणतद्गतविशेषफलानि दर्शितानि । अधुना प्रकृतामेव जिह्वानलगतरेखालक्षणादिचिन्तामनुवर्तमानस्तद्गतां काञ्चनरेखां लक्षयति —

**काञ्चनाख्या दृढा मूले रेखा पृथुलसंस्थितिः ।**
**तया (सर्व)समृद्धिः स्यान्नाग्रं सा गच्छति ध्रुवम् ॥ ११ ॥**

अस्यार्थः — या पुनर्मूले दृढा पृथुला च यावज्जिह्वाग्रमागच्छन्ती रेखा, सा काञ्चना नाम । तया स्त्रीपुरुषाणां सर्वसमृद्धिः स्यात् । सर्व-शब्देनैतदाह — जीवद्धनमजीवद्धनं चेत्युभयसाधनम् । तत्राजीवद्धनं यत् काञ्चनादि तत् सुलभं सम्पाद्यम् । जीवद्धनं तु पश्वादि यथाकथञ्चिदपेक्षया प्रवृत्त्यनुसारेण भवति, न सुलभसम्पाद्यमिति । या वा पृथुलसंस्थितिः पृथुतरा संस्थितिः सम्यक् स्थितिरवगाढता यस्यास्तादृशी रेखा, सापि एतदेव फलं प्रयच्छति । तस्या अपि नासाग्रगत्वाभावो लक्षणविशेषणतयावगन्तव्य इति । यदि वा, पृथुलसंस्थितिरिति पूर्वोक्तरेखाया एव विशेषणम् । नामगर्भतया रेखान्तरलक्षणमित्यवगन्तव्यम् ॥ ११ ॥

**पार्श्वयोः संस्थिता या तु जिह्वाग्रे वर्तते कृतिः ।**
**तया विश्वाख्यया विश्वनाशहेतुः स्वयं भवेत् ॥ १२ ॥**

---

१. 'मेवैषा सू' घ. पाठः. २. 'नेन सा' क. पाठः. ३. 'नो रे', ४. 'च जिह्वा' घ. पाठः.

या पुनर्जिह्वायाः पार्श्वभागयोः संस्थिता सम्यग् विगाह्य स्थिता अग्रे या परिवर्तते सा विश्वाख्या रेखा। तया सर्वो लोकः स्वयं विश्वनाशहेतुः स्यात्। अयं भावः — यदि जिह्वाग्रे तस्याः पार्श्वभागयोर्विगाह्य स्थिता काचिद् रेखा समुल्लसति, तर्हि तस्या विश्वेति नाम। न नित्येयं रेखा, किन्तु यस्य कस्यचिद् यदाकदाचिदियं भवत्येव। तदा सा स्वस्य विनाशहेतुतां सूचयेत्। विश्वशब्देन स्वकुलमुच्यते। तस्य नाशहेतुता। नाशो नाम बह्वनर्थपात्रता। तद्धेतुतां सूचयति। कथमिति चेत्, या खलु स्वयं कलङ्कादिना, स्वनाशादिना, स्वबुद्धिभ्रंशादिना, स्वपरदेशगमनादिना, स्वमरणादिना च स्वकुलानर्थपात्रता सम्भवति सैवात्र तद्धेतुताभिमता अभिहिता च। तामेषा रेखा सूचयति॥ १२॥

तत्सन्निधौ पुनर्या तु वर्तते परिवर्तिका।
पार्श्वयोः संस्थिता तस्याः फलं युद्धे पराजयः॥ १३॥

या पुनः पार्श्वयोः संस्थिता सा परिवर्तिका नाम। यदि तत्सन्निधौ वर्तते, तर्ह्येव तथा भवेत्। तदा तस्याः फलं युद्धे पराजयो नाम या या प्रवृत्तिरारभ्यते तस्यां तस्यां वीर्यक्षयः। तथा च वीर्यनाशात् पलायनादि भवति। तदपि पराजयशब्देनोच्यते। अत्र युद्धे पराजय इत्युक्तेरयमर्थः — क्षत्रियं प्रतीयमुक्तिः। क्षत्रियस्य चायुधप्रहरणगजवाजिरथपदातिचतुरङ्गश्वेतच्छत्रचामरादिलक्षितं कलहाभिधेयं कर्म युद्धमित्युच्यते। तस्माच्च पलायनादि बहिर्भूतं तदन्तर्गतमेव च वीर्यक्षयशब्दाभिधेयं दीनत्वं पराजयशब्देनोच्यते इत्येवं सिद्धम्। यद्यपि चैषा रेखा द्विजात्यादीनामपि सम्भवेन्न चैतत् फलं सम्भवति, तथापि तेषां युद्धशब्देन कलहमात्रं लक्षणीयम्। तस्मिन् पराजयश्च पराजयशब्देनाभिधेय इति व्याख्येयम्॥ १३॥

तत्र त्रिकोण(क)गता माहिमानमुदीरयेत्।

या पुनस्तत्र जिह्वायां त्रिकोणतया गता रेखा, सा स्वाश्रयस्य भाविनं माहिमानमुदीरयेत् सूचयेत्। अत्र त्रिकोणगतेत्यत्र त्रिकोणाधि-

१. 'यावति व' घ. पाठः. २. 'तुत्रयतां', ३. 'वेत् सै' ङ. पाठः. ४. 'लायनश' ख. पाठः. ५. 'स्प' घ. पाठः. ६. 'धनोच' ख. ङ पाठः.

गतेति पठितव्यम् । त्रिकोणतथाधिगतेति च व्याख्येयम् । अधिगतिः अधि उपरि गतिः । पूर्वोक्तयोरग्रगतयो रेखयोरिति शेषः ॥

**या मध्ये पार्श्वगा रेखा सापि विद्योतनीं प्रभाम् ॥ १४ ॥**

अयमर्थः — या पुनर्जिह्वाया मध्येन पार्श्वगा नाम्ना अर्थतश्च, सा विद्योतनीं विभाव्यमानां च प्रभां भाविनीं सूचयेत् ॥ १४ ॥

अत्र विशेषमाह —

**विंशद्वत्सरमारभ्य यावत् पञ्चाशतं गता ।**
**प्रभा संजायते पुंसां पार्श्वगाख्या यतः स्फुरेत् ॥ १५ ॥**

यतो हेतोः पार्श्वगाख्या रेखा स्फुरेत् स्फुरति, ततः कारणात् पुंसां विंशद्वत्सरपर्यन्तं वय आरभ्य पञ्चाशद्वत्सरपर्यन्तं महती प्रभा विद्योतनी सञ्जायते। इदमत्र तात्पर्यम् — पार्श्वगाख्यया रेखया यस्य हि जिह्वा विराजते । ननु पार्श्वगाख्याया रेखायाः सत्तामात्रेण कथं जिह्वायाः शोभा सञ्जायते । उच्यते । न सत्तामात्राच्छोभा समुल्लसति, किन्तु रेखासमुल्लासहेतु(:?)कर्मवशाच्च । तथाच रेखासम्भवाज्जिह्वाशोभा सञ्जायते । जिह्वाशोभा चापरिमितगुणगणनिबिडविपुलनिर्दोषवाक्प्रसरलाभः, तेन च प्रभा सञ्जायत इति रेखया प्रभा सञ्जायत इत्युक्तिरविरुद्धा ॥ १५ ॥

एवं जिह्वागता रेखा लक्षणफलाभ्यां नाम्ना च विचार्य दन्ताधिष्ठानगता विचारयति —

**ऊर्ध्वदन्तप्रतिष्ठायां पङ्क्तिमध्ये स्फुरेद्धि या ।**
**सा पिङ्गला तया विश्वं द्विष्टमेव भवेद् ध्रुवम् ॥ १६ ॥**

या ऊर्ध्वदन्तपङ्क्तिप्रतिष्ठायां, प्रतितिष्ठति अस्मिन्निति प्रतिष्ठा अधिष्ठानं तस्यां, तत्रापि विशेषः पङ्क्तिमध्ये या हि स्फुरेत्, सा पिङ्गला नाम । तया विश्वं जगद् द्विष्टं भवेत् । आत्मना अकारणमेव तत् त्यक्तं भवेदित्यर्थः । कस्त्याग इति चेद् यो जगद्विषय उच्यते । जगतः सकाशान्न किञ्चिदपि प्रयोजनं सिध्येत् । अपेक्ष्यते च । प्रत्युत दुःखं भवेदपि । नच दुःखनिवृत्तिः कदाचिदपि सम्भवेदस्य पुरुषस्य जगतः सकाशात् । अत उक्तं जगद् द्विष्टं भवेदिति ॥ १६ ॥

---

१. 'गगत' क. ख. पाठः. २. 'खिलवि' क. घ. पाठः. ३. 'खाया: प्र, ४. 'क्षिवि' घ. पाठः. ५. 'इत्युचय' क. पाठः.

किञ्च,

पुरोभागगतौ दन्तौ छेदमश्नुवतो यदि ।
स्रंसितौ नाम तौ स्यातां पुत्रभङ्गः फलं भवेत् ॥ १७ ॥

यौ खलु वदनपुरोभागगतौ दन्तौ, तौ छिन्नौ यदि स्यातां, तर्हि पुत्रभङ्गः फलं भवेत् । तयोः स्रंसितौ इति च नाम ॥ १७ ॥

तत्रापि विशेषमाह —

दक्षदन्ताग्रभेदे तु समृद्धिः स्याद् ध्रुवा नृणाम् ।
पुत्रभङ्गोऽपरच्छेद इति तत्र विशेषधीः ॥ १८ ॥

कार्येति शेषः । तुर्विशेषेऽवगन्तव्यः । दक्षिणदन्ताग्रभेदे समृद्धिः सम्यगृद्धिः शरीरसुखेन सह स्वकुलसुखसम्भवः । तां विशिनष्टि — ध्रुवेति । ध्रुवा स्थिरा, न कथञ्चिदपि केनापि कारणेन कदाचिदपि बाध्या, स्वाभाविकत्वात् । नृणां, न पुरुषाख्यनिर्विशेषाणां स्त्रीणां वा । किन्तु सर्वेषाम् । अपरच्छेदे तु अपरदन्ताग्रच्छेदे तु पुत्रभङ्गः. तत्रापि नृणाम् । विशेषः क इति चेद्, अयमिति ब्रूमः — नापत्यभङ्गः, किन्तु पुत्रभङ्गः । अतो महानर्थमनर्थो दुःखप्रादुर्भावहेतुरिति सूचयति ॥ १८ ॥

यो वा तन्मूलघातः स्यात् सोऽपि दुःखं सुसूचयेत् ।
यदि केवल एव स्यादिति चापि विशेषधीः ॥ १९ ॥

यश्च तन्मूलघातस्तयोर्दन्तयोरन्यतरस्य मूलेनैव घातः प्रभ्रंशः, सोऽपि दुःखं सुसूचयेत् , न व्यभिचरति । यदि स केवल एव स्यात् स मूलघातः केवल एव एक एव यदि स्यात् तर्ह्युक्तं फलं भवेत् , नान्यथा, व्यभिचारात् । व्यभिचारे लक्षणत्वाभावात् । लक्षणं ह्यसाधारणो धर्मः । स च व्यभिचारे न स(म्भा ? द्धा)वं लभेत । अतः कैवल्यं विशेषणम् । इति चापि विशेषधीरिति पूर्वविशेषधीसमुच्चयाय । अस्य केवल इति नाम विशेषणं च ॥ १९ ॥

यो वा तत्रैव दन्तानामुपरि स्थूलमूर्तिभाक् ।
दन्तः सोऽपि परां प्रीतिं सूचयत्यमलात्मनाम् ॥ २० ॥

---

१. 'वा' ख. पाठः. २. 'यमर्थो' क. ख ग. घ. पाठः. ३. 'लभते' ख. पाठः.

यश्च दन्तानां दन्तपङ्क्तेरुपरि अल्पो दन्तः, स परां प्रीतिं भाविनीं सूचयति। न नृणां, किन्तु अमलात्मनां विशिष्टानां नृणामिति। तत्रैवेत्यस्य व्याख्या दन्तानामुपरीति। दन्तानामित्यनेन व्यक्तिवाचिना बहुवचनेन समूहिसमूहसम्बन्धवशात् समूहो लक्ष्यत इति पङ्क्त्युपरीत्यर्थो लभ्यते। स्वल्पमूर्तिभागित्यनेनैतदुक्तं — योऽयं पृथुस्तण्डुलस्तच्चतुर्भागपरिमाणो दन्तः न न्यूनोऽधिकश्चेति। अयमभिप्रायः—ऊर्ध्वदन्तपङ्क्त्युपरिभागे त्रयो भागाः वामो दक्षिणो मध्यमश्च। तत्र यदि वामे स्वल्पो दन्तः समुत्तिष्ठति, तर्हि स्त्रीणामेव स परां भाविनीं प्रीतिं सूचयति न पुरुषाणाम्। यदि पुरुषाणां तथा स्यात्, तर्हि निरतिशया दुःखसम्पत्तिरेव स्यात्। यदि स्त्रीणां दक्षिणभागे स स्यात्, तर्हि सोऽपि निरतिशयां दुःखसम्पत्तिमेव सूचयेत्, न परां प्रीतिम्। मध्यमे चेत् स्त्रीणां पुरुषाणां चान्यदेव रोगादिकं फलं सूचयेत्। प्रीतिशब्देन चात्र प्रीतिकारणभूता सम्पदेवोच्यते। तथाच निरतिशयदुःखसम्पत्तिरपि तद्धेतुभूता दुर्गन्धिरेखोच्यते ॥ २० ॥

या वा संसर्गशून्या स्याद् रेखाधिष्ठानसङ्गता।
तया मान्याख्यया धर्मः प्रतिष्ठां लभतेऽचिरात् ॥ २१ ॥

या पुनस्तत्राधिष्ठाने संसर्गं लभते दन्तैः संसर्गशून्या च, सा मान्याख्या। तया धर्मः अचिरात् प्रतिष्ठां लभते। अयमर्थः—यदि दन्ताधिष्ठान ऊर्ध्वभागस्थदन्तैः संसर्गशून्या काचिद् रेखा भवेत्, तर्हि सा मान्येति प्रसिद्धा भवेत्। तस्यां च सिद्धायां धर्मो लब्धप्रतिष्ठो भवेत्। तेनैतदुक्तं भवति—जन्मप्रभृति पुरुषशरीरवदियमपि रेखा क्रमेणोज्जृम्भमाणा स्वयं यथा यथा वर्धते तथा तथा धर्मे बुद्धिरपि अधर्माद् व्यावर्तमानक्रमेणाङ्कुरपल्लवपत्रकुसुमफलतद्गतविशेषा(ति ? दि)रूपेण स्थावरशरीरवत् शुक्रबुद्बुदादिरूपेण जङ्गमशरीरवच्च प्रोज्जृम्भते। तथा च बुद्धेः प्रोज्जृम्भणवशाद् बुद्धिवेद्योऽपि धर्मः सङ्गतिकर्तव्य(ता)दिभिरुपकरणैः स्वनुष्ठानेनोपचीयमानः प्रतिष्ठां सुस्थिरतां फलपर्यन्ततां गच्छतीति ॥ २१ ॥

एवं दन्तोर्ध्वाधिष्ठानगतां रेखादिरीतिं लक्षयित्वा सम्प्रत्यधोधिष्ठानगतां रीतिं लक्षयति—

---

१. 'ता', २. 'वत्तु', ३. 'ते ॥ या' क. पाठः, ४. 'लसद्भद्र' घ, 'लसद्रुद्र' क. पाठः, ५. 'सातिकर्त' घ., 'साङ्ग' ख. ङ. पाठः,

या वाधोधिष्ठानगता रेखया सुविभाव्यते ।
संज्ञाख्यया मिलितया साकृतिः सुन्दरी मता ॥ २२ ॥

या वेति श्लोकपूरणम् । या अधोधिष्ठानगता मिलिता रेखा सा संज्ञा नाम । तया या आकृतिः सुविभाव्यते, सा आकृतिः सुन्दरी मता सुन्दरी आकृतिरिति तज्ज्ञैर्विज्ञाता । अत्र तृतीयान्तं पदजातं रेखाविषयं, प्रथमान्तं तु फलविषयमिति विभागोऽनुसन्धेयः । एतदुक्तं भवति — या अधोधिष्ठानगता मिलिता संज्ञाख्या रेखा, सा काञ्चिदतिरतिशयसौन्दर्य-विशिष्टामाकृतिं भाविनीं सूचयति । कदेति चेच्चतुर्दशवत्सरादुपरि चतुर्दश-दिनमतीत्य यद् दिनं तस्मिंस्तन्निरीक्षणं कर्तव्यम् । तद्दिवस एव च तत्सम्भवः । ततस्तस्मिन् दिवसे भाविनीं तद्दिवसादारम्य वर्धनाय प्रवृत्तां सप्तदशवर्षमारभ्यामरणान्तं प्रभूतामेव स्थितां विशेषतश्चोत्तमतया षट्त्रिंशद्वत्सरपर्यन्तं मध्यमतया च चतुष्पञ्चाशद्वर्षपर्यन्तमधमतया च तच्छिष्टवर्षपर्यन्तं मरणपर्यन्तं च स्थितामिति । अत्र मिलितत्वं रेखान्तरेण, न रेखाभिर्न रेखाभ्याम् । दीर्घता चास्या रेखाया अधिष्ठानरीतिः यावद् गच्छति तावत् स्थितिरित्यवगन्तव्यम् ॥ २२ ॥

यात्र प्रथितसंश्लेषा रेखाभिर्बहुविस्तरा ।
सा लावण्यं शुभतरं सूचयेत् सुन्दरी मता ॥ २३ ॥

या पुनर्बह्वीभी रेखाभिः पृथुसंश्लेषा बहुविस्तरा च, सा विशिष्टतरं लावण्यं सूचयति । एतदुक्तं भवति — अत्राधोधिष्ठाने प्रथितसंश्लेषा रेखान्तरैः सम्मेलने प्रथितः संश्लेषो विहितो यस्याः, सा तथाभूता । अत एव बहुविस्तरा बहुविस्तारपरिमाणा च या रेखा, सा शुभतरं लावण्यं सूचयति । शुभतरामित्यनेनैतदाह — सर्वं प्रियजातं सुखरूपत्वात् सुख-साधनत्वाद् वा प्रियं भवति । तथाच लावण्यमपि प्रियत्वात् स्वयं सुखरूपं वा सुखसाधनं वावश्यमङ्गीकर्तव्यम् । तत्र न सुखरूपत्वं लावण्यस्य । अतः सुखहेतुत्वमेष्टव्यम् । ततः सुखहेतुभूतं लावण्यमिति । अस्याश्च रेखायाः सुन्दरीति नाम । इयं तावत् स्फुटमवगन्तव्या । तथाहि— अधोधिष्ठाने दन्तचतुष्टयादधस्तादोष्ठं पाणिना विवृतं कृत्वा पश्चाद्भागे

१. 'तया रे' ख. ग. पाठः.

निरीक्षणे रेखान्तरैर्मिलिता तत एव पृथुला पीताकारा च सुन्दरी यथा दृश्येत तथा पश्येत्। एवं निरीक्षणे कृते सा यथोक्तलक्षणा परिस्फुरेत्। परिस्फुरितायां च तस्यां तत्फलमपि परिस्फुरतीति। एवमयं क्रमः सर्वत्रावगन्तव्यः ॥ २३ ॥

यात्रैवोर्ध्वमुखासङ्गा निस्त्वक् शाखाद्वयान्विता।
तया मनोरथानां तु सिद्धिः सज्जनभाषिता ॥ २४ ॥

या पुनरत्रैवाधोधिष्ठाने ऊर्ध्वमुखासङ्गा ऊर्ध्वभूते मुखे, आसङ्गो यस्याः सा तथा। तेन अग्रप्रवणत्वमधोभागस्थरेखाया उक्तं भवति। शाखाद्वयान्विता च पार्श्वयोः शाखाद्वययोगश्चात्र रेखाया अपेक्ष्यते। शाखाकारेण स्थितेन रेखाद्वयेन संयुक्ता च (या? ये)यं निस्त्वङ् नाम। अनया सर्वेषां मनोरथानां सिद्धिर्वक्तव्या। इयं सर्वमनोरथसिद्धिं सूचयेत्। मनोरथशब्देन चिरप्रार्थितान्यलब्धान्यलब्धानि च। तत एव भाग्यहीनोऽहमितः पुनरेतल्लाभो मम न भवेदिति परिसन्तप्तचित्तैरनुदिनमनुक्षणं चाशंसितानि फलान्तराणि निवृत्तश्रद्धानि निवृत्तसञ्ज्ञानि कचिदप्यस्पृष्टानि कथ्यन्ते। सर्वेषां च तेषामनया सिद्धिर्लाभः संसूच्यते, ये अनया सम्पन्नस्य पुंसो मनसि विपरिवर्तन्ते इत्याशयः ॥ २४ ॥

या सुषिस्तत्र बाह्येन ह्याकारेण विभाव्यते।
मलिना नाम सा प्रोक्ता फलं तद्भाव उच्यते ॥ २५ ॥

या पुनरत्र बाह्येनाकारेण सुषिः सम्भाव्यते कल्प्यते, सा मलिनेति प्रोक्ता विदितजनैः। तस्याः फलं तद्भावः तस्य मलिनस्य भावः मालिन्यमिति यावत्। बाह्याकारो नाम कः, येन सुषिरमवगम्येत इति चेद्, उच्यते। यः कृष्णाकारः अधिष्ठानभागेऽवगम्यते, दन्तानां च कृष्णाग्रता निघर्षणादौ च संस्कारे क्रियमाणेऽपि या अस्वच्छता, (या च?) परस्परं दन्तानामाधिष्ठानैकतया एकजातीयत्वे सिद्धेऽपि निम्नोन्नतिभ्यां यो विशेषो लक्ष्यते, तैरेतैः कारणैः सुषिर्विभाव्यत इति ॥ २५ ॥

या वा गड्डः स्थिता तत्र कृष्णाकारा ध्रुवाकृतिः।
तया दुर्वचनत्वं तत् सूच्यते खरभाषिता ॥ २६ ॥

या पुनस्तत्राधोदन्ताधिष्ठानप्रदेशे स्थिता कृष्णाकारा कृष्णवर्णा । ध्रुवाकृतिः ध्रुवा स्थिरा आकृतिरवयवसन्निवेशो यस्याः सा तथाभूता गङ्गुः । तया तद् दुर्वचनत्वं सूच्यते । तच्छब्देनैतदाह — यच्छ्रवणे सति हृदयं विदीर्येत तदुच्यते । किं नामासावित्याह — खरभाषितेति । तस्याः खरभाषितेति नामेत्यर्थः ॥ २६ ॥

एवं तावद् वदनकुहरगतानां रेखाणां निम्नोन्नतभागानां च नामलक्षणफलानि प्रदर्शितानि । इदानीं जिह्वागोलकाया ऊर्ध्वाधःकपालयोर्गतानां तिलानां रेखादीनां लक्षणानि प्रदर्शयति —

ऊर्ध्वस्थानकपाले या लम्बमाना गङ्गुः स्थिता ।
तया विश्वं वशे तस्य भवेदिति विनिश्चितिः ॥ २७ ॥

अयमर्थः — या जिह्वागोलकाया ऊर्ध्वस्थानकपाले ऊर्ध्वं स्थानं स्थितिर्यस्य तादृशे कपाले या गता स्थिता गङ्गुर्लम्बमाना तया अस्य पुरुषस्य तद्वतः विश्वं वशे भवेत् । विश्वशब्दार्थः पूर्वोक्त इति न विव्रियते । वशे भवेदिति कोऽर्थ इति चेद्, न स्वातन्त्र्यमत्र तस्य पुरुषस्य विश्वं प्रति विवक्षितं, किन्तु अस्वातन्त्र्यनिवृत्तिः । लम्बमानेति नाम च ॥ २७ ॥

तत्रैव या कृष्णवर्णा वेणी रेखा प्रशस्यते ।
तया सुकेशः पुरुषः स्त्री वा स्यादिति निश्चितिः ॥ २८ ॥

या तत्रैव जिह्वागोलकोर्ध्वकपाले कृष्णवर्णा, सा वेणी नाम । प्रशस्यते च सा । तया पुरुषः सुकेशः स्यात् । सु शोभनाः केशा अस्येति तथा । स्त्री अपि तथा स्यात् । अयमर्थः — वेणीरेखाया गन्धमात्रमपि जिह्वागोलकोर्ध्वभागे यस्यास्ति, तस्य सुमनोहराः सुमनोयोग्याः स्निग्धाः शुद्धा बद्धाः निम्बवल्लीव घनघनायमानमूलदेशा मालतीव विचकिलप्रतिकलितभ्रमदापिचावङ्गाः प्रस्फुरितमूलदेशा आताम्राग्रा वक्रा हृद्याश्च (केशा भवन्ति) । तत्र तेषामेतेषां केशानां भवनमेकोनविंशतिवत्सरमारभ्य निस्सन्दिग्धं भवति । प्रायशो द्वादशवत्सरमारभ्य भवति । एकोनपञ्चाशद्वत्सरपर्यन्तं च तत्स्थितिरिति द्रष्टव्यम् ॥ २८ ॥

---

१. 'दि' ख. पाठः. २. 'न' ख. ङ. पाठः.

**तत्रैव मतिरेखा चेत् स्वर्णाभा सच्छिखाद्वया ।**
**तया सर्वो हि लोकोऽस्य प्रियं कुर्यान्न संशयः ॥ २९ ॥**

या पुनस्तत्रैव जिह्वागोलकोर्ध्वकपाले स्वर्णाभा, पीतवर्णा इति यावत् । सच्छिखाद्वया सत् स्थिरं शिखाद्वयं यस्यास्तादृशी रेखा मतिरेखा । तया अस्य पुरुषस्य सर्वो[1] लोकः प्रियं कुर्यात्[2] नात्र संशयः । एतदुक्तं भवति — यस्य खलु जिह्वोपरिगोलको[3]र्ध्वकपाले मतिरेखा समुल्लसति, तस्य सर्वो लोकः प्रियं कुर्यात् । केनेति चेद् उच्यते । मतिर्नाम मन उच्यते, तज्ज्ञापिका रेखा। तया च सर्वस्य लोकस्य प्रियकरणे मनसो हेतुत्वं[4] निश्चीयते । मनसश्च न साक्षादुक्तफलहेतुत्वं, किन्तु स्वकार्योत्पादनद्वारेणैव । स्वकार्यं च वाक्प्रवृत्तिः । सा च न सामान्याकारा, किन्तु विशेषाकारा । विशेषोऽपि माधुर्यसत्यत्वगाम्भीर्याप्रतिहतत्वदयाफलकत्वविशेषधर्मोपबृंहितत्वम् । एवम्भूतेन विशेषाकारेणोपलक्षिता वाणी सर्वं लोकं मतिरेखावतः पुरुषस्य प्रियङ्करं कुर्याद् इति ॥ २९ ॥

**या वा तत्रैव नम्राख्या रेखात्रयसुसङ्गता ।**
**तया सर्वः सुखं लब्ध्वा तस्मादेव समेधते ॥ ३० ॥**

अयमर्थः — या तत्रैव जिह्वोपरिगोलकभागे रेखात्रयसुसङ्गता रेखात्रयेण एकस्मिन् भागे रेखाद्वयेन दक्षिणे, अपरत्र वामे एकेन सुसङ्गता सुश्लिष्टा रेखा सा नम्राख्या । तया सर्वो लोकस्तस्मादेव पुरुषात् सुखं लब्ध्वा समेधते सम्यग् वर्धते । येषां[5] खलु नम्राख्या रेखा तया ते पुरुषास्तेभ्योऽन्ये तेभ्य एव सुखं लब्ध्वा वर्धन्ते । कथमिति चेद्, ब्रूमः । एषा रेखा सुखं सूचयति । सुखे च जाते मनसि कस्या अपि व्यथाया अभावात् व्यथायाश्च शो[6]षहेतुत्वात् तदभावे च वर्धनकारणसमुज्जृम्भणान्नम्ररेखया सम्पन्नाः सर्वं लोकं सुखं लम्भयित्वा वर्धयन्तीति ॥ ३० ॥

**यत् तत्र पिटकद्वन्द्वं संज्ञासंज्ञितमानतम् ।**
**तया सर्वोऽपि लोकः स्याद् दुःखी रेखाभिधा तु सा ॥ ३१ ॥**

---

१ 'सर्वः प्रि,' २. 'त तद्गतो लोकः ना' क. ख, ङ. पाठः, ३. 'कातले' ख. ग. पाठः, ४. 'श्च'. ५. 'या खलु' क., 'यैषा खलु' घ. पाठः, ६. रो' ख., 'दो' क. पाठः.

अयमर्थः — तत्र यत्तत् पिटकद्वन्द्वं संज्ञासंज्ञितं सा रेखाभिधा। तया सर्वो लोको दुःखी स्यात्। यद्यानतं चेत् पिटकद्वन्द्वं वक्ररूपं चन्द्राकारतस्तर्हि एतत् पिटकद्वन्द्वं संज्ञासंज्ञितमपि रेखाभिधा भवेत् सा रेखाभिधास्मिन् भवेत्, इदं पिटकद्वन्द्वं रेखाख्यं भवेदित्यर्थः। अन्यथा वक्ररूपत्वाभावे इदं संज्ञासंज्ञितम्। तत्र वक्ररूपत्वेन रेखाख्यत्वे सर्वलोकदुःखित्वं फलं स्वनिमित्तं सर्वो लोको दुःखी स्यादिति तद्वतः पुरुषस्य फलकथनम्। संज्ञासंज्ञितत्वे पुनर्वक्ररूपत्वाभावेन यदि स्याद्रेखाख्यत्वं तदा फलान्तरम्। किं तदिति चेत्, सर्वो लोकः सुखी स्यादिति द्रष्टव्यम्। तदनुक्तमिति चेद्, न। संज्ञाशब्देन चोक्तत्वात्। कथम्। संज्ञा नाम चेतना, चैतन्यवत्त्वे च सुखसंसिद्धिः। चैतन्यस्य बलापरपर्यायस्यात्राभिधेयत्वात्। बलस्य च सुखहेतुत्वात्। अतः सुखित्वं फलं नासूत्रितम् इति ॥ ३१ ॥

एवं जिह्वोपरिगोलकगतानां रेखाणामुन्नतभागानां च फलानि दर्शितम्। तत्रैव निम्नदेशफलानि विना संज्ञाभिर्लक्षणैरेव सर्वं दर्शयति —

**निम्नता तत्र कृष्णाभा स्फुटयेद् बहुवर्तनीः।**

या तत्र कृष्णाभा निम्नता, सा बह्वीर्वर्तनीः सूचयेत्। एतदुक्तं भवति तत्र यदि कृष्णो भागः निम्नो भवेत्, तर्हि तद्वानसौ पुमान् स्त्री वा बहुमार्गो भवेत्, मार्गशब्देन विषया उच्यन्ते, बहुविषयवासी भवेदित्यर्थः। किञ्च मार्गशब्देन दर्शनमार्गोऽप्युच्यते। बहुदर्शनगामी भवेदिति तदर्थः ॥

**पीताभा यदि सैव स्यात् पित्तरोगी भवेदसौ ॥ ३२ ॥**

सा निम्नता पीताभा यदि स्यात्। तर्ह्यसौ पुरुषः पित्तरोगी भवेत्। कुत आरभ्येति चेत्, सप्तवर्षावसाने यः प्रथमो मासस्तस्मादारभ्येत्यर्थः सिध्यति इति ॥ ३२ ॥

**परुषस्पर्शा यदि स्यात् साकं फलविरोधिताम्।**
**सूचयत्यन्तरा छिन्ना अन्तकाले च सा पुनः ॥ ३३ ॥**

यदि सा तत्र निम्नता परुषस्पर्शा पूर्वोक्तया साकं स्यात्, तर्ह्यसौ[1] फलविरोधितां सूचयति। यद्यन्तरा छिन्ना सा भवेत्, तर्हि पुनरन्त-

---

1. 'तदप्यसौ' ख. पाठः.

कालं च सा सूचयति। पुनश्शब्देनैतदाह — पूर्वं भुक्तभोगस्य तदनन्तरमन्तकालं च सा सूचयति। छिन्नान्तरत्वे मध्ये मध्ये समुन्नतभागेन छिन्नत्वे सतीत्यवगन्तव्यम् ॥ ३३ ॥

एवं निम्नभागाः सफलं लक्षिताः। इदानीं कण्ठगतानां चिबुकाधोभागगतानां च रेखादीनां लक्षणादि दर्शयति —

**स्फुटा या कण्ठगा रेखा चिबुकं त्वधिगच्छति।**
**अधिगन्त्रीति विज्ञेया फलं नारकसंश्रयः ॥ ३४ ॥**

अयमर्थः — कण्ठगता या रेखा मूलादेवारभ्य चिबुकपर्यन्तं गच्छति, स्फुटा सा अधिगन्त्रीति प्रशस्ता शास्त्रेषु। किं तत्फलमिति चेत्, तदाह — फलं नारकसंश्रय इति। नारका नरकयोग्या दुष्टाः पुरुषास्तत्संश्रयस्तथोक्तः। एतदुक्तं भवति — कण्ठनालादारभ्य काचिद् रेखा चिबुकपर्यन्तं गच्छति। तर्हि तस्य दुष्टा एवाश्रया भवेयुरिति ॥ ३४ ॥

किञ्च —

**यस्तत्र निम्नभागः स्यात् सुवर्णाभः सुरोत्तमः।**
**तदा स पुरुषः प्रोक्तः फालचन्द्रवशाद् यथा ॥ ३५ ॥**

यस्तत्र चिबुकदेशे निम्नो भागः सुवर्णाभस्तेन तदाश्रयस्य पुरुषस्य सुवर्णाभाख्येन निम्नभागेन सुरोत्तमत्वं स्यात्। यथा फालचन्द्रवशात्। फाले हि यस्य चन्द्ररेखा स्फुटतरा प्रादुर्भवेत् तस्य साम्राज्यं स्यादिति हि स्थितम्। तद्वदस्यापि पुरुषस्य तत् साम्राज्यं स्यात्, यत् सुरोत्तमोपभोग्यम् ॥ ३५ ॥

किञ्च —

**यच्च तत्र स्फुटं किञ्चिदर्धचन्द्रसमप्रभम्।**
**निम्नत्वं तदपि स्वच्छं वासः सूत्रयति ध्रुवम् ॥ ३६ ॥**

यच्च तत्र चिबुके स्फुटतरमर्धचन्द्र(सम)प्रभं चन्द्रार्धप्रभया समप्रभं किञ्चित् स्वल्पनिम्नत्वं, तत् स्वच्छं वासोऽस्य सूत्रयति सूक्ष्मतरम्। एतदुक्तं भवति — चन्द्रार्धसमप्रभमर्धचन्द्राकारनिम्नत्वं स्वच्छसूक्ष्ममृदुधवलतरपटसंसर्गं सूचयतीति ॥ ३६ ॥

---

१. 'स्त एव संश्र' ङ. पाठः. २. 'न्द्राकृतिप्र' ख. घ. पाठः.

किञ्च—

यच्च वर्तुलसङ्काशं निम्नत्वं तत्र दृश्यते ।
तदपि प्रोच्चलद्भङ्गिमधुरां पटसम्पदम् ॥ ३६ ॥

यच्च पुनस्तत्रैव दृश्यते वर्तुलसङ्काशं वृत्ताकारं दृश्यते, तत्र प्रोच्चलद्भङ्गिमधुरा पटसम्पत् प्रकर्षेण उच्चलन्तीभिर्भङ्गीभिर्मधुरा पटसम्पत् । एतत् प्रमाणसिद्धम् । अतो न प्रष्टव्यमिति भावः ॥ ३७ ॥

किञ्च—

रेखाबाहुल्यमत्र स्याद् यदि यत्न¹ परो भवेत् ।
निबिडं नाम तत् प्रोक्तं मरणं तत्र कथ्यते ॥ ३८ ॥

अत्र चिबुके यदि रेखाबाहुल्यं स्यात्, तर्हि तन्निबिडं नाम कथ्यते । तत्फलं परो यत्नः । परः अनिर्देश्यः यत्नः क्लेशः स्यात् । क इति चेद्, उक्तप्रायमपि प्रकटतया ब्रूमः । यः खलु व्याधिः परमपुरुषार्थविरोधी स एव हि परशब्दाभिधेयः, परशब्दस्य सर्वोत्कर्षवाचित्वात् । तस्य च तादृशस्य सर्वातिशायित्वात् । अतः स एवात्र व्याधिर्विवक्षितः । स च रागादिरेव नान्यः, अतथाविधत्वात् । तस्य च तथाविधत्वात् । न च रागादौ व्याधिशब्दस्याप्रयोगादयोग इति वाच्यं, तथापि तस्य तदर्थत्वोपपत्तेः । यथा गङ्गायां घोष इत्यादौ तीरे गङ्गाशब्दस्य वृद्धप्रयोगाभावेऽपि गङ्गाशब्दस्य तीरा(र्थ?र्थत्वम्), एवं व्याधिशब्दस्य रागादौ प्रयोगाभावेऽपि व्याधिना कार्येण कारणलक्षणया सोऽभिधेयः स्यात् । रागकार्यत्वं च व्याधिजातस्य सिद्धम् । यथाहि कश्चित् सशल्कान् सकण्टकान् मत्स्यान् खादन् रागवशात् तत एकदैव² कण्टकादिभङ्गं लभमानः परं³तापं करोति अहो विवेकहीनोऽहं मृतोऽहं दुःख्यहं किं करोमि न जान इति प्रवदन् व्याधीनामेकायतनो रागादिवशादेव बोभूयते, एवम् अन्यत्र द्वेषवशात् । यथा कश्चिच्चोरोऽविवेकितया कस्माच्चित् प्रदेशात् कल्याणं वस्तुसर्वस्वमानीय गतस्तत्पालकैर्दर्शनमाशङ्कमानः स्वसहायभूतैः कैश्चिद् विप्रतिपत्तौ सञ्जातायां दर्शयामस्त्वां सर्वथा, नास्माकमेतत् प्रयोजनं पश्यामः । अन्यथा दैवं दर्शयिष्यति । यद्येवं नेच्छति, तर्हि त्वमेव सर्वमानीतं वस्तुजातमादाय तत्पुरतो गच्छ इत्युक्ते तदुक्तिमसहमानः

१. 'यतया' क. पाठः. २. 'तदेव' ख. पाठः. ३. 'रं ता' ख. पाठः.

अकुर्वाणश्च तद्विषयं द्वेषं लभते, द्वेषेण च किमपि कर्तुमशक्तौ सत्यां तैश्च स्वयं निदर्शिते विशेषतो द्वेषः सञ्जायते, तथापि 'किमपि स्वयमशक्ते कर्तु परितापं बहुतरं लभते, ततश्च परमव्याध्यावृतः तैरबद्धोऽप्यहतो मृतिं स्वयमाप्नोति, एवं रागद्वेषयोः सकलव्याधिनिदानभूतत्वाद् व्याधिशब्दाभिधेयता लक्षणया। अतः परो यत्न इत्यनेन स उक्तः। किञ्च परमो यत्नश्च रागादिरेव। यत्नस्य परमत्वं नाम फलोत्कर्षः। रागाद्यभिधानस्यैव यत्नस्य फलोत्कर्षः। रागादिवशात् सर्वप्रयत्नानां प्रोद्भवात्। अतो यद्यत् कर्मफलं तत् सर्वं रागादिफलम्। न च फलानि कर्मजन्यानि नित्यानि दृष्टानि येन अनया सहेतुत्वं स्यात्, किन्तु जन्यान्येव। अतो जन्यफलाय रागादिः प्रवर्तयति इति दुःखहेतुत्वमेव रागादेः, सर्वफलहेतुत्वं चेति। स परः प्रयत्नः व्याधिरूपश्च। यदि वा कुष्ठभगन्दरादिः। अतोऽपि न दोषः। तस्य परप्रयत्नत्वात्। सर्वव्याधीनां मध्ये स हि परः श्रेष्ठः, यत्नरूपश्च, यत्नहेतुत्वात्। यत्नो हि तद्विषयो महान् दृश्यते लोके तदपनोदनाय। यदि वा परप्रयत्नशब्देनाधिकतरः प्रयत्न एवोच्यते। तदनेन साहसिकः स्यात् पुरुष इत्युक्तं भवति। ननु कथमुक्तेष्वेषु फलेषु व्याख्यानविकल्पेन प्रदर्शितेषु वा लक्षणानुगतिर्घटते, विरोधात्। उच्यते। यद्यपि प्रातीतिको विरोधोऽस्ति, तथापि नैषां फलानां रागादीनां विरोधो विचारपदवीमुपारोढुमर्हति। कार्यकारणभावेन व्यवस्थितत्वादिति न किञ्चिदवद्यम्॥ ३८॥

**या कण्ठे पुटिकाकारा कर्णमूलसमुद्गता।**
**अधोमुखी प्रयत्नाख्या तथा त्वग्दोष उच्यते॥ ३९॥**

या खलु कण्ठे कर्णमूलात् समुद्गता पुटिकाकारा रेखान्तरसम्मेलनेन पुटिकाकारद्वयावभासा सा प्रयत्नाख्या रेखा; तया त्वग्दोषाख्यं कुष्ठाख्यं फलं भवति इतीष्यते विद्वद्भिः। अधोमुखित्वमप्यस्या विशेषणम्। किन्तु तस्य प्रायिकत्वमेवेति मन्तव्यम्। यदि रेखान्तरसम्मिलिता प्रायशोऽधोमुखी कर्णमूलसमुद्गता रेखा सम्भवेत्, तर्हि तस्य पुंसः स्त्रिया वा कालान्तरे त्वग्दोषो भविष्यतीत्यवसेयम्। कः कालविशेष इति चेद्, यः स्वप्ने भूयो भूयो विकारसम्भवेन पश्चात् परितापवशाद् दग्धहृदयस्य कोऽपि कोऽपि विकारः प्रादुर्भवेत्, स कालविशेषं सूचयतीत्यर्थः॥ ३९॥

---

१. 'पि क' घ. पाठः.

**या वा तत्रैव वृत्तस्था बहुशाखासमन्विता ।**
**प्रवृत्ता नाम सा प्रोक्ता तया कुक्षिरुगिष्यते ॥ ४० ॥**

या तत्रैव कण्ठे बहुशाखासमन्विता बह्वीभिः शाखाभिरुपेता, वृत्तस्था वर्तुलसंस्थानविशेषस्थिता, सा प्रवृत्ता नाम । तया कुक्षिरुक् फलं भवति इतीष्यते । पूर्वोक्तायाः सन्निधौ वर्तुलाकारा बह्वीभिः शाखाभिरुपलक्षिता उपबृंहिता च सा यदि स्यात्, तर्हि कुक्षिरोगं सूचयति । कुक्षिरोगश्च बहुविधः । स नात्र विशेषित इति ॥ ४० ॥

**या तत्र बहुवर्णाङ्गी बहुशाखासमन्विता ॥**
**कल्माषाख्या तु विज्ञेया सा गुरुत्वं प्रयच्छति ॥ ४१ ॥**

अयमर्थः — या तत्रैव बहुवर्णाङ्गी बहवो वर्णा आकारविशेषा यस्याङ्गस्य सह वर्तत इति तथा । बहुशाखासमन्विता इति व्याख्यातम् । कल्माषाख्या सा ज्ञेया । फलमाह— सा गुरुत्वं प्रयच्छतीति । गुरुत्वं गम्भीरत्वं पीनत्वं च । न वक्रत्वमभिमतम् ॥ ४१ ॥

किञ्च—

**या तत्र कण्ठदेशे सा पीताकारा प्रवर्तते ।**
**उमेति नाम तस्यास्तु फलं पर्याप्तिरिष्यते ॥ ४२ ॥**

या तत्र कण्ठदेशे पीताकारा पीतवर्णा रेखा प्रवर्तते, सा उमेति नाम । तस्याः फलं पर्याप्तिः । पर्याप्तिर्नाम तत्तदभीष्टफलसंसिद्धिः । तत्रापि विशेषोऽस्ति, फलपरमकाष्ठाविशेषसमुद्गता ये भावविशेषाः प्रभवन्ति, तत्सर्वसम्पत्तिरिति ॥ ४२ ॥

**या कृष्णवर्णा संश्लिष्टा रेखाद्वन्द्वेन सा धृतिः ।**
**यमादि सूचयेन् सा तु प्रतिष्ठां चापि तस्य वै ॥ ४३ ॥**

या कृष्णवर्णा तत्र कण्ठदेशे रेखा रेखाद्वन्द्वेन संश्लिष्टा च, सा यमादि योगाङ्गं सूचयेत् प्रतिष्ठां च । किं तद् यमादीति चेद्, ब्रूमः । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः । (समाधि)श्चित्तनिरोधः । कल्याणचिन्ता चक्षुरादीन्द्रियनिमीलनम् आत्मानं प्रति चित्तस्वास्थ्यमित्येतत् । प्रतिष्ठा इहलोकफलसिद्धिः । सा च सुखपर्यन्ता इति ॥ ४३ ॥

यच्च लोहितवर्णाभं किञ्चिदुन्नतमाश्रयात् ।
स्वभावतः परिभ्रष्टं तत्फलं स्थाननिह्नवः ॥ ४४ ॥

यच्च पुनस्तत्रैव कण्ठदेशे लोहितवर्णाभं लोहिता वर्णाभा यस्य तथाभूतम् । किञ्चित् स्वल्पम् । आश्रयात् स्वभावतः परिभ्रष्टं, स्वस्याश्रयभूतादस्थ्न इति यावत् । स्वभावतः परिभ्रष्टं श्लथितं तदुन्नतम् । उन्नतत्वं यदि भवेत्, तर्हि तत् स्वल्पनाम । तेन स्थानभ्रंशः फलं च भवेत् । एतदुक्तं भवति — यदि कण्ठे किञ्चिदुन्नतत्वं लोहितवर्णप्रकाशं, तर्हि तेन स्वल्पनाम्ना स्थानभ्रंशो भवेत् । स्थानं नाम तद्, यच्चिरकालस्थितिविषयभूतम् आस्थाबन्धविषयभूतं च । यत्र चावस्थानकाले तत एव कारणात् कण्टकचोरादिभ्यः परित्राणाय यत्तो भवति जन्तुः, यत्नाभावेन चापरित्राते तस्मिन् बहुषु अनर्थपरम्पराधिगमेषु भूयो भूयो मनः परितप्तं भवेत्, यस्य च केनापि कारणेन परिक्षतौ सत्यामात्मनोऽपि परिक्षतिर्दुर्वारा सम्भाव्यते, तदेतत् सर्वं स्थानशब्देनाभिधीयते । तस्य स्थानस्य भ्रंशः परिक्षयः । एतदाह — यथा यथा परिक्षये जाते पुनरुत्पत्तिर्न सम्भाव्यते, तथा तथा परिक्षयोऽभिप्रेतः, न कथञ्चित् परिक्षयमात्रम् । तन्मात्रेण स्थानस्य बाधाभावाद् इति ॥ ४४ ॥

या गडुः कण्ठदेशस्था धवलाकृतिरीक्ष्यते ।
सा नाम्ना धवला प्रोक्ता कदर्यत्वं भविष्यति ॥ ४५ ॥

या पुनस्तत्र कण्ठदेशे धवलाकारा काचिद् गडुरीक्ष्यते, सा धवलेति प्रोक्ता । तया लोकः कदर्यो भवेत् । कदर्यः स्वोदरमात्रपूरको भवेत् । एतदुक्तं भवति—यद्येषोक्तलक्षणा रेखा भवेत्, तर्हि तदाश्रयः पुरुषः कदर्यो भवेत् । कदर्यशब्देनैतदाह — सर्वं प्रयोजनजातं स्वार्थमेव समर्पयति, नान्यार्थं किञ्चिदपि समर्पयति । यद्यन्यार्थं किञ्चित् समर्पयति तर्हि स्वार्थमेव तत् पर्यवस्यति । यदि तथा न पर्यवस्यति तत्, तर्हि शोचति पश्चादिति सर्वदा दुरवस्थः स स्यादिति ॥ ४५ ॥

---

१. 'शाक्यं फ' क. ख. पाठः. २. 'र्हि स्व', ३. 'भविष्यति स्थानभ्रंशः प', ४. 'चयन्ति' घ. पाठः.

**क्वचिद् गडुः स्थविष्ठा चेत् कृष्णाकारा च सा पुनः ।**
**मतिभङ्गं समाख्याति भ्रंशश्चापि मतेस्तथा ॥ ४६ ॥**

यदि तत्र कण्ठदेश एव कृष्णाकारा काचिद् गडुः स्यात्, सा स्थविष्ठा चेत् स्थूलतमा चेत्, तर्हि मतिभङ्गं समाख्याति सा मतेर्भङ्गं मनोव्यापारस्य भङ्गं, तेन विचारजन्याया बुद्धेस्तत्फलस्य प्रवृत्तेश्च भङ्गं समाख्याति । मतेर्भ्रंशश्च फलं भवेत् । कीदृश इति चेद् मरुमरीचिकादिषु जलभ्रमवत्, शुक्तिकादिषु रजतादिभ्रमवद्, एकचन्द्रादौ द्वित्वादिभ्रमवच्च बोध्योऽयमित्येतादृशोऽयं सम्पद्यत इति ॥ ४६ ॥

**या कण्ठवामभागे च रेखा निम्नतरा ध्रुवा ।**
**परिस्फुरन्तं सा नूनं सूचयेत् प्रतिभागतम् ॥ ४७ ॥**

या पुनः कण्ठस्य वामभागे निम्नतरा रेखा ध्रुवा च, सा प्रतिभागतं सकलविषयप्रतिभानगतं कञ्चिद् विशेषं सूचयति । विशेषमित्यध्याहारः । एतदुक्तं भवति — यद्येषा रेखा कण्ठवामगता निम्ना अगाधतरा ध्रुवा स्यात्, तर्हि सा प्रतिभागता काचिद् व्यक्तिरपि स्यात् । सा च हृदये परिस्फुरन्तीं यां काञ्चन शब्दार्थप्रतिभानलक्षणां स्फुरणसंविन्मयीं प्रतिभां च सूचयति । तावता च पर्यवसानान्न फलान्तरसंवित्तिः फलिष्यतीति । अत्र ध्रुवेति नाम ॥ ४७ ॥

किञ्च,

**गुणानां शब्दगन्धादेर्वेत्ता भवति सः(१) पुमान् ।**
**यस्य कण्ठे कपालाख्या वृत्ताकारा प्रशस्यते ॥ ४८ ॥**

यस्य खलु कण्ठे कपालाख्या कपालसंज्ञा रेखा वृत्ताकारा केरकपालपरिमाणा प्रशस्यते प्रकर्षेण विज्ञायते, सर्वलोकै३र्भ्यस्यत इति यावत्, तस्य पुंसः गुणाः शब्दादयो विज्ञायेरन् गन्धादयश्च । यद्यपि शब्दादय इत्यनेनैव तार्किकपरिगणितानां चतुर्विंशतिगुणानां ग्रहणं शक्यते, तथापि शब्दादय इत्युक्ते गन्धान्तानां ग्रहणं मा भूदिति शब्दगन्धादेरित्युक्तम् । गुणानां पृथग्ग्रहणं किमर्थमिति चेदत्र ब्रूमः । गुणशब्देन वीर्यशौर्यप्रतापादीनां ग्रहणम् । ननु गुणग्रहणेनैव वीर्यशौर्यादीनां शब्दादीनां च ग्रहणं

१. 'क्व' घ. पाठः. २. 'अतः ध्रु' क., 'त' ख. पाठः. ३. 'रस्य क इति चेत् तस्य', ४. 'नां शब्द' घ. पाठ..

कर्तुं शक्यमेव । किमर्थं पृथक् शब्दादेरिति ग्रहणम् । उच्यते । सत्यं, गुणग्रहणेनैव सर्वेषां गुणानां ग्रहणं शक्यमेव । तथापि विजातीयत्वं शौर्यादीनां शब्दादीनां च । अतः शब्दादेः पृथग् ग्रहणम् । तर्हि किमर्थं शौर्यादीनामिति नोक्तम् । अन्यत्र शरीरप्रकरणे गुणानामित्युक्ते तेषामेव बुद्धिपदारोहणमिति ब्रूमः । यदि वा, गुणानामिति सामान्येन सर्वेषामुपादानम् । विशेषोपादानं पुनः शब्दगन्धादेरिति । तदुपलक्षणं शौर्यादेरपि इति न दोषः । के ते शौर्यादयः । किञ्च तेषां स्वरूपमिति चेद् ब्रूमः । वीर्यशौर्यप्रतापभाग्यौज्ज्वल्यकान्तिकमनीयतालक्षणाः । वीर्यं नामाप्रतिहता शक्तिः। शौर्यं नाम समसमत्वविजृम्भणी नवनवोन्मेषा तद्विशेषभूता काचिदपरा शक्तिः । प्रतापश्च श्रवण एव भयजनकत्वम् । भाग्यं च सद्यः स्मरण एव समीहितसिद्धिपात्रता। औज्ज्वल्यं दर्शनसमय एवाद्भुतविषयतायोज्यता । कान्तिः कञ्चित् कालं गत्वा पुनरद्भुतधीविषयता । कमनीयता मनोहरता इत्येवं विभागः । के ते शब्दादय इति चेत् शब्दादयश्चतुर्विंशतिगुणाः । तेषां सर्वेषां गुणानां पात्रं भवेत् । ज्ञातेत्युक्त्यापि तत्पात्रतैवोक्ता । ज्ञात्वा सम्पादनं विना कार्यान्तराभावात् । न च ज्ञानमेव प्रयोजनमिति वक्तुं युक्तम्, अपुरुषार्थत्वाद् ज्ञानस्य । ननु ज्ञानस्यापि पुरुषार्थसाधनत्वात् पुरुषार्थत्वम् । सत्यम् । अत एव गुणज्ञानस्य गुणपात्रतापर्यवसानेन फलपर्यन्तता समभिहिता इति न दोषः । ननु वीर्यशौर्यादिगुणानां पात्रत्वेनास्तु फलपर्यन्तता । तज्ज्ञानस्य शब्दादिगुणानां ज्ञानेन न किमपि स्यात् । नैतत् सारम् । शब्दादीनां ज्ञानेन भूततन्मात्राणां ज्ञातत्वेन द्रव्याणामपि नवानां ज्ञातत्वादात्मनोऽपि नवद्रव्यान्तर्भावादात्मातिरिक्तसर्वपदार्थानां ज्ञातत्वेनात्मनश्च ज्ञातत्वेन ज्ञानस्य च प्रयत्नलभ्यस्य च सिद्धत्वेन परमानन्दावाप्त्यादि फलं सुखसिद्धमिति । यदि वा शब्दादीनां गुणानां ग्रहणमुपलक्षणं द्रव्यादिपदार्थषट्कपरिज्ञानस्य । कथमिति चेद् शब्दादयो गुणा द्रव्याण्याश्रयन्तः क्रमेण स्वाश्रयभूतानि द्रव्याणि ज्ञापयन्तः द्रव्यातिरिक्तं पदार्थपञ्चकमपि द्रव्यस्थाः द्रव्यलक्षणाद्वारा तत्सम्बन्धात् तदितरपदार्थजातमपि लक्षयन्ति । अतः पदार्थषट्कपरिज्ञानेन सर्वेश्वरप्रसादादात्यन्तिकी दुःखनिवृत्तिः पुरुषार्थभूता सम्भवतीति

न काचिद् दोषकला । यदि वा शब्दादीनां ग्रहणेन सर्वविषयपरिज्ञानं सिद्धं भवति । अतः शब्दादिज्ञानस्य विषयोपभोगसाधनत्वात् तस्य च पुरुषार्थत्वात् स एवेह फलत्वेनाभिमत इति नास्ति दोष इति । न चात्र व्याख्यानविकल्पेन लक्षणस्य व्यभिचारदोष आशङ्कनीयः । व्याख्यानविकल्पोक्तानां फलानां कार्यकारणभावेन व्यवस्थितत्वात् । यदि वा विरोधाभावात् विकल्पो न व्यभिचारमावहति । समुच्चयेऽपि न दोष इत्यनुसन्धेयम् ॥ ४८ ॥

**दूर्वाकारा तु या तत्र प्रसृता प्रोर्ध्वगामिनी ।**
**तया मन्दः प्रवृत्तिः स्यात् पुरुषः कामिनी तथा ॥ ४९ ॥**

तत्र कण्ठे दूर्वाकारा दूर्वाश्यामा प्रोर्ध्वगामिनी प्रकर्षेण सम्यङ्मूलतया ऊर्ध्वगामिनी यदि वा प्रच्छादितमूला ऊर्ध्वगामिनी इत्युभयविधे ये रेखे ते स्त्रीपुरुषयोर्मन्दप्रवृत्तित्वलक्षणं फलं सूचयतः । तत्र दूर्वाकारा सम्यङ्मूला प्रसृतेति प्रसिद्धा पुरुषाणां मन्दप्रवृत्तिलक्षणं फलं सूचयति । या पुनर्दूर्वाकारा प्रच्छादितमूला प्रसृता नाम सा स्त्रीणाम् । कामिनीशब्देन कामिनीनामैवैषा सम्भवेदिति सूचयति । प्रसृतपदग्रहणं च नामप्रदर्शनायेति । मन्दप्रवृत्तित्वं च न सर्वत्र व्याप्तं मान्द्यं दर्शयति किन्तु क्वचिदेव गतम् । यत्र हि प्रवृत्तिनामप्रतिहततया स्वल्पकालनिर्वाह्यतापेक्ष्यते तत्र चिरकालापेक्षा स्यात् । यत्र पुनः कालनियमाभावेन निर्वाह्यतामात्रमपेक्ष्यते तत्र न मन्दप्रवृत्तिता । किन्तु स्वतो मन्दप्रवृत्तिता भवत्येव । विशेषमात्रं तु भविष्यति इति ॥ ४९ ॥

या तत्रैव निम्नानां भागानां सहयुक्तिः साप्युक्तमेव फलं सूचयेदित्याह—

**या तत्र बहुरेखाणां सङ्गतिः संविभाव्यते ।**
**प्रदीप्ता नाम विज्ञेया तया सम्पत् समृद्धिवत् ॥ ५० ॥**

या तत्रैव कण्ठदेशे बह्वीनां रेखाणां सङ्गतिः सम्यङ्मेलनप्राप्तिः संविभाव्यते विज्ञायते सा प्रदीप्ता नाम । तया सम्पत् फलं विज्ञायते समृद्धिवत् । समृद्धिर्नाम दिवसोपभोग्यं द्रव्यजातम् । तस्यैव शरीरसमृद्धिहेतुत्वात् । ततश्च दृष्टफलत्वात् तद्वदियं सम्पदपि भवेत् । या स्वकुलोपभोग्या स्थिरा यशस्करी सकलफलोपभोगसाधनतामियात् सेयमविच्छिन्न-

प्रवाहा प्रवर्धते। अत एव च दृष्टफलापि भवतीति समृद्धिसाम्यमस्त्येव। संविभाव्यत इत्यत्र समित्यस्योपसर्गस्यायमर्थः—कण्ठदेशे बह्वीनां रेखाणां संहतिर्न देशविशेषनियता। किन्तु यत्र कुत्रापि भवेत् पृष्ठे पार्श्वयोः पुरतो वा। तत्रापि कोणादिषु विशेषतोऽन्वेषणीया। स्वत एव दुर्गमत्वात्। अतः सम्यग् बुद्ध्या पर्यालोच्य संहतिस्वरूपं निर्णीय फलं वक्तव्यम्। तथा च तत्सम्यग्विभावनं विना तदुक्तिर्न युक्ता। अतः प्रयत्ने क्रियमाणे या सम्यग् विभाव्यते सा उक्तं फलं सूचयतीति ॥ ५० ॥

किञ्च तत्र छिन्नाः काश्चन रेखाः स्युः। तासां लक्षणमाह—

**छिन्नाः स्युः काश्चन सूताः प्रजावृद्धिं मनःस्थिताम्।**
**सूचयन्ति स्वजातिं च स्वस्थानन्दस्वभावताम् ॥५१॥**

याः काश्चन छिन्नाः छिन्नाग्रा रेखास्ताः प्रसूताः। ता यदि स्युस्तर्हि प्रजावृद्धिं सूचयन्ति स्वस्थानन्दस्वभावतां च। स्वस्थ आनन्दस्वभावश्च स एवेति तथा तस्य भावः स्वस्थानन्दस्वभावता। तां च सूचयन्ति। स्वजातिं च सूचयन्ति। का स्वजातिरिति चेद् ब्रूमः। या या स्वभावभूता स्त्रीपुरुषाणां प्रकृतिविशेषसमेषिता यत्तच्छ्रद्धालुता तामपि सूचयन्ति। सर्वस्यास्य फलत्रयस्य विशेषणं मनःस्थितामिति। मनःस्थितां प्रजावृद्धिं मनःस्थितां स्वस्थानन्दस्वभावतां च। मनस्थितत्वं नाम स्वत एव बुद्ध्युपारूढता। एतदुक्तं भवति—यदि प्रसूता नाम रेखाः स्युः कण्ठ उक्तलक्षणास्तर्हि तेषां प्रजावृद्धिरस्त्येव भविष्यति वा। प्रजाशब्दश्च सन्तातिमात्रे वर्तते। तत्रापि विशेषोऽवगन्तव्यः। येषां स्त्रीद्वारा सन्ततिवृद्धिः स्त्रिय एव सन्तातिशब्दाभिधेयास्तेषाम्। येषां पुनः पुरुषद्वारा तेषां ते सन्ततिशब्दाभिधेयाः। अथ उभयथा सन्तातिशब्दोऽभिधेयः तस्य वृद्धिः स्वमरणात् प्राक् शाखोपशाखाभेदेन नानाविधत्वम्। एवमात्मिकां प्रजावृद्धिं सूचयन्ति। स्वजातिं च उक्तरूपाम्। स्वस्थानन्दस्वभावता च सर्वेषु जन्तुषु स्थावरजङ्गमात्मकेषु यथायथमनुकम्पास्वभावता अद्वेषस्वभावता च अनुपेक्षास्वभावता च। तथाचैवंस्वभावत्वे सिद्धे स्वस्थता तावत् समुज्जृम्भते। सकलेन्द्रियाणां स्ववशगतत्वात्। तथाचानन्दस्वभावता विषयेभ्यो व्यावृत्तस्वभावत्वाद् विषयनिमित्तं दुःखसम्बन्धाभावात्। नन्वेवमपि सुखस्वभावता न घटते, धर्मत्वात् तस्याः। न। परमप्रेमास्पदत्व-

१. 'न्ति एतदुक्तं स' क. पाठः.

लिङ्गेन तत्सुखावगततया अनुमेयत्वात् । किञ्च 'सुखमहमस्वाप्सम्' इति परामर्शः सुप्तोत्थितस्य दृश्यते । तेन सुप्तौ सुखानुभवोऽस्तीति गम्यते । न च तत्र कर्मभूतानां विषयाणां सुखानुभवहेतुभूतानां सम्भवोऽस्ति । अतः सुखमेकमेवानुभूयते । न च तत्र करणान्तरमपि मनसोऽतिरिक्तमस्ति । मनसश्चेन्द्रियसहायसम्पदैव सह स्वातिरिक्तानुपस्थापकत्वम् । किञ्च तदपि बाह्येन्द्रियैः सहैव स्वप्रकृतौ लीनमेव । अतो मनसोऽपि तदाभावः । अतः स्वप्रकाशानुभावगम्यतैव सुषुप्तिसुखस्य । तथा च न कर्मतेति चेत् मास्तु । तथापि 'मामहं जानामी'ति जाग्रत्प्रत्ययवदस्तु प्रत्ययः । विशेषस्त्वस्ति । तस्य सविकल्पकत्वात् शब्दसंश्लिष्टता । अस्य तु सुषुप्तिसुखानुभवस्य न तथाविधत्वम् । करणजन्यत्वाभावात् । करणजन्यं विज्ञानं प्रत्यक्षादिशब्द-वाच्यं भवति । इदं तु न करणजन्यम् । तदानीं करणाभावात् । किन्तु स्वस्वरूपमेव । अत आनन्दस्वरूपता सिद्धा । तां च सूचयतीति । अत्र फलत्रयं समुच्चयेन योज्यं कुहचित् । ये तावद् विषयेष्वनास्थाबन्धाः, देवतादिषु च विशेषतः सक्ताः, उपभोग्यवस्तुनि मधुराद्यादौ किञ्चिदनु-रक्तमनसस्ते तैरेतैरुक्तैः फलैः सङ्गता भविष्यन्तीति तत्र समुच्चयेन फलानां सूचनम् । इतरत्र तु विकल्पेन । कथमिति चेत् कचिद् राजादौ स्वजातिं सूचयन्ति । येषां पुनः प्रजाः श्रद्धयापेक्षकसन्निधिसम्मुखीकरणमागमनं चानुवर्तन्ते तेषामुक्तलक्षणा रेखा बहुप्रजत्वं सूचयन्तीति भावः ॥ ५१ ॥

एवं कण्ठगतानां रेखादीनां लक्षणादि दर्शयित्वा कण्ठाधेयभूतशिरोगतानां लक्षणानि दर्शयति । तत्र तावत् केशानामुच्यते —

**केशास्तु परुषा येषां ते खरा इति कीर्त्तिताः ।**

येषां तावत् परुषाः केशास्ते खरा नाम । येषां च खराः केशास्ते खराः क्रूरात्मानः क्रूरमनस इति कीर्तिताः । अतस्तथा विज्ञेया इति ॥

**येषां वक्रा मृदुस्पर्शा मृदवस्ते स्मृता बुधैः ॥ ५२ ॥**

येषां पुनर्वक्राः वक्राकाराः मृदुस्पर्शाः स्पर्शने सति मृदवः केशाः ते बुधैर्दैवज्ञैर्मृदवः मृद्वात्मानः स्मृताः अवगताः । अतस्तथावगन्तव्या इ‌ते साम्प्रतिकैरित्यर्थः ॥ ५२ ॥

**येषां धूसरवर्णास्तु दीर्घास्तुङ्गा खरा मतिः ।**
**प्रवृत्तिश्च तथा तेषां विरुद्धैव स्मृतिस्तथा ॥ ५३ ॥**

येषां पुनर्दीर्घा नातिदीर्घा धूसरास्तुङ्गाः केशास्तेषां खरा मतिः प्रवृत्तिः स्मृतिश्च । एतदुक्तं भवति — मतिस्मृतिभ्यां हि लोके सर्वेषां प्रवृत्तिर्दृश्यते सर्वविषयेषु । तत्र स्मृतिर्जन्मान्तरानुभवजन्या । मतिस्तु प्रमाणजन्या । तत्र प्रथमं सर्वविषयेषु प्रमाणजन्येऽनुभवे सति मनसि कोऽपि विवेकः प्रादुर्भवति । तं च विवेकं रागादिभिः प्रेरयति । रागादिना च प्रेरिते विवेके ततः परिपोषं च गम्यमाने स्मृतिबोधकहेतुसम्पादनाज्जन्मान्तरानुभवजनिता स्मृतिरुपजायत इत्येवं मतिस्मृतिभ्यां क्रमेण जाताभ्यामिष्टानिष्टसाधनप्रवृत्तिनिवृत्ती । तद् यथा जातमात्र एव बालः प्रथमं मात्रादिबोधेऽपि जाते प्रमाणवशात् पश्चात् क्षुद्रागादिप्रेरिततया विवेके च सञ्जाते तत्पश्चात् परिपोषं च गम्यमाने जन्मान्तरानुभवजनितां कामपि स्तनपानादिस्मृतिमनुभवति । ततश्च तत्र प्रवर्तते । अन्यथा कथं तत्र प्रवृत्तिः स्यात् । अबुद्धस्याप्रवृत्तेरेवोचितत्वात् । तथैव दृष्टत्वात् । बोधमात्रेणान्यत्रापि प्रवृत्तिप्रसङ्गात् । तस्मादेवं मतिस्मृतिभ्यां तत्र बालप्रवृत्तिः । तथा च तत्सिद्धौ मतिस्मृतिभ्यामिष्टानिष्टसाधनप्रवृत्तिनिवृत्ती सिद्धे उक्ते । एवं चोक्तलक्षणकेशसम्बन्धवतां मतिखरत्वं, ततः स्मृतिखरत्वं, ततश्च प्रवृत्तिखरत्वं च स्यात् । किं तत् खरत्वमिति चेद् ब्रूमः अनुचितत्वमिति । अनुचितत्वं च विषयवैपरीत्यम् । तच्च न सकलपुरुषव्यापीति फलानां त्रैविध्यमुपपन्नम् । यद्यपि प्रवृत्तिखरत्वमेवात्र फलत्वेन वक्तव्यं, कार्यखरत्वं हेतुखरत्वं विना न घटते यतः, तथापि कार्यखरत्वदार्ढ्याय हेतुखरत्वाभिधानमिति न हेतुखरत्वाभिधानवैयर्थ्यदोषः ॥ ५३॥

किञ्च —

**जर्जरास्तु कचाः सूक्ष्माः फलं दुःखं महत् तु तत् ।**
**सूचयन्त्येव रामाणां विपरीतं तु तन्नरे ॥ ५४ ॥**

जर्जराकाराः सूक्ष्माश्चेत् कचाः स्त्रीणां तर्हि दुःखं फलं सूचयन्ति । विशेषश्च—केवलजर्जराश्चेत् तर्हि दुःखमात्रं, सूक्ष्मत्वं जर्जरत्वं चोभयं स

चितं चेत् तर्हि तन्महत् । कालतो महत्, न देशतो वस्तुतश्च, असम्भवात् । देशोपभोग्यं हि यद् वस्तु तद् देशतोऽवच्छिन्नं भवेत् । यच्च मूर्तं तद् वस्तुतोऽवच्छिन्नं स्यात् । न चोभयं दुःखे सम्भवति । देशोपभोग्यत्वाभावादमूर्तत्वाच्च । अतः कालतो महत् । तेन यावन्मृतिस्तावद् दुःखमनुवर्तत इत्युक्तं भवति । एवं स्त्रीणामुक्तलक्षणकचानां फलमुक्त्वा पुरुषाणां(तल्लक्षणवतां ?) तल्लक्षणकचानां फलमाह — विपरीतं तु तन्नरे इति । नराणां तु तत्फलं विपरीतम् । प्रत्युत सुखं सम्पद्यत इति ॥ ५४ ॥

**भस्माकाराः परागास्तु यस्य मूर्धनि[1] संस्फुटाः ।**
**तस्य नेत्ररुगत्यन्तं भवेदिति विनिश्चितिः ॥ ५५ ॥**

यस्य खलु पुंसः मूर्धनि भस्मवर्णाः पांसवः स्फुटाः सम्पद्यन्ते । स्फुटत्वं नाम विशीर्णता । विशीर्णत्वे चायं विशेषः — कण्डूयनावस्थायां पूतिमयो यथा गन्धो भवति तथा चेत् कण्डूतिं स करोतीत्ययं विशेषः । तर्हि तस्य नेत्ररुग् भवति । ननु कथं तत्र निश्चितिः । उच्यते । अन्वयव्यतिरेकाभ्यां श्लेष्मयुजां पुरुषाणां कण्डूतिपांसुमन्ति शिरांसि दृश्यन्ते । तेषां च नेत्ररोगः स्फुटं दृश्यते । अतोऽन्वयव्यतिरेकाभ्यां तन्निश्चय इति । नेत्ररोगः कीदृश इति चेद् । उच्यते । तारायाश्चन्द्राकारायाः परिवेषाकारेण कापि रेखा समुल्लसति । सा च द्रोणकुसुमसदृशी बहुशाखोपपन्ना च । शाखाः कीदृश्य इति चेदुच्यते । मण्डलाकारा काचित् प्रथमतः समुल्लसति । तद्बहिरे(खा ? का) ततोऽपि बहिरन्या ततोऽपि बहिरन्या इति तासां परस्परानुबन्धश्च भवेत् । परस्परानुबन्धो नाम कोणचतुष्टये दिक्चतुष्टये च प्रोतरेखासम्बन्ध इत्येवमेको रोगः । अपरश्चन्दनविसृतिखण्डसन्निभः पर्युषितौदननिभश्च कोऽपि समुन्नताकारः । स नयनान्तं व्याप्नोति । तेन च तिरोभूतं भवति नयनमण्डलम् । गोलका च विशकलितसिरामण्डला सम्पद्यते । तथाच रूपदर्शनासमर्थं भवति चक्षुरिति भावः ॥ ५५ ॥

किञ्च —

**पृथवो बहुशाखाश्च केशाः सन्ति कचिज्जने ।**
**तस्य मृत्युः सन्निधस्थो जङ्घा चावृतरोमका ॥ ५६ ॥**

---

1. 'र्ध्नि सदा स्फु' ख. पाठः.

अयमर्थः—केशाः क्वचिज्जने पृथवः प्रसिद्धरोमचतुष्टयपरिमितास्त-दर्धपरिमिता वा बहुशाखाः किञ्चिदङ्कुरितद्वित्रिशाखोपपन्नाः सन्ति। तं जनं मृत्युः सन्निधत्ते। सन्निधानं च तद्, यत् षट्त्रिंशद्वत्सरपर्यन्तायुष्कत्वम्। किञ्च लक्षणान्तरमप्यत्रास्ति यद् रोमावृतजङ्घत्वम्। अस्यार्थः—आवृता अङ्गीकृता रोमका रोमपङ्क्तिर्यया तथाभूता। तेन रोमकम्बलसमावृतेत्युक्तं भवति। तं च जनं मृत्युः सन्निधत्ते। यस्य जङ्घा रोमकम्बलसमावृता इति योज्यम्॥ ५६॥

अपरं च—

**यस्य केशा दीर्घतां वै गता नैव च वक्रताम्।**
**तस्य स्यात् परुषा वाचां वृत्तिर्नातिमनोहरा॥ ५७॥**

यस्य खलु पुंसः केशा दीर्घतामेव गता, न वक्रतां, तस्य परुषा वाचां वृत्तिः स्यात्। किञ्च अयुक्ता च। ततो नातिमनोहरा स्यात् सर्वपुरुषाणाम्। नापि मध्यमानाम्। युक्तियुक्ता हि वाक् सज्जनमनोनुरञ्जनी भवतीति हि प्रसिद्धम्। तस्मात् तदभावान्न सज्जनमनोनुरञ्जनीति॥

किञ्च—

**यस्य मांसलता मूर्ध्नि विद्यते तस्य निम्नता।**
**उन्नतत्वं तथा सिद्धं प्रमेहः सङ्गतो भवेत्॥ ५८॥**

यस्य मूर्ध्नि मांसलता निम्नता उन्नतत्वं च विद्यते तस्य प्रमेहः सङ्गतो भवेत् निरन्तरानुबद्धो भवेत्॥ ५८॥

किञ्च—

**यस्य केशास्तन्तुरूपा उदग्रा रक्तकम्बलाः।**
**कारास्तस्य भवेद् दोषस्तनौ बुद्धौ तु किं पुनः॥ ५९॥**

यस्य पुनः केशास्तन्तुवन्निहिता इव भान्ति उदग्राश्च उद्गताग्राः ऊर्ध्वमुखाग्रा इति यावत्। रक्तकम्बलाकाराः। तस्य दोषस्तनौ भवेत्, किमुच्यते बुद्धौ। बुद्धिकार्यत्वात् सर्वप्रवृत्तीनाम्। कोऽस्य दोषः कारणदोषेणैव विज्ञायते। अतः किमु वक्तव्यं तनौ दोषे सति बुद्धौ दोषोऽस्तीति। तस्मात् सर्वथा तथाविधलक्षणवतां दुष्टता अस्पृश्या तज्जन्मा परिहार्या भवेदिति भावः॥ ५९॥

किञ्च—

**यस्य बुद्धिविकारस्य हेतुः काचित् समुन्नतिः ।**
**शिरसि प्राप्तकल्याणः स पुमान् भवति ध्रुवम् ॥ ६० ॥**

यस्य खलु पुंसः सर्वजनबुद्धिविकारहेतुः कापि समुन्नतिः शिरसि भवेत् तस्य यदा सा प्रवर्तते तदैव वेगेन प्राप्तकल्याणता स्यात् । प्राप्तं कल्याणं येन तस्य भावः प्राप्तकल्याणता । कल्याणं स तदैव प्राप्नोतीत्यर्थः । नित्यानित्या च समुन्नतिर्दृश्यते शिरोगता । तत्र नित्या चेत् तर्हि स पुमान् कालेन प्राप्तकल्याणो भवेत् । यद्यनित्या तर्हि यदा सा समुन्नतिस्तदैव वेगेन कल्याणं प्राप्नोति । यद्यव्याधिमूलः समुन्नतिविशेषस्तर्हि । अन्यथा व्याधिविशेषमूलत्वे समुन्नतेर्न किञ्चित् फलम् । यदि वा व्याधिरेव प्रोज्जृम्भते इति सम्भवति वा फलम् । समुन्नतिश्च न गडुरूपा सम्भवन्त्यत्र विवक्षिता । किन्तु चतुरश्रपरिमाणा त्रिकोणपरिमाणा दण्डाकारा वा कपोतपक्षपरिमाणा वा काकपक्षपरिमाणा वा गिलिगिलिपक्षपरिमाणा वा । तेष्वेतेषु पक्षेषु तद्वर्णताप्यपेक्ष्यत इत्यवगन्तव्यम् । कल्याणं च न सामान्यमत्र विवक्षितम् । येनाविशेषविवक्षया कल्याणविशेषेष्वन्यतमोऽत्र फलं स्यात् । किन्तु विशेषविवक्षया । कल्याणविशेषः स क इति चेद् उच्यते । कल्याणं हि शुभम् । शुभं च सर्वस्माच्छुभजाताद् यदधिकं तत् तच्छब्देनाभिधातुं योग्यम् । अधिकं च सर्वस्माच्छुभान्निरुपाधिकसुखजनकम् । तच्च पुत्रजन्मैव । ननु कथं पुत्रजन्मनो निरुपाधिकसुखहेतुत्वेन परमशुभत्वं वक्तव्यं स्याद् । उच्यते । निरुपाधिकत्वादेव तज्जन्यसुखस्य । अन्यजन्यसुखस्य सोपाधिकत्वाच्च । ननु भिन्नरुचीनां लोकानां यद्यदभिमतं तत् तस्य सुखहेतुः । अतस्तदेव शुभतममिति चेत् । सत्यम् । तथापि सर्वेषां पुत्रजन्मन्यविवाद एव निरतिशयसुखहेतुत्वे । किञ्च परलोकादिहेतुत्वेनापि पुत्रजन्मनः सुखहेतुत्वम् । अतोऽपि तदेव शुभतमम् । किञ्च यदि प्रियासुखप्रसवादेः सुखहेतुत्वमुच्यते तदापि न दोषः । प्रियासुखप्रसवस्य निरतिशयसुखहेतुत्वाभावात् । तस्मात् पुत्रजन्मैव कल्याणशब्देनाभिधीयते इति ॥ ६० ॥

एवं तावत् कण्ठादुपरिभागगतानां रेखासमुन्नत्यादीनां लक्षणानि प्रदर्शितानि । इदानीं कण्ठगतानां तेषां लक्षणादि दिदर्शयिषुराह —

**कण्ठे या पृथुला पीताकारा शाखाद्वयान्विता ।**
**समुन्नतिः स्फुटतरा तया सर्वो लभेत शम् ॥ ६१ ॥**

या पुनः कण्ठगता पृथुला शाखाद्वयान्विता पीताकारा समुन्नतिः तया सर्वो लोकः शं लभेत। शं नाम न वैषयिकं शं किन्तु, कर्मजनितम्। तच्च देशकालादिवस्त्वपेक्षया भवति। न का(र)णोत्तरादिति ॥ ६१ ॥

किञ्च —

**या तत्र क(ण्ठ? ण्ठे) रोमाणि व्याप्य तिष्ठति सूक्ष्मकृत्।**
**तया सर्वो हि लोकः स्यात् काणः क्लीबानुसार्यपि ॥ ६२ ॥**

यस्य पुनः कण्ठे काचिद् रेखा रोमाणि व्याप्य तिष्ठति सा सूक्ष्मकृन्नाम। तया सर्वो लोकः काणः स्यात्। किञ्च सः क्लीबानुसार्यपि स्यात्। क्लीबं नामोत्पादनाक्षमं वस्तु। तदनुसार्यपि पुरुषः स्यात्। एतदुक्तं भवति — समग्रता यद्यस्या उक्तलक्षणायाः स्यात् तर्ह्युक्तं फलमपि भवेदिति ॥ ६२ ॥

किञ्च —

**सधर्मा सा यदि भवेज्जर्जरा तनुरप्यसौ।**
**तया मूर्तिं लभेल्लोकः प्रशस्तश्च ध्रुवं भवेत् ॥ ६३ ॥**

या खलु कण्ठगता जर्जराकृतिः सूक्ष्माग्रा रेखा सा सधर्मा नाम। तया लोकः मूर्तिं लभेत्। लोकः प्रशस्तश्च भवेत्। ननु कुतः प्रमाणादेतन्निर्णयः। न तावदन्वयव्यतिरेकाभ्यां तदवगम्यते, तयोरदर्शनात्। नापि प्रमाणान्तरात्, तस्यासम्भवाद्। उच्यते। अन्वयव्यतिरेकौ तावत् प्रमाणमेव। तयोरेवास्मिन् विषये प्रमाणत्वात्। ततश्च न प्रमाणान्तरगवेषणा-(न?)वकाशोऽस्ति। एतेन पक्षान्तरमपि निरस्तं वेदितव्यम् ॥ ६३ ॥

किञ्च —

**निम्नो भागो यदि भवेद् रेखामात्राकृतिः स्फुटा।**
**न सम्यग् विदितं यत् तत् साम्राज्यं तु ध्रुवं भवेत् ॥ ६४॥**

या पुनः कण्ठगता स्वच्छमृद्वाकारा स्वच्छा च मृद्वाकारा चेति तथा रेखा यदि भवेत्, तर्हि सास्य पुंसस्तत् फलं सूचयेत्। यन्न सम्यग् विदितं न सम्यक् प्रथितं फलम्, अमङ्गलमिति यावत्, तद् भवेत्। यदि सा रेखा निम्नो भागः स्फुटाकृतिश्च भवेत्, स्फुटा आकृतिराकारो यस्याः सा तथा, तर्ह्येतदेवममङ्गलाख्यं फलं भवेत्। यद्येतदेवं न स्यात् तर्हि फलविशेषं दर्शयति — साम्राज्यं तदा ध्रुवं भवेत्। भवेद् ध्रुवमिति वा यो-

जना । तदा निश्चयार्थो ध्रुवशब्दः । पक्षान्तरे तु नित्यार्थः । अत्र स्फुटाकारेति नामेत्यवगन्तव्यम् । ननु कथं साम्राज्यं फलमस्या रेखाया उच्यते । सामान्येन साम्राज्ययोग्यताया: सर्वत्राभावात् । नैतद् युक्तम् । साम्राज्यस्य यल्लक्षणं तद् यद्यन्यत्र ब्राह्मणादावपि स्यात् तर्हि तत्रापि तत् स्यात् । लक्षणस्य बलवत्त्वात् । किं तद् बलवत्त्वमिति चेदत्र ब्रूमः । लक्ष्यव्यापकत्वमिति । ननु तदेवासिद्धमिति चेद् न । व्यापकत्वं विना लक्षणस्य लक्षणत्वस्याभावात् । ननु मास्तु लक्षणस्य लक्षणत्वम् । नैतदपि समञ्जसम् । आप्तवचनविरोधात् । आप्तवचनं हि शास्त्रम् । तस्मिंश्च समर्थितमेतत् । अतो लक्षणत्वमङ्गीकर्तव्यमेव । लक्षणत्वे च सिद्धे तस्य व्यापकत्वात् । अतश्चोक्तचोद्यानवकाशः । यद्वा, साम्राज्यशब्देन क्षत्रियादन्यत्र तदभीष्टं स्थानविशेषमात्रमभिधीयते । यदि दृश्येत तत्, तदा तु लक्षणस्य न दोषः, व्याप्तिश्च ॥ ६४ ॥

किञ्च,

**या प्रभित्तिः कण्ठगता वर्तुला मांसलस्पृशा ।**
**तया मेधाख्यया सम्यग् ध्रुवं जानाति च्छिद्रकम् ॥ ६५ ॥**

अयमर्थः — या कण्ठगता मांसलस्पृशा प्रभित्तिः प्रभेदः वर्तुला वर्तुलसंस्थानविशेषा सा मेधा नाम । तया सम्यक पदच्छिद्रज्ञो भवेत् पुरुषः । ध्रुवमसंशयमित्यर्थः ॥ ६५ ॥

किञ्च,

**प्रभित्तिरधिका चेत स्याद् दीर्घाकारा मदश्च्युता ।**
**सहैव भागशेषेण तत्तदासौ सुखी भवेत् ॥ ६६ ॥**

यदि पुनः प्रभित्तिः प्रभेदः पूर्वोक्तलक्षणाया अधिका चेत् स्याद् दीर्घाकारा च, यदि च मदश्च्युताख्येन भागविशेषेण सह स्याद् संहिता च स्यात् तत्तर्हि स पुमान् सुखी भवेत् नित्यसुखी स्यादित्यर्थः ॥ ६६ ॥

एवं तावद् भूयोऽपि कण्ठगतानां रेखाणां लक्षणादीनि दर्शितानि । सम्प्रत्युरःस्थलगतानि रेखादीनि तल्लक्षणं च कथयति—

**उरःस्थलं विशालं स्यान्नातिकर्कशमांसलम् ।**
**तत्र मध्ये तु यो भागो निम्नः स्यात् तेन रोगवान् ॥ ६७ ॥**

यन्नातिकर्कशमांसलं विशालं स्यात् कर्कशत्वं मांसलत्वं चोभयं समग्रं न युक्तं, किन्तूभयं किञ्चित् किञ्चिदपेक्षितम्, एवम्भूतं विशालं वक्षः वक्षःशब्दवाच्यं भवेत्, तत्र यो मध्यदेशे निम्नो भागः स न युक्तः रोगवत्त्वापादकत्वात्। यद्ययं निम्नो भागः स्यान्मध्यगतः तर्हि असौ रोगवान् स्यादेव इति नियतमेतत् फलम्। ननु वक्षःशब्देन कः प्रदेशोऽभिधीयते। उच्यते। स्तनादुपरि कण्ठादधस्तात् प्रदेशः। ननु तर्हि मध्ये निम्नभागो दुर्वारः स्यात्। तथाच तत्कृतो दोषोऽपि तथा स्यात्। नैतद्युक्तं, मध्यशब्देनात्र श्लोके कण्ठधिष्ण्यभूतास्थ्नोऽधस्तात् चतुरङ्गुलं गत्वा यो मध्यभागः स उच्यते यतः, अतो न दोषः कोऽपि समापतति। ननु तर्हि तस्य भागस्य कथं मध्यशब्दवाच्यत्वं, डित्थादिशब्दवत् स्यादिति चेन्न तथा सति लोकप्रसिद्धिविरोधात्। लोके हि (न?) मध्यादिशब्दो न डित्थादिशब्दवद् यदृच्छया प्रयुज्यते। अपितु गवादिशब्दवत् पाचकादिशब्दवद्वा अर्थयोगादेव प्रयुज्यते इति। नैतत् सारम्। अत्राप्यर्थवत्तया मध्यशब्दप्रयोगोपपत्तेः। तथाहि— द्विधा हि मध्यशब्दप्रयोगः। भागचतुष्टयस्य यो मध्यमो देशः स एकः प्रकारः, भागद्वयस्य यो मध्यमः प्रदेशः स एकः, इति। तदत्रापि भागद्वयस्य पूर्वाधरभागयोर्यो मध्यस्थो देशः स मध्यशब्देनोच्यत इति न कोऽपि दोषः। यदि वा, कण्ठाच्चतुरङ्गुलं गत्वा स्तनमध्याच्चतुरङ्गुलमुपरि च गत्वा यो मध्यदेशः तस्य स्तनद्वयपार्श्वयोरप्युभयतो गत्वा चतुरङ्गुलं मध्यदेशत्वमस्त्येव इति न काचिद् दोषक्षतिः॥ ६७॥

**दक्षस्तनस्योपरिसन्निवेशे**
**वर्णप्रभेदः क्वचन स्फुरेद् वा।**
**तर्ह्यत्र चित्रं महदेव भूयः**
**स्यादेव नास्त्यत्र विचारयोगः॥ ६८॥**

अयमर्थः—दक्षिणो यः स्तनस्तस्योपरिसन्निवेशे उपरिभागे कश्चिद् वर्णप्रभेदो वर्णविशेषः नीलादिष्वन्यतम इति यावत्। क्वचन पुंसि स्फुरेद् वा स्फुरेच्चेत्, तर्हि अत्र पुंसि भूयो भूयो महदेव चित्रमाश्चर्यकर्म स्यादेव। ननु क्वचित् स्यात् क्वचिन्न स्यादिति चेन्मन्यसे अत्राह— नैवात्र विचारयोगः। अत्र अस्मिन्नर्थे विचारयोगः विचारसम्भवः नैव स्यादिति।

१. 'तस्सा रो' घ. पाठः

अयं भावः—यस्य यस्य पुंसः स्त्रिया वा दक्षस्तनोपरि कोऽपि वर्णविकारस्तस्य तस्याश्चर्यवत् कर्म भवति भूतं च भविष्यति च । यथा भगवतो नारायणस्य श्रीलक्ष्माख्यवर्णविकारयुक्तस्य । यथा वा भविष्यतः कल्किरूपस्य तस्यैव । तस्मादधुनापि तथैव भवितव्यम् । नन्वेकत्रैतद्दर्शनेन कथं सर्वथा तत्कल्पना युक्ता वक्तुम् । अत्र ब्रूमः । एकस्मिन् विष्णौ तल्लक्षणदर्शने सर्वातिशायि विचित्रं कर्म दृष्टम् । तस्मादन्यत्रापि वैचित्र्यमात्रयुक् कर्म भविष्यतीति वक्तुं युक्तम् । न केवलं विष्णौ तल्लक्ष्म तथाविधं च कर्म दृश्यते, किन्तु अन्यत्रापि दृश्यते । बहुषु च प्रदेशेषु दृश्यते । तस्माद् युक्तमुक्तमिति ॥ ६८ ॥

**वामस्तनस्योपरिसन्निवेशे**
**वर्णप्रभेदो यदि दृश्यते चेत् ।**
**तर्ह्यत्र भूयः सकलं विचित्रं**
**नश्येत नास्तिक्यधिया स्वयं च ॥ ६९ ॥**

अस्यार्थः—वामस्तनस्योपरिदेशे यद्यमुक्तविधो वर्णविकारो दृश्येत चेत् तर्हि अत्रास्मिन् पुरुषे भूयो भूयः पुनः पुनर्विचित्रं महत् कर्म नश्येत । किञ्च नास्तिक्यधीः स्वयं जायते । ततो हेतोः स्वयमपि पुरुषो नश्येत् । अत्रापि नास्त्यत्र विचारयोग इत्येतदनुषञ्जनीयम् ॥ ६९ ॥

किञ्च,

**यदि वर्णप्रभेदस्य सम्बन्धी कोऽपि तत्परः ।**
**वर्णभेदः प्रदृश्येत तर्हि श्रीशालिता भवेत् ॥ ७० ॥**

एषोऽर्थः—यः कोऽपि दक्षस्तनस्योपरि वर्णविकारस्तत्सम्बन्धी कोऽपि वर्णविकारः स्याच्चेत्, (तर्हि ?) स च तत्परः तस्मात् प्रकृतात् परः अन्यः, तर्हि श्रीशालिता भवेत् श्रीमानसौ पुरुषः स्यात् । यदि दक्षस्तनस्योपरि यो वर्णविकारस्तत्सम्बन्धी तद्विपरीतः कोऽपि वर्णविकारः स्याच्चेत् तर्हि प्रवृद्धसम्पदयं पुरुषः स्त्री वा स्यादिति तात्पर्यम् ॥ ७० ॥

**वर्णद्वयस्य सम्बन्धे तेन दुष्टः पुमान् भवेत् ।**
**स्त्रीणां तु नैतदेवं स्याद् विपरीतार्थसम्भवात् ॥ ७१ ॥**

अयमर्थः–वर्णद्वयस्य यदि सम्बन्धो भवेदाद्येन वर्णेन दक्षस्तनोपरिभागे पूर्वोदितेन तेन, तर्हि पुरुषस्य दुष्टता भवेत् । स्त्रीणां चेदेतदेवं न

स्याद् , यत् पुरुषाणां तल्लक्षणस्य फलत्वेनोदितम् । कुतः । विपरीतार्थ-सम्भवात् । दुष्टतालक्षणो योऽर्थः तस्य विपरीतो योऽदुष्टतालक्षणोऽर्थस्तस्य सम्भवात् । शुद्धतालक्षणस्यार्थस्य सम्भवादिति यावत् । एतदुक्तं भवति—दक्षिणस्तनस्योपरि वर्णत्रयसन्निवेशो यदि भवेत् पुरुषाणां तर्हि महापातक-दोषाणां सम्बन्धः स्यात् । तेषु वान्यतमसम्बन्धो नियतः । स्त्रीणां तु नैत-देवम् । कथमिति चेद् दक्षस्तनस्योपरि वर्णत्रयसम्बन्धे शुद्धिरेव स्यात् । कीदृशी सेति चेद् , महापातकसम्बन्धव्यावर्तनप्रदर्शिनीति ब्रूमः । तस्मात् तत्र वर्णत्रयसम्बन्धः पुरुषाणां दोषसूचनाय । स्त्रीणां तु न, प्रत्युत तद्वि-परीतसूचनायेति ॥ ७१ ॥

**मध्ये पिटकसम्बन्धः पुरुषाणां शुभावहः ।**
**स्त्रीणां तु कनकस्पर्धी तदधस्तु प्रमापकः ॥ ७२ ॥**

अयमर्थः—पुरुषाणामुरोमध्ये यदि कश्चित् पिटकसम्बन्धः सम्भवेत् तर्हि स शुभावहः । स्त्रीणां तु स नियमेन कनकाय स्पर्धते । कनकोद्भवं प्रतिबध्नाति । कनकशब्देन कुप्याकुप्यद्वयमुच्यते । तदुद्भवं नियमेन प्रति-बध्नाति । पुरुषाणां तु यद् यदिष्टं हितं च तत् सर्वं सम्पादयति । तद्धि सुखम् । तस्मात् पुरुषाणां तत्सम्पत्तिर्युक्ता । स्त्रीणां तु न युक्ता । शुभा-शुभफलहेतुत्वादिति । तदधस्तु प्रमापकः । मरणसूचक इत्यर्थः । नन्वेत-दपि लक्षणं पुरुषगतं प्रतीयते । न च पुरुषमात्रस्यैतल्लक्षणम् । अन्यत्रापि दर्शनादिति । सत्यम् । (न) पुरुषमात्रस्यैतल्लक्षणम् । किन्तु स्त्रीणामपि । तर्हि को विशेष इति वक्तव्यम् । अत्र वदामः । तदधस्तात् स्थितत्वेऽपि पार्श्वयोः शाखाद्वयं स्वरूपभूतमपेक्षते । न केवलं तदेव, अपितु विशेषा-न्तरमपि । तत् किमिति चेद् ब्रूमः । यदंसद्वयेऽपि पिटकद्वयसम्बन्धित्वं तदेवेति । यदि वा प्रमापक इत्यस्यार्थान्तरं — प्रमापको ज्ञापक इति । तत्राध्याहारश्च कर्तव्यः । स च बलात् सिध्यति सर्वस्यापीति । न च सर्व-ज्ञतात्र विवक्षिता । अपितु प्रायिकी सर्वज्ञता । तेन यत्र यत्र बुद्धिप्रवेशाय यत्यते तत्र तत्र प्रसृतबुद्धितया झटिति तद्विषं(यं ?)यावबोधः स्फुटतरं जृ-म्भते प्रतिभादिलक्षणैः । न च झटित्युत्पत्त्या झटिति विनाशः । प्रमोष-

१. 'म्पद्यते ।' क. पाठः.

गन्धासहत्वात् तत्पुरुषाद्रेः । तथा चैतल्लक्षणवतां पुरुषाणां स्त्रीणां च तद्वतीनां विवक्षितविशेषवत्त्वे ज्ञानलाभः सर्वविषयः प्रायेण भवति । मरणं च भवत्यचिरेण । ननु तत्राचिरकालशब्देन कियत्पर्यन्तं वयो गत्वा मरणमादिश्य(ते ।) अत्र ब्रूमः । यावत् तत्प्रतिभादिलक्षणो (दो ? विशे)षः सर्वविषयः परमकाष्ठां गत्वा स्वकार्यभूतां गुणगणविवेचनमयीं कीर्तिमातनोति तावदायुःस्थितिः । तस्यां च कीर्तिलाभसन्तुष्टौ जातमात्रायां मरणमादिश्यत इति ॥ ७२ ॥

**यस्य हाराख्यरेखा(तु ? या) विच्छित्तिः परिलक्ष्यते ।**
**स्थानत्रये तस्य मृत्युर्नित्यसन्निहितो ध्रुवम् ॥ ७३ ॥**

यस्य खलु पुंसो हाराख्यरेखा(तु ? याः) त्रयो भङ्गाः स्फुरेयुः स्फुरन्ति च तस्य मृत्युर्नित्यसन्निहितः । अत्र न किञ्चित् संशयकारणमस्ति । एतदुक्तं भवति—हाररेखाणामविच्छेदपरिवृत्ततात्यन्तमपेक्षते । तत्र यदि त्रयो भङ्गाः सम्भवेयुर्दृश्यन्ते वा तर्हि स नियतरोगी भवेत् । नियतरोगिणां पुरुषाणामायुर्नित्यसन्दिग्धम् । तदिदमुक्तं नित्यसन्निहितो मृत्युरिति । केषाञ्चित् पुनरेतासां रेखाणां त्रयो भङ्गाः सम्भवेयुः । किं तल्लक्षणमिति चेच्छृणु, वदामः । यत् तासामेव रेखाणां कण्ठसन्निधौ निम्नत्वं वक्षसि चानिम्नत्वम् एतदेव तल्लक्षणम् । तथाच येषामेतल्लक्षणं दृश्यते हाराख्यरेखाभङ्गसूचकं येषां च तद् भङ्गत्रयं दृश्यते तेषां सर्वेषां नित्यरोगितया तद्भङ्गाशङ्कया तदायुर्भङ्गभयाच्च तत्साधनाय नित्यप्रयत्नः कार्यः । अन्यथा मतिमद्भिरपि पुरुषैस्त्यक्तमेवायुर्भवेदिति ॥ ७३ ॥

**यस्य कृष्णमुरः साक्षाद् धवलाकारयोगिनः ।**
**तस्य शुक्रं भवेदल्पमिति ब्रूयात् प्रसाधने ॥ ७४ ॥**

एषा योजना—यस्य[1] खलु पुंसः साक्षाद्धवलाकारस्य वक्षः कृष्णं तस्य शुक्रं प्रति अल्पं भवेदिति वचनं ब्रूयात् । कदेति चेदाह—प्रसाधन इति । प्रसाधने गर्भाधाने पृच्छ्यमान इत्यर्थः । ननु किं तदल्पं भवेद् । उच्यते । अत्र हि गर्भाधानं पृष्टम् । उत्तरवचनं च शुक्रविषयं तदाधातुः । तथाच शुक्रप्रयोज्यं यद् वस्तु गर्भरूपं पुंलक्षणं प्रष्टुः समीहितं तदेवाल्पमित्युत्तरवादिना वक्तुं युक्तम् । अतस्तदेवोक्तमत्राल्पमिति । न चान्य-

---

१. 'स्यैवं व' इ पाठः.

दाशङ्कनीयम् । प्रश्नोत्तरयोर्वैयधिकरण्यप्रसङ्गात् । किञ्च शुक्लस्यैवाल्प(त्व)मत्रोक्तं, तथापि तत्कार्यभूतस्य गर्भे वस्तुनोऽल्पत्वं सिध्येत् । किं तदल्पत्वमिति चेदाभासत्वमिति ब्रूमः । आभासत्वं चाकार्यकरत्वम् । नन्वकार्यकरत्वाभासत्वे जनित्वा मातापित्रोर्मरणात् प्रागेव स्वनाशेन भाव्यमित्येव नियमः, न जन्मनः प्रागिति, न च जन्मानन्तरमिति च, न च जातमात्र इति च । तस्मादयोगः विवक्षितसिद्ध्यभावात् । न । आभासत्वस्य तावन्मात्रेणासिद्धेः । आभासत्वं हि अकार्यकरत्वमिति सर्वसिद्धम् । कार्यं चात्र गर्भसम्पाद्यं पित्रादिविषयं बह्वस्ति । प्रथमं तावद् गर्भे सञ्जाते काप्यपरिमिता प्रीतिः सञ्जायते, तदनन्तरं तत्परिपूर्णतया । ततो जन्मानन्तरं पुत्रमुखदर्शनादिनिमित्तम् । ततस्तत्क्रमणादिनिमित्तम् । एवं बहुकार्यता । तदेतेषु नामकरणात् प्राक्तनेषु कार्येषु गर्भजन्ममात्रव्यतिरिक्तेषु अन्यतमभूतं यत् कार्यं तदेकमपि न भवितुं युक्तमित्येतदाभासत्वमभिमतम् । एवं च न विवक्षितासिद्धिरिति ॥ ७४ ॥

**यस्य वक्षःपृष्ठभागे कृष्णा रेखाः समुद्गताः ।**
**समुद्गताख्यास्तस्य स्यात् सर्वत्रापि पराजयः ॥ ७५ ॥**

अयमर्थः—यस्य खलु पुंसः पृष्ठे उरःप्रतियोगिभागे याः समुद्गता रेखास्तास्समुद्गता इत्यवगन्तव्याः । तत्फलं यत्र यत्र तत्प्रवृत्तिस्तद्गतः पुरुषस्य तस्य तत्र सर्वत्रापि पराजयः । स्त्रीणां तु एतल्लक्षणं विपरीतं फलं सूचयति । तत्र कश्चिद् विशेषोऽवगन्तव्यः । ऊर्ध्वगामिन्यः अधोगामिन्यश्च रेखाः सम्भवेयुः । तत्रोर्ध्वगामिन्यश्चेत् तर्हि न पराजयः स्यात् । अधोगामिन्यश्चेत् तदुक्तं फलं नियतमेव । स्त्रीपक्षे तु अधोगामिन्यः शुभं सूचयन्ति । ऊर्ध्वगामिन्यस्तु विशेषशुभजातं सूचयन्तीति । ननु कथं सर्वस्यापि प्रवृत्तिविषयस्य फलं पराजयः स्यात् । या जयार्था प्रवृत्तिस्तस्या एव पराजयः फलमेतद्रेखावतां स्यान्नान्येषामन्यत्रेति । सत्यं, तस्यापि प्रवृत्तेः फलाय हि क्रियते । तथा च तदसिद्धौ पराजय एवेति तदुक्तेरयुक्तता न वक्तुं युक्तेति समञ्जसम् ॥ ७५ ॥

इति स्कान्दशारीरके षष्ठोऽध्यायः ।

---

## अथ सप्तमोऽध्यायः ।

वर्तमानर्क्षपर्यन्तेष्वश्विन्यादिषु योजयेत् ।
वारांस्तिथींश्च तां सङ्ख्यां गुणयेच्च पृथक् क्रमात् ॥

द्वाभ्यां त्रिभिश्चतुर्भिश्च सप्तषट्काष्टभिः क्रमात् ।
निश्शेषहरणेष्वेषु त्रिषु यात्रा न शोभना ॥

आदिशून्ये महत्पीडा मध्यशून्ये महद् भयम् ।
अन्त्यशून्ये महद्धानिस्त्रिशून्ये मरणं भवेत् ॥

त्रिस्थानं शून्यरहितं सर्वत्र विजयी भवेत् ।
वर्तमानर्क्षपर्यन्तं जन्मर्क्षाद् गुणयेद् बुधः ॥

चतुर्भिर्गुणयेत् सङ्ख्यां शुक्लप्रतिपदादितः ॥
तिथयस्तत्र संयोज्या वाराः सूर्यादयस्तथा ।

विभजेन्नवभिः शेषैः फलं तत्र समादिशेत् ॥
तापं कान्तिं मृतिं लक्ष्मीं श्रियं सौख्यं यशः कलिम् ।

बहुचिन्तां क्रमान्नृणां ब्रूयादत्र दिने दिने ॥
लग्नाद् वैनाशिकक्षेत्रसंस्थिते गुलिकेऽर्कजे ।
भे मदृष्टेऽथवा युक्ते तद्दशान्ते मृतिं वदेत् ॥

पश्चाङ्गघटिकायुक्ता योजयेद् राशिनाडिकाम् ।
संयोज्य गुलिकस्यापि नाडिकार्कविभाजिता ॥
शेषराश्यष्टमाधीशदशान्ते मरणं वदेत् । (?)

एवं तावत् कण्ठादूर्ध्वगतानामन्तर्बहिर्भागगतानां च रेखादीनां लक्षणादीनि दर्शितानि । स्तनोर्ध्वगतानां लक्षणानि तत्फलानि च सर्वाण्युक्तानीति प्रायशो मत्वा तदर्वाग्गतानां लक्षणादीनि (दि)दर्शयिषुः प्रथमं हृत्पृष्ठयोर्लक्षणादि दर्शयति, तद्गतानां च —

**तदेव हृदयं प्रोक्तं यत् तत् (पृष्ठ? पद्म)समस्थिति ।**
**तत्पृष्ठं च तदेव स्याद् यदृजु स्थिरमायतम् ॥ १ ॥**

अयमर्थः — यत् पद्मसमस्थिति पद्मेन समा स्थितिरवयवसंस्थितिरवयवसंस्थानं यस्य तत् तथाभूतम् । हृदयं तद्विद्भिः प्रोक्तम् । पद्मसाम्यं

च गुणैः कोमलत्वमनोहरत्वस्निग्धत्वाख्यैः वृत्ताकारेण च । न च स्निग्धत्वं तैलादौ साधु, अतस्तत्साम्यमत्रापेक्षितव्यमिति युक्तं वक्तुम् । यावन्मात्रं पद्मगतं स्निग्धत्वं तस्यैवात्रापेक्षितत्वात् । यच्च स्थिरमायतमृजु स्निग्धत्वं तदेव च तत्पृष्ठं नान्यत् । एतल्लक्षणमुत्तमहृदयभागतत्पृष्ठयोः । मध्यमानां तु गुणैकदेशयोगो हृदयतत्पृष्ठयोः । अधमानां तु हृदयतत्पृष्ठयोरुदीरितलक्षणगन्धोऽपि नास्त्येवेति ॥

तद्गतरेखादिलक्षणमाह --

**तद्गता पृथुला वृत्तास्थिताः कण्डूतिसंश्रया ।**
**तया सर्वोऽपि लोकः स्याद् वशे वश्यस्तु भीतिकृत् ॥**

अस्यार्थः— तस्मिन् हृदये पृथ्वाकारा वृत्तसंस्थितिः कण्डूतिसंश्रया नाम । कण्डूतिसमाश्रयत्वं विशेषणं च न नाममात्रम् । तया रेखया सर्वो लोको वशे भवेत् । यदि कोऽपि वश्यो भवेत् तर्हि स भीतिकृत् स्यात् । वशभवनस्य वश्यत्वस्य च को विशेष इति चेद् उच्यते । स्वत एव यद् वशेभवनमिष्टकारित्वं तद् वशेभवनं विवक्षितम् । यच्च प्रवृत्तिवशाद् वशेभवनमिष्टकारित्वं च तद् वश्यत्वमिति । तत्र यदि कश्चिद् वश्यो भवेत् तर्हि स नित्यं भीतिकृत् स्यात् । कथम् । नन्वयं मम सर्वमेव पुरुषार्थं साधयितुं समर्थः । तस्मादयं वश्यो नु स्यात् किं वा नेति भयपरवशहृदयतया सुखं न कदाचिल्लभेतेति ॥ २ ॥

**तत्पृष्ठे श्लक्ष्णवर्णाः स्युस्तिस्रः काञ्चन दीपिकाः ।**
**ताभिरन्तो भवेन्नूनं निजवस्तुसमाश्रयः ॥ ३ ॥**

तस्य हृदयस्य यत् पृष्ठं तत्र याः श्लक्ष्णाः शोभनवर्णास्तिस्रः काञ्चन रेखाः ता दीपिका इत्युक्ताः । ताभिः सर्वस्यापि निजवस्तुनः अन्तो विनाशः स्यात् । नात्र संशयकारणमस्ति । ननु सर्वस्यापि निजवस्तुनोऽन्तमेताः कथं सूचयन्ति । देहादेरपि निजवस्तुत्वात्, तस्य च मोक्ष एव विनाशात् । मोक्षश्चेत् स्यात् तर्हि इष्टसिद्धिरेव सूचिता स्यात् । नैतद् युक्तम् । निजशब्दस्यात्र सङ्कुचितवृत्तित्वात् । तत् कियद् वस्तु तेनोच्यत इति वक्तव्यम् । उच्यते । तदभिमततरं पुत्रव्यतिरिक्तं प्रियावस्त्रादि वस्तु तदेव निजवस्तुशब्देनोच्यते । तथाच न कोऽपि प्रसङ्ग आपततीति ॥ ३ ॥

**निम्नस्तु पृष्ठभागश्चेत् प्रसिद्धिं सूचयत्यसौ ।**
**गुणलोपश्च तत्र स्याद् यदि कण्डूतिसम्भवः ॥ ४ ॥**

अस्यार्थः—तत्र पृष्ठे यदि कश्चिन्निम्नो भागः स्यात् तर्ह्यसौ प्रसिद्धिं सूचयति भाविनीम् । प्रसिद्धिश्च गुणख्यातिरेव । तथाच न दोषानुषङ्गः । एषा सूचयतीत्युक्तं भवति । किन्तु तत्र निम्ने भागे यदि कण्डूतिसम्भवस्तर्हि गुणलोपश्च स्यात् । कस्य गुणस्य लोप इति चेद्, उच्यते । न वीर्यशौर्यादेः किन्तु शमादेः । शमादिश्च शमो दमस्तितिक्षा इत्येतत्त्रयम् । तस्य लोपः स्यात् । लोपो नाम तिरोभावः । तिरोभावश्च वासनासहितया अविद्यया अदर्शनम् । तच्च चित्तव्याक्षेपाद् भवति । तेन चित्तव्याक्षेप एव गुणलोप इत्यभिधीयते इति ॥ ४ ॥

**रोमाणि रोमकूपेषु तत्र स्युर्यदि तस्य वै ।**
**अपत्यभङ्गो विज्ञेयस्तत्पुत्राणां त्वधीरता ॥ ५ ॥**

अयमर्थः—तत्र रोमकूपेषु रोमाणि यदि स्युस्तर्ह्यपत्यभङ्गो विज्ञेयस्तत्पुत्रभङ्गो वा । सर्वथा हृदयतत्पृष्ठयो रोमकूपेषु रोमसम्भवः अपत्यविनाशहेतुः ॥ ५ ॥

किञ्च—

**तत्रैव यदि संश्लेषो रेखाद्वयसमुद्भवः ।**
**मृतिरेव भवेत् तस्य द्वात्रिंशद्वत्सरादधः ॥ ६ ॥**

अयमर्थः— तत्र हृदयतत्पृष्ठयो रेखाद्वयसमुद्भवः रेखाद्वयजन्यः कश्चित् संश्लेषो भवेत् तर्हि द्वात्रिंशद्वत्सरादर्वाङ् मृतिर्भवेत् ॥ ६ ॥

**किञ्च दीर्घतराणि स्यू रोमाणि पृथुलान्यपि ।**
**तर्हि तत्रैव मरणं यत्र कर्मणि सञ्चरेत् ॥ ७ ॥**

एषोऽर्थः—तत्र हृदयतत्पृष्ठयोः पृथुलानि दीर्घतराणि च रोमाणि चेत् स्युस्तर्हि तस्य पुंसो यत्र यदा कर्मसु प्रवृत्तिर्भवेत् निरन्तरं तत्तत् कर्म कुर्वन् भवति, स्वयं तत्र तदा मरणं भवति । ननु तत्रापि विशेषो न नियतो निर्धारित इति चेदत्र ब्रूमः । एतावन्मात्रस्यैवेदं लक्षणमिति ॥ ७ ॥

किञ्च—

**तत्र यद्यूर्ध्वशाखा स्यात् काचिद् रेखा सरस्वती ।**
**तयायं पण्डितः प्रोक्तः स्वकर्मनिरतश्च सः ॥ ८ ॥**

तत्रैव हृदयतत्पृष्ठयोर्यद्यूर्ध्वशाखा ऊर्ध्वशिखा काचिद् रेखा सम्भवेत् तर्हि सा सरस्वतीसंज्ञा । तया सोऽयं पुरुषः पण्डितः स्यात् स्वकर्मनिरतश्च स्वस्य ब्राह्मणादेः कर्मणि नित्याग्निहोत्रादौ सन्ध्योपासनादौ च निरतः तत्पर इति ॥ ८ ॥

एवं हृदयतत्पृष्ठयोर्लक्षणमुक्तम् । तद्गतरेखादिलक्षणं फलं च । सम्प्रत्युदरगतानां रेखाणां निम्नादिभागानां च लक्षणादि दर्शयति—

**उदरं तद् विदुः सर्वे यन्निम्नं स्वत एव तु ।**
**तत्पृष्ठभागः श्रद्धेयो मृदुत्वक् शुद्धधीर्भवेत् ॥ ९ ॥**

यत् स्वत एव निम्नं सर्वतस्तदुदरं विदुः । तत्पृष्ठभागश्च सः यो मृदुत्वक् । अत एव श्रद्धेयः सुभगः । एवम्भूतं यस्योदरं यस्य च तादृक् पृष्ठभागः स शुद्धधीर्भवेत् । धीशुद्धिस्तस्य सुतरां भवतीत्यर्थः ॥ ९ ॥

**रेखात्रयं समुल्लङ्घ्य रेखान्तरमनन्तरम् ।**
**दृश्येत यदि तस्य स्याद् रोगभूयस्त्वमञ्जसा ॥ १० ॥**

उदरगतानां वलीसंज्ञानां रेखाणां यत् त्रयं लोकसिद्धं तस्मादन्यद्व्यवधानेन रेखान्तरं यदि दृश्येत तर्ह्यञ्जसा रोगभूयस्त्वं स्यात् । आञ्जस्यं नाम विना कायक्लेशादिकारणं तत्समुद्भवः । भूयस्त्वं च सकलव्याधिसम्पर्कः ॥ १० ॥

**न्यूनता चेदलक्ष्मीवान् स्याच्चेदपि विरोधतः ।**
**लक्ष्मीर्यदि भवेत् तर्हि मलिनाध्रुवसङ्गतिः ॥ ११ ॥**

एषा योजना—रेखाणां न्यूनता चेत् स्यात् सर्वत्रावमतिः । अत्रापि रेखात्रयाद् न्यूनता चेत् स्यात् तर्ह्यलक्ष्मीवान् भवेत् । लक्ष्मीवतः पुरुषादन्यो भवेत् । यदि वा विरोधतः स्याच्चेदपि विरोधेन सह लक्ष्मीः स्याद् वा । तत्र यदि स्यात् तर्हि मलिना अध्रुवसङ्गतिश्च । अध्रुवा सङ्गतिः समुद्भवो यस्याः सा तथा । एतदुक्तं भवति—रेखात्रयात् न्यूनरेखता यदि भवति तर्ह्यलक्ष्मीः झटिति समुज्जृम्भते । तस्या विरोधतः विरोधेन लक्ष्मीः स्याच्चेत् तर्हि मलिना स्यात् अप्रबुद्धगतिश्च । ननु विरोधेन

भवनमविरोधेनालक्ष्मीभवनं चेदुभयं विरुध्यते । न । क्रमेण कालभेदेनाविरोधात् । यदि न्यूनता तर्ह्यविरोधेनालक्ष्मीरेव स्यात् । स्वतः विरोधेन लक्ष्मीर्यदि भवति, कालान्तरे तर्हि मलिनत्वादिदोषो भवेदिति ॥

तासां यदि च्छिद्रयोगः कृष्णं तस्य भवेद् ध्रुवम् ।
नो चेदेकाप्युदरगा तस्य लक्ष्मीर्विनश्यति ॥ १२ ॥

अस्यार्थः — तासामुदरगतरेखाणां छिद्रयोगो यदि भवेत्, छिद्रश्छेदः तद्योगः । तास्वन्यतमाया अपि रेखाया यदि क्वचिच्छेदः विच्छेदस्तर्हि तस्य कृष्णं भवेत् । कृष्णं नाम दोषमात्रं तद्योगः । सर्वासां छेदे तु का कथा । सर्वथा दोषो भवेदिति । यद्येकापि नो चेद् रेखा तर्हि सुतरामनर्थपात्रीभवेत् । सर्वथा दोषभयाज्जीवनं सन्दिग्धं लभते स पुमानिति ॥

क्वचित् प्रवर्धते सापि या रेखा मदजृम्भिणी ।
नाभेरूर्ध्वमुखी साक्षात् तया शान्तिं लभेत सः ॥ १३ ॥

अस्यार्थः — यस्य या नाभेरूर्ध्वमुखी नाभिमुखादूर्ध्वं गच्छन्ती काचिद् रेखा समुन्मिषति सा (मद्) जृम्भिणी नाम । सा वर्धते च क्रमेण वयसा सार्धं, क्षीयते च तथा तेन सार्धम् । तया स पुरुषः शान्तिं लभेत । शान्तिर्नाम शमः । स च कर्मानुसारेण ज्ञानलाभहेतुः कश्चिन्मनोविकारः । एतदुक्तं भवति — नाभेरूर्ध्वं गच्छन्ती हृदयानुप्रवेशार्थमिव या रेखा वर्धते क्षीयते च वयसा समं सा कालपरिपाकवशात् कर्मभिरुत्पद्यमानं शमं ज्ञानहेतुं सूचयतीति । १३ ॥

किञ्च —

नाभेरूर्ध्वं निम्नभागो योऽसन्निहिततद्विरुक् ।
स वृद्धिकृदिति प्रोक्तस्तेन वृद्धिं लभेत ना ॥ १४ ॥

यो नाभेरूर्ध्वं निम्नभागः स वृद्धिकृदिति प्रोक्तः । तेन तस्य पुरुषस्य वृद्धिर्भवति । वृद्धिर्नाम किंसम्बन्धिनीति चेद् ब्रूमः । लोकस्य हि नानाविधो बुद्धिवृत्तिभेदः । कस्यचिदर्थगतः, कस्यचित् कामगतः, कस्यचिन्मोक्षगतः, कस्यचिदौदासीन्यगतः, कस्यचित् तत्प्रच्युतिगतः । तत्र यस्य यदभिरुचिः यस्मै च प्रवृत्तिस्तद्वृद्धिरिति सिध्यति । नन्वनिष्टेऽपि प्रवृत्तिर्दृश्यते यथा राजाज्ञया स्वशूलपातादौ । एवं च सत्यनिष्टवृद्धिहेतुरयं

स्यात् । न तत्र तस्याः प्रवृत्त्याभासत्वात् । सम्यग्भूता हि प्रवृत्तिरत्र विवक्ष्यते । नेयं सम्यग्भूता । तस्मादज्ञानपूर्विकायाः प्रवृत्तेराभासरूपतया न विनियोजकत्वम् । सम्यग्भूतायास्तु विवेकमूलत्वादनाभासत्वात् तद्विषयतया प्रवृत्तिविषयस्य पुरुषार्थरूपत्वमिति सा सूच्यते तद्विद्भिर्वा इति नास्ति दोषः । किञ्च नाभेरुपरि निम्नभागाद्विरुक् विपरीतः पिटकरूप उन्नतो भागो यदि दृश्येत तर्हि पूर्वोक्तात् फलादपि द्विरुग् अन्यत् फलं भवेत् । किं तदन्यदिति चेद् वयमत्र ब्रूमः । वृद्धिर्हि पूर्वं फलत्वेनोक्ता । तद्विपरीतस्य फलस्य नाशरूपत्वं वक्तव्यम् । नाशश्च न मुख्यः । अतो मुख्यमश्रीकत्वफलं भवेदिति ॥ १४ ॥

किञ्च —

**गडुर्नाभेरुपरिगा श्रियं हन्ति निजात्मिकाम् ।**
**शाखा च तत्र यद्येका सुतरां हन्ति पूरुषम् ॥ १५ ॥**

अयमर्थः—नाभेरुपरिगता या गडुः सा श्रियं हन्ति । कीदृशीमिति चेदाह — निजात्मिकां स्वात्मस्वरूपिणीं निजजीवनहेतुभूताम् । वृत्तिकरीमिति यावत् । तत्र शाखा चेत् स्यादेका तर्हि सुतरां पूरुषं पुरुषं हन्ति । एतदुक्तं भवति — केवला गडुर्नाभेरूर्ध्वगता स्वजीवनकरीं वृत्तिं हन्ति । तत्र शाखा चैका सम्भवेत् तर्हि प्राणापहारिणी भवतीति । कियद् वयो गत्वा प्राणापहारित्वं तस्याः इति चेद् ब्रूमः । यदास्थ्नां सन्धिबन्धः शिथिलीभवति । शिथिलीभावश्चाङ्गत्रोटनाख्येन रवेण । तत्समुत्थेन निवेद्यते तदा तावद् वयो गत्वा चेति ॥ १५ ॥

**स्वच्छन्दं वर्तते तस्य लक्ष्मीर्जाया च रम्यधीः ।**
**चतुरङ्गुलमूर्ध्वं तु गत्वा यस्य गडुर्भवेत् ॥ १६ ॥**

अस्यार्थः — यस्य खलु पुंसश्चतुरङ्गुलं नाभेरूर्ध्वं गता गडुर्भवति, तस्य जाया स्वच्छन्दं वर्तते रम्यधीश्च भवति । जाया रम्यधीर्भवति । स्वयं च रम्यधीर्भवति, स्वस्य रम्या धीश्च भवति । ततश्च लक्ष्मीः स्वच्छन्दं वर्तते । लक्ष्मीरपि यथातथं तत्प्रियंकारिणी भवति इति ॥ १६ ॥

किञ्च—

**आवर्तैस्त्रिभिराश्लिष्टैः सुखी भवति नित्यदा ।**
**यदि तत्र त्रयच्छेदा दुःखी भवति नित्यदा ॥ १७ ॥**

अयं भावः — नाभिर्यदि त्रिभिरादिलष्टैः परस्परानुबद्धैः प्रथममेकः, ततोऽनन्तरमेकः, ततोऽनन्तरमेक इत्युत्तरोत्तरं दर्शनपथं गतैरावर्तैः, सु-सुखी भवति। यदि तत्र तेष्वावर्तेषु एकैकस्मिन्नयन्नयश्च्छेदा भवेयुस्तर्हि नित्यदा दुःखी भवति। किंकारणं तत् सुखं किंकारणं तद् दुःखमिति चेदत्र वदामः। यद्धि सुखकारणं सर्वसिद्धं यच्च दुःखकारणं तदुभयनि-मित्तमुभयम्॥ १७॥

किञ्च —

**सर्वो हृदयसम्बन्धी जर्जराकारभाग् यदि।**
**तर्हि दुःखं भवेद् भूरि न चेत् सुखमनुत्तरम्॥ १७॥**

अस्यार्थः — हृदयसम्बन्धी हृदयाश्रयः सर्वो विकारः जर्जराकार-भाग् यदि धूसराकारभाग् यदि भवेत् तर्हि दुःखं भूरि भवेत्। सर्वशब्दे-नैतदाह — नैकस्य विकारस्य विकारद्वयस्य विकारत्रयस्य वा जर्जराकार-तायामेतत् फलं भवेत्। सर्वविकारस्य तद्भावे सत्येव तत् फलं भवेदिति। दुःखं भूरीत्यत्रापि अयं भावः — यदि शरीरी भवति तर्हि यावच्छरीरनि-वृत्ति दुःखानुवृत्तिरस्त्येव। तथाहि — लोके सर्वस्यापि जन्तोः सुखप्रेप्सा जायते। अन्यथा हि प्रेप्सा नोपपद्यते। प्राप्ते प्रेप्सानुपपत्तेः। प्रेप्सा हि प्राप्तुमिच्छा। सा चाप्राप्ते विषये भवति। अतो नित्यमप्राप्तत्वमेव सु-खस्य। ननु नित्यमप्राप्तत्वं सुखस्यास्तु। नैतावता नित्यदुःखानुवृत्तिः शक्या कल्पयितुम्। सुखाभावस्यादुःखरूपत्वात्। दुःखस्य सुखाभावा-दन्यत्वाच्च। न। तथापि सुखाभावे दुःखस्य प्रसरः प्रवृत्तिर्वा शक्या क-ल्पयितुं जलाभावे दहनस्येव। तथाच प्रसरप्रवृत्त्योः सम्भवे दुःखप्रवृत्ति-र्यथाकथञ्चिद् भवेदेव। दुःखवासनाया नित्यसिद्धत्वात्। वासनायां च सत्यां तदुद्बोधहेतौ जाते प्रसरप्रवृत्त्योश्च सम्भवे दुःखं भवति कार्यरूपम्। तदुद्बोधहेतुर्नास्त्यत्रेति चेन्न। विषयेन्द्रियादेः सम्भवात्। अतः सुखाभावे सर्वदा दुःखं भवत्येव। सुखाभावश्च सर्वदा नित्यप्रेप्सान्यथानुपपत्त्या सिद्धः। ननु नित्यप्रेप्सान्यथानुपपत्त्या सुखस्य निरन्तरसत्त्वाभावो न साधयितुं शक्यते। प्रेप्सायाः प्राप्तेऽपि दर्शनात्। द्विविधा हि प्रेप्सा। काचिदप्राप्तविषया। यथा नगरस्थस्य देवदत्तस्य ग्रामविषया। काचित्

१. 'नेदमाह' ख. ङ पाठः.

प्राप्तविषया। यथा कण्ठगतविस्मृतचामीकरविषया। एवञ्च सति प्राप्तेऽपि सुखे प्रेप्सा सम्भवति। अप्राप्तभ्रमनिवृत्तिप्रयोजनवशात्। यथा खलु चैत्रः स्वकण्ठगतं चामीकरं भ्रान्त्या विस्मारितः सन् अहो मे कण्ठगतश्चामीकरो नष्टः। हा सन्तप्तोऽहम्। कथमहं लभेय इति स्वकण्ठगतमेव चामीकरं पुनः पुनः प्रेप्सते। एवं पुरुषः सर्वोऽपि सुखं प्रेप्सते नित्यप्राप्तमपि अप्राप्तभ्रमवशात्। अतः सुखप्रेप्सा न सुखाभावं सूचयति। तथाच नित्यं सुखाभावसिद्धौ सुतरां दुःखानुवृत्तिर्न शक्या कल्पयितुम्। नैतद् युक्तम्। सत्यं, प्राप्तेऽपि प्रेप्सा सम्भवति। तथाप्यप्राप्तभ्रमनिवृत्तीच्छालक्षणा प्रेप्सा युज्यते। सैव सुखप्रेप्सा। सापि नित्यं सुखाभावं भ्रान्त्या बोधयति। तथापि सुखाभावः सिद्धः कालत्रयसम्बन्धी प्राङ् मोक्षात्। तथाच दुःखानुवृत्तिः शक्या कल्पयितुम्। किञ्च सर्वदा लोके दुःखजिहासोपावर्तते। जिहासा च प्राप्त एव भवति। जिहासा हि हातुमिच्छा। हानं च प्राप्त एव भवति। अतः सर्वदा च जिहासोपावर्तते। अतः सर्वदा दुःखानुवृत्तिरस्त्येव। नन्वप्राप्तेऽपि जिहासा दृश्यते। यथा भ्रान्त्या स्वशरीरलग्नं फणिनं प्रति। अतः अप्राप्तेऽपि जिहासादर्शनादप्राप्तेऽपि दुःखे तत्सम्भवाच्च दुःखजिहासया नित्यदुःखानुवृत्तिः कल्पयितुं शक्यते। नैतदपि युक्तम्। अप्राप्तत्वे दुःखस्य प्राप्तभ्रमनिवृत्त्यर्थं येच्छा तस्या एव जिहासारूपत्वात्। तथाच तयैव दुःखानुवृत्तिः सिध्यति। एवं नित्यं दुःखमनुवर्तते। अतो नैतद् दुःखमात्रं फलम्। तद्व्यावृत्त्यर्थं विशिनष्टि — भूरीति। सर्वो विकारः जर्जराकारश्चेत् स्यात् तर्हि दुःखं भूरि भवेत्। न दुःखमात्रम्। तस्य नित्यानुवृत्तत्वात्। ननु नित्यं दुःखं नानुवर्तते। सुषुप्ते तदभावात्। न च सुषुप्ते सुखस्याप्यभावात् तत्र दुःखस्याप्राप्तत्वात् तत्राभावो न दोषायेति वाच्यम्। तत्र सुखस्य भावात्। तत एव च दुःखस्य प्राप्तकालत्वात्। ननु सुषुप्ते सुखमपि नास्त्येव। विषयेन्द्रियाभावात्। न तावत् सुषुप्ते विषयोऽस्ति। आत्माद्वैतस्यैव तत्र विद्यमानत्वात्। नापीन्द्रियाणि सुषुप्ते सन्ति। सकलेन्द्रियोपरतिरूपत्वात् सुषुप्तेः। जाग्रत्काले हि शब्दादिविषयेषु व्यापृतानामिन्द्रियाणां तद्व्यापारजनितश्रमापनोदनार्थं स्वकारणे परमात्मनि अन्तःकरणाविद्याद्वारेण लयः सुषुप्तिरिति हि तल्लक्षणं वदन्ति। सुखस्य च विषयेन्द्रियजन्यत्वनियमः। अत-

स्तत्र सुखाभाव एव । ननु न नियमः, विषयेन्द्रियसम्बन्धं विनापि दुःखाभावलक्षणस्य सुखस्य विद्यमानत्वात् । मोक्षलक्षणस्य सुखस्य च यद्यपि विद्यमानता तथापि तस्य सुखरूपत्वे वादिविप्रतिपत्तिसम्भवात् तन्नाङ्गीकुर्मः । तत्र च व्यभिचारं न वदामः । केवलं सुषुप्ते तं वदामः । अतः सुषुप्ते सुखस्या(स्य? प्य)भावाद् दुःखस्याप्राप्तकालत्वात् । तत्र भावो न दोषायेति चेन्न । सुषुप्ते सुखस्य भावाद् । यद्यपि विषयेन्द्रियजन्यं सुखं दृष्टं, विषयेन्द्रियाणि च सुषुप्ते न सन्ति । तथापि वैषयिकस्य सुखस्य विषयेन्द्रियजन्यत्वनियमः । अनित्यत्वात् । नित्यस्य पुनरात्मसुखस्य तदभावात् सुषुप्तेऽपि सम्भवोऽस्ति । किञ्च सुखमहमस्वाप्समित्युत्थितस्य परामर्शान्यथानुपपत्त्यापि सुषुप्ते सुखं कल्प्यते । तथाहि — परामर्शो नाम प्रत्यभिज्ञानात्मकमनुसन्धानम् । स च तद्रूपत्वादेव संस्कारमपेक्ष्य प्रवर्तते । संस्कारश्च पूर्वानुभवः । न च पूर्वमिन्द्रियादिजन्यः कश्चिदनुभवः सञ्जातः । अत आत्मरूपोऽनुभव एव सुखानुभवः । स च न बाधयितुं शक्यो युक्तिभिः । उक्तप्रकारेणार्थापत्तिप्रमाणसिद्धत्वात् । तथाच सुषुप्ते सुखसिद्धौ दुःखस्यापि प्राप्तकालत्वात् तदप्यस्त्येव तदा । ननु सुषुप्त आत्मसुखस्यैव सम्भवः । तदात्मनः स्वरूपमेव । न च दुःखमात्मनः स्वरूपम् । अनित्यत्वात् । अतो न तस्य तदा सम्भवः । न च विषयेन्द्रियादिजन्यं सम्भवति सुखवत् । तस्मात् तत्र दुःखस्य प्राप्तकालत्वान्नानुवृत्तिः शक्या कल्पयितुम् । नैतच्चतुरश्रम् । विषयेन्द्रियजन्यस्य दुःखस्य स्थूलरूपस्य तदाभावेऽपि सूक्ष्मरूपस्य दुःखस्य तदाप्यनुवृत्तिरस्त्येव । अन्यथा सुषुप्तिसुखस्य मोक्षरूपत्वप्रसङ्गात् दुःखानुषङ्गाभावेन निरतिशयसुखत्वात् । किञ्च सुषुप्तिसुखस्यात्मरूपत्वेऽपि दुःखानुषङ्गोऽस्त्येव । अन्यथा सुषुप्तिरेव मोक्षः स्यात् । न च तथा केषाञ्चिदभ्युपगमः । नापि कस्यचित् । तत् कस्य हेतोस्तत् । सुखस्य दुःखानुषङ्गादेव । कथं तत्र दुःखस्थितिरिति चेत् स्वकारणादिति ब्रूमः । स्वकारणं च संस्काररूपं तिष्ठति । अत एव हि उत्थितः सन् पुनः संसरति । ननु यदि कारणोद्भूतं सुषुप्ते दुःखं पूर्वकालवदस्ति तर्हि सुखमपि तथा स्यात् । किमित्यात्मस्वरूपता तस्याभ्युपगम्यते । उच्यते । बहुलत्वात् सुखस्य । बहुलसुखं चात्मरूपमेव तदा

---

१. 'स' क. पाठः.

सम्भवति । सुखकारणाभावात् । सूक्ष्मरूपं तु सुखं विषयेन्द्रियजन्यं तदापि कारणरूपेणानुवर्तत एव । तत् तु न व्यक्तं दुःखवत् । अन्यत् तु व्यक्तमेव । प्रकाशरूपात्मस्वरूपत्वात् । अतः स्वोपादानकारणानुवृत्तिद्वारेण वैषयिकं सुखं नित्यतयात्मरूपसुखं चेत्युभयमनुवर्तते सुषुप्ते । तथाच दुःखस्य सर्वथा प्राप्तकालत्वात् तदानुवृत्तिरस्ति । नन्वेवमपि मोक्षे दुःखप्रसङ्गात् त्वदुक्तमरमणीयम् । तथाहि — यद्यात्मरूपसुखसम्भवेन दुःखस्य प्राप्तकालतया सुषुप्ते दुःखानुवृत्तिः कल्प्य(ते) तर्हि मोक्षेऽपि तत्सम्भवेन तदनुवृत्तिः कल्प्येत । सत्यम् । अत एव हि मोक्षे वादिविप्रतिपत्तिदर्शनादित्यस्माभिरुक्तम् । वैषयिकस्यापि सुखस्य कारणानुवृत्तिद्वारेण सुषुप्तावनुवृत्तिरस्तीति च । अतो वैषयिकस्यापि सुखस्य सुषुप्तावनुवृत्तिस्तत्र दुःखं साधयति इत्येवं वैषयिकं सुखं दुःखं च सर्वदानुवर्तत इत्यङ्गीकारे न कोऽपि दोषः । नन्वेवमपि मूर्छायां तदभावः । स्वरूपसुखस्य वैषयिकसुखस्य च तत्राभावेनाप्राप्तकालत्वाद् दुःखस्य । नैतद् युक्तम् । सत्यं, स्वरूपसुखं मूर्च्छायां नास्त्येव। यदि स्यात् तर्हि अनुभूयेत । बहलतया परामृश्येत च प्रबोधानन्तरम् । न च परामृश्यते । अतो नानुभूयते । तथाच नास्त्येवेत्यत्र न काचिदाशङ्का । तथापि वैषयिकं सुखं कारणात्मना तत्रास्त्येव सूक्ष्मरूपम् । अतश्च नानुभूयते । न परामृश्यते च । विषयेन्द्रियाभावात् । ततश्च दुःखस्यापि प्राप्तकालतया मूर्छायामनुवृत्तिरस्ति । एवं सुखदुःखयोः सर्वदानुवृत्तिः । तथाच वैषयिकसुखाद् दुःखमात्रमप्यस्फुटं सर्वदानुवर्तते । तत्र कदाचित् स्वकारणोपचये सति सुखं प्रवर्धते, कदाचित् स्वकारणोपचये दुःखम् । नन्वस्त्वेवं तथापि सुखदुःखयोः सहानुवृत्तिरुक्ता न युक्ता वक्तुम् । विरोधात् सहावस्थान(प्य?)स्य तयोः न युक्तमेतत् । अनुभवे सति हि विरोधः प्रादुर्भवेत् । अनुभवप्रयुक्तत्वादत्र विरोधस्य । अनुभवप्रयुक्तत्वं चानुभवगतत्वात् । द्विविधो हि विरोधः सत्ताप्रयुक्तोऽनुभवप्रयुक्तश्च । तत्र सत्ताप्रयुक्तो यथा द्वयोर्द्रव्ययोस्तमःप्रकाशयोरेकाश्रयत्वप्रसङ्गे । प्रकाशप्रयुक्तो यथा एकाश्रययोर्ज्ञानाज्ञानयोर्धर्माधर्मयोर्वा । तत्र सर्वत्र स्वभावप्रयुक्तत्वं समानम् । तदेवं स्थिते एकात्मगतयोः सुखदुःखयोः स्वतो विरोधेऽपि तस्य प्रकाशप्रयुक्ततयैव स्फुटतायाः सम्भवात् । तस्याश्च कदाचित् स्वस्वकारणोपचय एवो-

भयोर्विद्यमानत्वात् न तयोः सहानुवृत्तिविरोधः। किञ्च क्वचिदुभयोः कारणोपचयसम्भवेन तयोः सहानुवृत्तिर्दृष्टा च लोके। अतोऽपि न दोषः। तस्मात् सुखमात्रस्य नित्यानुवृत्तित्वेन तस्य तल्लक्षणफलत्वाभावात् तद्व्यावर्तनार्थं भूरीति विशेषणं प्रयुक्तम्। भूरित्वं च सकलसुखतद्वासनातिरोधायकत्वं दुःखस्येति सिद्धम्। न चेदेवं लक्षणं तर्हि सुखमनुत्तरं भवेत्। अत्रापि पूर्वोक्ता योजना विशेषणविषयेऽनुसन्धेया ॥ १८ ॥

किञ्च —

**वलित्रयं यदि स्वच्छं पृष्ठमप्यनुवर्तते ।**
**नित्यसिद्धतया स्त्रीणां सौभाग्यं तत् प्रशस्यते ॥ १९ ॥**

यत् स्त्रीपुरुषयोः साधारणं वलित्रयं तद् यदि स्वच्छं निजवर्णोपेतं पृष्ठमपि नित्यसिद्धतया करणभूतया, वासनाकारेणेति यावत्, पृष्ठमप्यनुवर्तते अनुगच्छति, तर्हि स्त्रीणां तत् प्रसिद्धं सौभाग्यं स्यात्। किञ्च न केवलं भवनमात्रं, प्रशस्यते च। तत् प्रकर्षेण शस्यते इतस्ततस्तज्ज्ञैर्लोकैः शस्यमानं स्यादित्यर्थः ॥ १९ ॥

पुरुषपक्षे तु —

**श्रीशालिता भवेत् साक्षात् परतस्तु स्वयं स्थितिः ।**
**विशेषश्च भवेत् तत्र क्वचिद् गत्वा महत्त्वतः ॥ २० ॥**

अयमर्थः— यदि पुरुषाणां वलित्रयं भवेत् तत् पृष्ठगामि च, तर्हि श्रीशालिता भवेत्। न तन्मात्रं, किन्तु विशेषश्च भवेत्। को विशेष इति चेदाह— क्वचिद् गत्वा सा महती भवेत् कञ्चित् कालं गत्वा तस्य वृद्धिश्च भवेत्। तत्रैवं योजना— तत्र श्रीशालितायां विशेषश्च भवेत्। कुतः, क्वचिद् गत्वा महत्त्वतः। क्वचित् कालं गत्वा श्रियो महत्त्वसम्भवादित्यर्थः। एतत् साक्षात् फलम्। फलान्तरमप्यस्तीत्याह— परतस्तु स्वयं स्थितिरिति। परतः परेण कारणान्तरेण रेखारूपेण सम्बन्धे सति स्वयं स्थितिश्च भवति स्वयं स्वस्यात्मनः स्थितिः स्थैर्येणावस्थानम्, आयुर्भङ्गशङ्कादिनिमित्तं भयमुत्सृज्य निश्चलतयावस्थानमिति यावत् ॥ २० ॥

किञ्च —

**पार्श्वयोर्नाभिदेशस्य पाण्डिमा यदि वर्तते ।**
**तेनायुषो मध्यभागे लक्ष्मीभङ्गो ध्रुवं भवेत् ॥ २१ ॥**

---

१. 'ततया' क. ख. पाठः. २. 'ह—इति। क. ख. पाठः.

अस्यार्थः—नाभेः पार्श्वयोर्यदि पाण्डुर्वाकारो विकारो वर्तते क्वचिद् वा कश्चित्, तर्हि आयुर्लक्षणादिवशाद् यावदायुरवगतं तन्मध्यभागे लक्ष्मीभङ्गो भवेद् ध्रुवमेतत्। नात्र संशयकारणमस्तीति ॥ २१ ॥

**ऊर्ध्वाधोभागयोर्यर्हि ब्रह्महन्ता भवेन्नरः।**
**नारी तु भर्तृहन्त्री स्यादित्येषापि दृढा स्थितिः ॥ २२ ॥**

यदि नाभेरूर्ध्वाधोभागयोः पूर्वोक्तो विकारः क्वचिद् वा कश्चिद् भवेत्, तर्हि नरो ब्रह्महन्ता भवेत्। नारी चेद् भर्तृहन्त्री स्यात्। एषापि स्थितिर्दृढैव यथा पूर्वोक्ता तद्वत्। स्थितिशब्दोऽर्थसन्निवेशवाचकः। एषोऽप्यर्थसन्निवेशो दृढ इत्यर्थः। यदि वा स्थितिशब्दो नियमवाचकः। सर्वथाप्यविरुद्धमेतद् वचनम् ॥ २२ ॥

किञ्च—

**नाभेरधस्तात् पद्माभा रेखावृत्तिर्यदीक्ष्यते।**
**अचिराच्छ्रियमाप्नोति पुत्रसम्पदमप्यसौ[1] ॥ २३ ॥**

एषोऽर्थः—नाभेरधस्तात् तनोर्यः प्रदेशस्तत्र पद्माकारा यदि रेखावृत्तिः रेखावर्तनमीक्ष्येत, तर्ह्यसौ स्त्री वा पुमान् वा अचिराच्छ्रियमाप्नोति। श्रीशब्दः कान्तिविभूत्योः साधारणोऽत्र प्रयुक्तः। किञ्च न केवलमेतावन्मात्रं फलं किन्तु फलान्तरमपीत्याह—पुत्रसम्पदमपीति। पुत्रसम्पत् पुत्रसमृद्धिः, बहुपुत्रतेति यावत्। अत्र विचारः—किं फलद्वयं युगपद् भुज्यते अथवा (क्रमेण)। यदि (न?) युगपत् तन्न सम्भवति। भेदाभावप्रसङ्गात्। श्रीशब्दो ह्युभयसाधारण इत्युक्तम्। तथाच विभूतिरपि। श्रीशब्दवाच्यायां[2] पुत्रसम्पदश्च विभूत्यन्तर्भावः। अतो विभूतिफललाभ एव पुत्रसम्पदोऽपि लाभात् पृथक्फलत्वं तस्या न सिध्यति। यदि क्रमेण, तर्हि पृथक्फलत्वं सिध्येत्। तर्हि कालविभागो वाच्यः। स च नोक्त इत्यस्ति दोष इति पक्षद्वयेऽपि न साधुता गम्यते। अत्रोच्यते। युगपदिदं फलद्वयं भुज्यते। तत्र यद्यपि विभूत्यन्तर्भावः पुत्रसम्पदस्तथापि श्रीशब्देन कान्तिपरिग्रहस्यापि[3] विद्यमानत्वात् फलभेदोऽप्यस्त्येव। यदि वा, विभूतिपरिग्रहेऽपि दोषो नास्त्येव। विभूतिशब्देन द्रविणस्यैवाभिधानादिति सम्पत्सामान्यस्याभिधानम्। तर्हि

१. 'मित्यसौ' ख. पाठः. २. 'यां' ३. स्य ख. पाठः.

फलभेदाभावो भवेत् किञ्च । न च तथा । तस्मान्न दोषः । किञ्च क्रमपक्षेऽपि कालभेदाकथनाद् दोषो न भवति । कालभेदस्यार्थसिद्धत्वात् । तथाहि — प्रथमं तावच्छ्रीशब्दवाच्ये फलेऽनुभूते पश्चात् पुत्रसम्पद् भवतीति क्रमोऽस्त्येव । क्रमेण फलानुभवस्यापि सिद्धत्वात् क्रमाकथननिमित्तो दोषो न प्रादुर्भवति । यदि वा, कालविशेषोऽत्र विवक्षित एव । क इति चेदेकोनत्रिंशद्वत्सरपर्यन्तं श्रीलक्षणं फलम् । तत आरभ्यैकोनपञ्चाशद्वत्सरापर्यन्तमपरम् । तेनैतदुक्तं भवति — पुत्रसम्पत्कालेऽपि बहुपुत्रानुभवजनितः कोऽपि सम्मोह उच्यते । तथा च न कोऽपि विरोध उच्यते इति ॥ २३ ॥

**तत्पार्श्वसन्निधौ यर्हि कलधौताकृतिर्भवेत् ।**
**आकारः कलमाशाली प्रियस्तस्य स्फुटं प्रियः ॥ २४ ॥**

अस्यार्थः — नाभिपार्श्वयोर्यल्लक्षणमुक्तं तत्सन्निधौ कलधौताकारः कश्चिद् विकारो भवेत्, तर्हि कलमाशालीप्रियश्चोऽस्य प्रिया भवेयुः । स्फुटमेतन्नात्र विचारकारणमस्ति इति ॥ २४ ॥

अपरं च —

**पार्श्वयोरूरुमूलस्य प्राग्भागस्थितयोर्यदि ।**
**विकारः कोऽपि मनसि स्यादुन्मत्तता तथा ॥ २५ ॥**

अस्यार्थः— ऊरुमूलप्राग्भागस्थितयोर्नाभिपार्श्वयोर्यदि कोऽपि विकारः प्रादुर्भवेत् पिटकादिलक्षणः, तर्हि तथा तेन प्रकारेण मनस्युन्मत्तता स्यात्, मनस्युन्मत्ततालक्षणो विकारः स्यादित्यर्थः । ननूरूर्ध्वभागयोर्न नाभिपार्श्वभागता युक्ता कल्पयितुम् । मूलशब्दप्रयोगेणोरूर्ध्वभागस्य विशेषितत्वात् । नैष दोषः । पार्श्वशब्दस्य लक्षणया स्वसम्बन्धिप्रदेशवाचकत्वाभ्युपगमात् । ऊरुमूलभागशब्दस्य च तत्त्वाभ्युपगमात् । एवञ्चैतदुक्तं भवति — ऊरुमूलाच्चतुरङ्गुलमुपरि यः पिटकादिलक्षणो विकारस्तस्यैतत् फलम् । चतुरङ्गुलमुपरि गत्वा यः प्रदेशस्तस्य नाभिपार्श्वत्वमप्युपपद्यते इति न किञ्चिदवद्यम् ॥ २५ ॥

अपरं च —

**तत्पृष्ठभागे रेखा चेद् वर्तते संस्फुटाकृतिः ।**
**विरला नाम सा प्रोक्ता तस्य विश्वं वशो भवेत् ॥ २६ ॥**

---

१. 'न्मात्रत्र' घ. पाठः. २. 'र्वाल्लक्ष' घ. ङ. पाठः. ३. 'रजता' घ. पाठः

तत्पृष्ठभागे नाभिपृष्ठभागे संस्फुटाकृती रेखा वर्तते चेत्, तर्हि सा त्रिरला नाम प्रोक्ता । तया सर्वस्य विश्वं वशे भवेत् । वशे भवनं च न सम्यग्भूतं तद् विवक्षितं, प्रौढोक्तिमात्रत्वादेतद्वचनस्य, अपितु प्रद्वेषरहितता-मात्रम् । अन्यथा सर्वस्यापि सर्ववशे भवने सिद्धे न किञ्चित् फलान्तरमपेक्षितं स्यात् । अस्य लोकोत्तरफलत्वादिति द्रष्टव्यम् ॥ २६ ॥

एवं तावदर्वाङ्नाभिदेशादुपरि तस्मादर्वाग् जघनादुपरि च ये रेखादयः स्थिताः सूचनहेतवस्तेषां लक्षणादि दर्शितम् । अधुना भुजयोः स्थितानां तेषां तद् दर्शयति—

**बाहुमूले प्रविज्ञेया स्फुटा साध्वी समुन्नतिः ।**
**नीचता नीचतां यच्छेदिति साधारणी स्थितिः ॥ २७ ॥**

अयमर्थः—बाहुमूले कापि समुन्नतिः स्फुटाकारा साध्वी प्रविज्ञेया । नचिता निम्नता यदि तत्र भवेत्, तर्हि सा नीचतां यच्छेत् स्वाश्रये सूचयतीति यावत् । कस्मान्नीचतामिति चेद् वर्णव्यतिरिक्तात् सर्वस्मादिति ब्रूमः । एतदुक्तं भवति — बाहुमूले यदि कापि समुन्नतिः सम्भवेत् सा निजमाश्रयं(न) नीचतरं सूचयति प्रत्युत समुन्नतमेव सूचयति । सापि समुन्नतिर्बाहुमूलगता स्वाभाविकी नावमन्विष्यते(?) अपितु यापि कापि भवत्वौपाधिकी स्वाभाविकी वा । तत्र यदि स्त्रियामेषा[2] समुन्नतिर्भवेत्, सा च स्वाभाविकी, तर्हि राजमहिषी सा भूयात् विद्वन्महिषी वा । यदि पुरुषाणां, तर्हि स राजपुरुषो विद्वत्पुरुषो वा भवेत् । यदि वोभयत्रोभयं नो चेत् स्यात्, तर्हि निम्नतैव बाहुमूले सम्भावनीया । नो चेत् समुन्नत्या समुन्नतिः फलं भवेत् । ननु यद्येवं, किमिति तर्हि समुन्नतबाहुमूलानां स्त्रीणां पुरुषाणां चोक्तं फलं न दृश्यते, दर्शनेऽपि क्वचिद् दृश्यते न सर्वत्र । अतो नैतल्लक्षणमुक्तफलस्य । अत्रोच्यते । लक्षणमेवेदमुक्तफलस्य । कथम् । यदि स्वाभाविकी समुन्नतिस्तर्ह्येवोक्तं फलं स्यात् । नो चेत् तर्ह्यौपाधिकी समुन्नतिः । तथाच तदनुरूपा समुन्नतिरेव फलम् । तथाच राजमहिषीत्वादेर्न फलता युक्ता, न राजपुरुषत्वादेश्च, किं तर्हि, भूमिमात्रस्यैव फलत्वं युक्तम् । तच्च येन केनचिद् यत्किञ्चिद्विशेषादपि सिध्यति । अतो न दृश्यत इत्युक्तमयुक्तमेव । दर्शनस्य भिन्नाकारत्वात् । किञ्च सम्मतिरपि बहुधा

१. 'था सर्वव' घ. पाठः. २. 'स्त्रीणामे' ख. ङ पाठः. ३. 'षणाद्' ख, ग. पाठः.

सम्भवति। तद् यथा—यदि साक्षाद् राजमहिषी न भवति राजपुरुषो वा न भवति, तर्हि राजपुरुषमहिषी राज्ञः पुरुषो वा भवितुं युज्यते। एवमपि समुत्कर्षोऽवश्यं भवत्येव। एवं चैवमवधारणीयं — यथाकथञ्चिद् येन केनापि प्रकारेण यस्मात् कस्माचित् प्रायशः समुदायान्नोत्कर्षो भवत्येव यदि बाहुमूले समुन्नतिरिति। यद्येवमुन्नतिर्नास्ति तर्हि नीचतैव परिशिष्यते। तर्हि तदाश्रयस्य नीचतापि उक्तप्रतिकूलयुक्तिभिरनुसन्धेया। तथाहि दृश्यते लोके। निम्नबाहुमूलाः स्त्रियः पुरुषाश्च निभर्मदुर्गतदन्दह्यमानहृदया दृश्यन्ते, तच्च समुत्कर्षे सति न भवतीति। तस्मान्नीचबाहुमूलानामनुत्कर्ष एवेति स्थितम्। ननु बाहुमूलद्वयसाधारणमिदं लक्षणं किं वा नेति विवक्षायामाह — इति साधारणी स्थितिरिति। इति एवम्प्रकारा अस्माभिरुक्तेयं स्थितिः नियमः साधारणी उभयबाहुमूलसाधारणी स्त्रीपुरुषसाधारणी च, न पृथग् लक्षणमिति भावः॥ २७॥

सन्धिबन्धादूर्ध्वदेशे दक्षिणस्य त्रयो मताः।
विकाराः स्वर्णताम्रादिनिभास्तैर्वीरतोदिता॥ २८॥

एवं बाहुद्वयमूलस्य साधारणं लक्षणमुक्त्वा सम्प्रति विभागेन बाह्वोर्लक्षणं वक्तुकामः प्रथमं तावद् दक्षिणबाहुलक्षणमाह अनेन। दक्षिणस्य बाहोः सन्धिबन्धान्मध्यगतसन्धेरूर्ध्वदेशे त्रयो विकारा मताः। कीदृग्विधास्ते, तदाह— स्वर्णताम्रादिनिभा इति। एकः स्वर्णनिभः अपरस्ताम्रनिभः। अन्यो रजतनिभः। किमेतैः फलमित्याकाङ्क्षायामाह — तैरेतैर्वीरतोदिता (इति।) वीरता भवति फलम्। नन्वत्रैकेनैव विकारेणैतत् फलं भवति। किं वा विकाराणां त्रयेण। उच्यते। विकारत्रयेणैतत् फलं भवति। आभासतस्तु एकेनैव फलं भविष्यति। फलस्य चाभासत्वमसाकल्यम्। अत्र च नैते रेखारूपाः, किन्तु वर्णविकाररूपा एवेत्यवगन्तव्यम्॥ २८॥

इदानीं रेखारूपाणां लक्षणमाह—

रेखारूपास्त्रयः प्रोक्ता अविच्छेदेन सङ्गताः।
वृत्तमप्यनुरुन्धानास्तैः प्रशस्तो भवेन्नरः॥ २९॥

---

१. 'ज' ख, पाठः.

अयमर्थः— रेखारूपा अपि विकाराश्रयः अविच्छेदेन सङ्गताः अविच्छिन्नेनानुवृत्ताकारेण सङ्गताः, बाहुनेति शेषः। वृत्तमप्यनुरुन्धानाः वृत्तं वर्तुलाकारमनुरुन्धाना अनुसन्दधानाः प्रोक्ताः फलाविनाभावनियमात् तज्ज्ञैरादरेणोक्ताः। तत्फलं नियतं महत् सम्भवति। किं तदिति तदाह — तैः प्रशस्तो भवेन्नर इति। नरस्तैः प्रशस्तो भवेत्। अत्रापि रेखासाकल्येन फलसाकल्यं, रेखाणां न्यूनतायां फलन्यूनता चावश्यमनुसन्धेया। प्रशस्तिर्नाम केति चेदुच्यते। एतेषां त्रयाणां रेखाविकाराणां यद्येकत्र सम्भवस्तर्हि स पुरुषो यत्प्रवृत्तावभिनिविष्टो भवति स तत्प्रवृत्त्या प्रशस्तो भवति। तत्र तत्प्रवृत्त्या यत् फलं जायते तस्य फलस्य सिद्धिरत्र प्रशस्तिरभिधीयते, न प्रशस्तिमात्रम्। न तत्प्रवृत्त्या प्रवृत्तिनिश्चय इति॥

**नित्यसिद्धो गडुस्तत्र धनसम्पत्प्रवृत्तिकृत्।**
**अनित्यश्चेद् बहुवचो द्वित्वैकत्वे श्रियं यशः॥ ३०॥**

अस्यार्थः— तत्र बाहोः सन्धेरुपरिदेशे नित्यसिद्धो गडुर्गण्डः धनसम्पत्प्रवृत्तिकृत्। धनं द्रविणं काञ्चनादि सम्पद् धान्यजातं तयोरुभयोः प्रवृत्तिः सम्यगुत्पत्तिः। तां करोति। तदर्थं पुरुषं प्रवर्तयतीति यावत्। तेन तत्प्रवृत्तिं पुरुषस्य सूचयतीत्युक्तं भवति। स एव च गडुरनित्यश्चेत् तदा(स ? स्य) वचो बहु भवेत्। वाचालतां सूचयतीति यावत्। तत्रापि गडुद्वित्वं यदि भवेदेकत्वं वा पक्षद्वये फलमाह — द्वित्वैकत्वे श्रियं यशः इति। तत्र द्वित्वे श्रियं सूचयति एकत्वे यशः। तेन गडुद्वयं श्रियं सूचयति एको गडुर्यशश्चेत्युक्तं भवति। नन्वेकस्य गडोर्नित्यत्वे ऽनित्यत्वे च फलमुक्तम्। तत् कथम् एको गडुर्यशः सूचयतीति। किञ्च विरुद्धं चैतत् फलं धनसम्पत्प्रवृत्तिर्बहुवचस्त्वं च पूर्वमुक्तं, तद्विरुद्धं यश इति। नहि धनसम्पत्प्रवृत्तिर्बहुवचो वा यशो भवति फलं यश इति चेत् तन्न। फलस्य फलान्तरकल्पनायामनवस्थापातात्। अतो विरुद्धमिति। सत्यम्। तथापि भेदोऽस्त्येव। तथाहि — धनसम्पत्प्रवृत्तिर्बहुवचश्च किञ्चिद् यश आपादयत्येव। नचैतावता पृथग्वक्तव्यता। कारणान्तरेणापि यशस्सम्भवात्। कारणान्तरं विद्यादि सम्भवत्येवेति न

१. 'क्रमाका' ख. क. पाठः. २. 'स्वे व' ग. पाठः.

किञ्चिदनुपपन्नम्। न च द्वित्वे श्रीफलस्य एकत्वपक्षोक्तेन धनसम्पत् प्रवृ-
त्यादिफलेन गतार्थत्वं विरोधश्चेति वाच्यम्। अत्र श्रीशब्देन निरतिशयका-
न्तेरभिधानम्। अतोऽपि न तत्रापि दोषः समस्तीति॥ ३०॥

**ब्रह्महत्यां सूचयन्ति बिन्दवस्तत्र (काश्च? केच) न।**

**अङ्गनाः खेदयन्त्येव पुरुषापायशङ्कया॥ ३१॥**

अयमर्थः — (यदि?) तत्रैव पूर्वप्रकृते देशे यदि केचन बिन्द-
वस्ते स्युस्तर्हि पुरुषाणां ब्रह्महत्यां सूचयन्ति। स्त्रीणां चेत् ता अङ्गना-
शब्दाभिधेयाः पुरुषापायशङ्कया स्वभर्तृभूतानां पुरुषाणां बाधाशङ्कया खेद-
येयुः। तदानीं वा खेदयन्ति। खेदहेतुं सूचयन्तीति यावत्। ननु के ते
बिन्दवः, कीदृग्विधाश्च, कियत्प्रदेशगताश्च। अत्रोच्यते। ये तत्र सिक-
तापरिमाणाः स्वर्णाकारा बाहुसन्धिमूलयोरन्तरालदेशे अन्तर्बहिः सर्वतः
काञ्च(न)बीजानीव लोहमये पात्रे प्रक्षिप्तानि भासन्ते, ते बिन्दव एवं-
विधाश्च एतावद्देशप्रसृताश्च। नन्वेतद्दर्शने किं मानम्। शृणु. वदामः।
बुधवारे पञ्चम्यां वा तिथौ पौर्णमास्यां वा प्रातरेव कृतनियमः सन् प्रेक्षकः
स्वाभिमुखं स्वसविधमागतस्य प्रेक्ष्यस्य तटस्थैश्च सङ्गतस्य स्वयमासन-
मदत्त्वा स्वयमेव स्थितस्य पश्चादञ्जनतैलमध्वादिना द्रव्येण सप्तवारमभ्युक्ष्य
गजवालरोम्णा तत्पञ्चकेन वा संशोध्य सुवर्णनिकषेण तत्तत्त्वपरिज्ञानवद्
बिन्दुजालमप्यवगच्छतीत्ययमुपायक्रमः॥ ३१॥

किञ्च—

**नीलास्तु बिन्दवस्तत्र रक्तं भूरि ध्रुवस्थिति।**

**सूचयन्त्येव रामाणां पुरुषाणां तु तन्निजम्॥ ३२॥**

अस्यार्थः — तत्रैव यदि नीला बिन्दवः स्युस्तर्हि स्त्रीणां चेद् भूरि
ध्रुवस्थिति च ध्रुवा स्थितिर्यस्य तथाभूतम्। ध्रुवत्वं नामात्र रक्तस्य गर्भो-
त्पादनेऽप्यभीष्टपुरुषसङ्गमेऽपि अविस्रंसित्वम्। एवं स्त्रीणां फलम्।
पुरुषाणां तु यत् तत्र निजं शुक्लक्षणं वीर्यं तत् तथाविधं सूचयन्तीति॥

**रेखास्त्वधोगता चित्राः पुरुषाणां प्रियंवदाः।**

**स्त्रीणां तु शीलमेवैताः प्रथयन्ति न संशयः॥ ३३॥**

एषा योजना — तत्राधोगताः अधोमुखं गतं गमनं यासां तास्तथा-
भूताः पुरुषाणां चेत् प्रियंवदाः। यत् तत् तेषां प्रियं तच्छंसन्ति। स्त्रीणां

चेच्छीलमेव ताः प्रथयन्ति । शीलं प्रथयन्त्येव । अत्र न संशयकारणमस्ति । इदं तात्पर्यं — सन्धिदोर्मूलयोरन्यतराभिमुख्येन याः स्थिता रेखास्ताः पुरुषाणां प्रियंवदाः यदा यदा स्वयं विज्ञायन्ते, तदा तदा प्रियं सन्निहितं सूचयन्ति । यदि नित्यं स्वयं विज्ञायन्ते तर्हि नित्यं प्रियमपि सन्निहितं सूचयन्ति । यदि कदाचित् विज्ञायेरन् तर्हि कदाचित् सन्निहितं प्रियं सूचयेयुरित्येवमवधारणीयम् । स्त्रीपक्षेऽपि यदि कदाचिन्नित्यदा वा ता विज्ञायेरन्, तर्हि कदाचिन्नित्यदा वा शीलं शोभनमेव सूचयन्ति, न शीलमात्रं, शोभ(न)स्यैव शीलस्यैतल्लक्षणत्वात् । नच रेखाणामविज्ञप्तौ स्त्रीपुरुषपक्षयोर्व्यतिरेकोऽवगन्तव्य इति वाच्यम् । अन्वयमात्रस्यैव लक्षणत्वात् । नचान्वयमात्रलक्षणेनाप्युक्तेनान्वयरूपेण व्यतिरेकस्यापि सिद्धत्वात् व्यतिरेकोऽपि तेन लक्षणेन लक्षणीय इति युक्तं वक्तुम् । व्यतिरेकस्याप्यत्र भावान्तररूपत्वात् । यदि व्यतिरेकस्य व्यतिरेकमात्रता स्यात् तर्ह्यन्वयोक्त्या सिद्धिः स्यात् । तत्सिद्धौ च फलव्यतिरेकोऽपि सिध्येत् । नचैतत् सर्वमुपपद्यते व्यतिरेकस्य भावान्तरत्वपक्ष इति ।। ३३ ।।

एवं तावद् बाहुसन्धिमूलयोरन्तरालगतानां रेखादीनां लक्षणान्युक्त्वा सम्प्रति सन्धिबहिर्भागस्य तलादुपरिभागस्य सम्बन्धिनो ये विकारा रेखादिरूपास्तान् लक्षयति —

**स्फुरन्त्यः काश्चन सिराः सूचयन्त्येव तन्निजम् ।**
**सुखं दुःखं च यन्नित्यं निजोपक्षयकारणम् ।। ३४ ।।**

अस्यार्थः — सन्धिपश्चाद्भागे तलादर्वाक् स्थिते काश्चन सिराः स्फुरेयुः, तास्तन्निजं सुखं दुःखं च नित्यं सूचयेयुः । यदुभयं निजोपक्षयकारणं निजस्यात्मीयस्य उपक्षयस्य अपक्षयस्य कारणम् । निजे हि सुखदुःखे जन्तोः कर्माधीनतया जन्मनः । पुण्यपापात्मकं हि विशिष्टं कर्म जन्तूनां जन्म प्रयोजयति । पुण्यपापे च निरन्तरं स्वस्वकार्यभूते सुखदुःखे प्रयोजयतः । अतश्च यावच्छरीरपातं शरीरकारणभूतयोः पुण्यपापयोर्विद्यमानत्वात् तत्कार्यभूतयोः सुखदुःखयोरपि यावच्छरीरपातमवस्थितिरस्त्येवेति निजत्वं सुखदुःखयोः । नचैवं सति नित्यं सुखदुःखे सूचयन्तीत्येतदयुक्तमिति वाच्यम् । स्वतः सुखदुःखयोर्नित्यत्वेऽपि अभिव्यक्त्यनभिव्यक्तिभ्यामनित्यत्वोपपत्तेः । एवं च सति निजं यत् सुखं दुःखं च तन्नित्यं सूचयन्ती-

त्युक्तं युक्तमेव। नित्यं तदभिव्यक्तिं सूचयन्तीत्यस्यैवार्थस्य लाभात्। अस्त्वेवं, तथापि निर्जोपक्षयकारणत्वं कथं सुखदुःखयोः। नहि सुखदुःखाभ्यामुभाभ्यामन्येन वा कश्चित् क्वचिदपक्षयो दृश्यते। यदि दुःखेनापक्षयो दृश्यते, तथापि न सुखेनापक्षयः क्वचिद् दृश्यते। सुखस्य वृद्धिहेतुत्वात्। सुखितो हि परिपुष्टो दृश्यते। तस्मान्निर्जोपक्षयकारणमित्युक्तमयुक्तम्। अत्रोच्यते। सुखं हि वैषयिकस्य। तत एव च जन्यस्य दुःखानुषङ्गोऽस्त्येव। अनित्यताभयं च तत्र स्यात्। अतस्ताभ्यामुभाभ्यां धीपथं गताभ्यां सुखाभिनिवेशवशाच्च निरन्तरं चिन्त्यमानाभ्यां निर्मृष्टनिखिलविद्यादिदुःखजातात्मनानुबद्धमित्र शरीरमपक्षीयेत। तस्मादपक्षयकारणमिति युक्तमिति भावः॥ ३४॥

**सिरा मग्नाः कथञ्चित् स्युः सुखायैव स्फुटं तदा।**
**मग्नोन्मग्नास्तथैवायुः क्षपयन्ति न संशयः॥ ३५॥**

अस्यार्थः — ता एव रेखा मग्नाश्चेत् सुखायैव भवन्ति, सुखसूचनायैव भवन्तीत्यर्थः। मग्नतायां द्वयी गतिः। तत्र कथञ्चिन्मग्नतायां सुखायैव स्युः। स्फुटमग्नतायां तु सुखाय च स्युर्दुःखाय चेति योज्यम्। मग्नोन्मग्नता तु अत्यन्तमयुक्तेत्याह — मग्नोन्मग्ना इति। तथैव मग्नोन्मग्ना इत्येकः पक्षः। तत्र तथाविधा रेखाः सिरालक्षणा आयुः क्षपयन्ति आयुःक्षयं सन्निधिवर्तिनं सूचयन्ति, नात्र संशयकारणमस्तीति। ननु विरुद्धं चेल्लक्षणान्तरं स्यात्, का तत्र सम्भावना। उच्यते। उत्सर्गापवादन्यायस्तत्र स्यात्। यदि वा, प्रबलस्य बाधकत्वं दुर्बलस्य च बाध्यत्वमिति मात्स्यन्याय इति न किञ्चिदनुपपन्नम्॥ ३५॥

किञ्च —

**मुखे सिराः स्फुटाः साक्षान्नित्यमायुःक्षयं वदेत्।**
**अस्फुटाश्चेन्महत् कर्म लभते नात्र संशयः॥ ३६॥**

यदि मुखे सिरा अतिस्फुटाः अविच्छिन्नाश्च, तर्हि[2] नित्यं नित्यस्थितमबाध्यमिति यावत्, प्रमाणान्तरेणेति शेषः। प्रमाणान्तरं च रेखादि। अस्फुटाश्चेन्महत् कर्म लभते तद्वान् पुरुष इत्यर्थः। नित्यशः महति कर्मणि

---

१. 'न्यतमेन' ख. घ. ङ. पाठः.  २. 'र्ति' ङ. पाठः.

प्रवृत्तिः स्यादिति भावः । नात्र संशयकारणमस्ति । सिराशब्देन रेखाश्चोच्यन्ते । मुखशब्देनापि चिबुकप्रदेशादि । तत्स्थानं ललाटं च? टं च) ॥ ३६ ॥

**सिराबन्धः स्फुटः स्याच्चेच्चिबुके वातिको भवेत् ।**

अस्यार्थः — यदि चिबुके स्फुटः सिराबन्धो भवेत् सिराबन्धः सिराग्रन्थिः, तर्हि स वातिको भवेत् । अतिक्लिष्टवातप्रधान इत्यर्थः । अत्रेदं रहस्यं — न प्रत्यक्षेण ज्ञातुं शक्यते सिराग्रन्थिः, किन्तु अङ्गुल्या चिबुकाधःप्रदेशे कठिनं स्पृश्यमाने विशेषतोऽवगम्येत, न चक्षुषा निरीक्ष्यमाणे सामान्यतोऽपि । तस्मादङ्गुल्या स्पर्शनं कृत्वा स्पर्शेन पश्येदिति ॥

**गण्डे गडुः स्पर्शगम्यः स्वर्गतिं साधु संवदेत् ॥ ३७ ॥**

यः पुनश्चक्षुषा दृश्यो गण्डगडुः सोऽपि स्पर्शगम्यः स्वर्गतिं संवदेत् साधु असंशयमित्यर्थः ॥ ३७ ॥

**गलगण्डः पृथुद्रोहे नात्र संशयकारणम् ।**

पृथुद्रोहो नाम गलगतः कश्चिद् वर्णविशेषः । स च स्वकरतलपरिमाणः वर्णद्वयवांश्च । तन्निमित्तं गलगण्डो भवति । गलगण्डो गलपिटकः ॥

**गले स्फुटाः सिराः स्युश्चेत् फलमेतद्विनिश्चयेत् ॥ ३८ ॥**

किञ्च, एतत्फलविनिश्चये कारणान्तरमस्ति । गले स्फुटाः सिराः स्युश्चेद् एतत्फलं विनिश्चयेदिति ॥ ३८ ॥

**वक्षःस्थले तथा चेत् स्युर्न[1] स्यादिति विनिश्चयः ।**

तथा वक्षःस्थले स्फुटाः सिराः स्युश्चेत् तर्हि न स्याद् गलगण्डः । वक्षःस्थले स्फुटसिराबन्धस्य मुख्यत्वात् । 'कठिनं वक्षः पौरुषमि'ति हि सूत्रम् । काठिन्यं च स्फुटरेखाबन्धाद् भवति इति ॥

**स्तनयोः स्फुटतद्भावे भर्तृस्त्रीसङ्गतिर्नहि ॥ ३९ ॥**

एषा योजना — स्तनयोः स्फुटाः सिराश्चेत् स्युस्तर्हि स्त्रीणां चेद् भर्तृसङ्गतिर्नहि, पुरुषाणां चेत् स्त्रीसङ्गतिर्न । सङ्गतिः सम्भोगः, सम्पूर्णो भोग इत्यर्थः ॥ ३९ ॥

---

१. 'सिराः स्फुटाश्चेत् स्युः फ' ङ. पाठः.

**तथाविधाः स्युरुदरे समूलं नाशमाप्नुयात् ।**

उदरे तथाविधाः स्फुटाः सिराश्चेत् स्युः तर्हि समूलं नाशम् । मूलशब्देन स्वपुत्रकलत्राद्यभिधीयते । तन्नाशेन सह नाशमाप्नुयात् आप्नोतीत्यर्थः ॥

**कटिबन्धे तथा चेत् स्युः पुत्राद्या नाशमाप्नुयुः ॥४०॥**

कटिबन्धः काञ्चीपदम् । तत्र यदि तथाविधाः सिराः स्युस्तर्हि पुत्राद्या नाशमाप्नुयुः ॥ ४० ॥

**जघने प्राणविध्वंसः**

अस्यार्थः — प्राणः प्राणनाथा प्राणशब्देनोपचाराद् , भार्याविध्वंस इत्यर्थः ॥

**लिङ्गे मैथुनसङ्गतिः ।**

लिङ्गे चेत् प्रतिदिनं मैथुनलाभः । किञ्च चित्रिणी नाम या नायिका तत्प्रियत्वं च । अतोऽपि नित्यमैथुनलाभः इति ॥

**पायौ शरीरविध्वंसः कफव्याधिप्रपीडनात् ॥ ४१ ॥**

कफव्याधिप्रपीडनाद्धेतोः शरीरविध्वंसो भवेदिति । श्लेष्मणः पाय्वा निस्सरणं च ॥ ४१ ॥

**पृष्ठे चेत् कफविध्वंसः सर्वप्राणिविनाशकः ।**

पृष्ठे चेत् स्युस्तथाभूताः सिराः, तर्हि कफविध्वंसो भवेत् । कफेन विध्वंसः । सर्वप्राणिसमाश्रयश्च ॥

उपरिभागे पृष्ठस्योक्तं, मध्यमे त्वाह —

**ततोऽधस्तात् पितुर्व्याधिः सन्तापश्च प्रिये जने ॥४२॥**[1]

ऊर्ध्वभागादधस्ताच्चेत् तथाभूताः सिरास्तर्हि (पितुर्व्याधिः) कलत्रजने[1] च नाशो भवेत् , अनाश्रेत्यर्थः ॥ ४२ ॥

**ततोऽधस्ताद् वातरोगः**

ततोऽधस्ताच्चेत् स्युस्तर्हि वातरोगः । महती वातपीडा स्यात् ॥

**कृत्रिमं सुरतं तथा ।**

इति फलवचनम् ॥

---

१. 'ने प्रियमात्रजने' ख, ङ. पाठः.

